# संस्कृतकोश.

त्रिकांडशेष, मेदिनी, हारावली, एकाक्षरी,

हें

## कोशचतुष्टय

काशिनाथवासुदेवखांडेकर

यांणी

लोककल्याणार्थ

शुद्ध करून

स्वतःचा चंद्रप्रकाश

छापखान्यांत

छापिलें.

मुंबई.

मिती आषाढ शुद्ध ७

शके १७८८

सन १८६६

श्रीगणेशायनमः॥ ॥अथत्रिकांडशेषकोशःप्रारभ्यते॥ ॥जयं
तिसंनःकुशलंप्रजानांनयोमुनींद्रायस्कराःस्मृताःस्थ॥स्कतासिवा
ग्देविदयस्वमातर्विधेहिविघ्नाधिपमंगलानि॥१॥अलौकिकत्वाद
मरःस्वकोशेनयानिनामानिसमुल्लिलेख॥विलोक्यतेरप्यधुनाप्रचा
रमयंप्रयत्नःपुरुषोत्तमस्य॥२॥वर्गक्रमस्तथानामलिंगयोस्तूपदेश
ता॥परिभाषादिकंसर्वमत्राप्यमरकोशवत्॥३॥स्वर्लोकोदेवलोकःस्या
द्वरोहःफलोदयः॥मंदरःसैरिभःशक्रभवनंखर्वदिवंनभः॥४॥स्वाहा
भुजस्तुवस्कलाःपूजिताश्चचिरायुषः॥शौभानिलिंपाध्वषदःस्वर्गिण
श्चनभःसदः॥५॥ऋनामात्वदितिर्देवमातास्यादथपूर्वजाः॥पितरश्चं
द्रगोलस्थान्यस्तशस्त्राःस्वधाभुजः॥६॥कव्यवालोर्दयस्तेचदैत्यास्तुप्र
घसाःखराः॥क्रतुद्विषश्चेष्टिमुषोदैत्यमातादितिर्दनुः॥७॥बुद्धोकनिष्ठ
गमहामुनिधर्मचक्रागारशानित्रिशरणाःखसमोदशार्हः॥तार्पीगुणा
करमहासुखवज्रिणश्चमैत्रीबलासमजितारिसमंतभद्राः॥८॥महाबो
धिर्धर्मधातुःश्वेतकेतुर्जिनःखजित्॥त्रिमूर्तिर्दशभूमीशःपंचज्ञानो
बहुस्समः॥९॥संबुद्धःकरुणाकूर्चःसर्वदर्शीमहाबलः॥विश्वबोधोधर्म
कायःसंगुप्तोऽर्हन्स्तुनिश्चितः॥१०॥व्योमासोद्वादशाख्यश्चवीतरागःसु
भाषितः॥सर्वार्थसिद्धस्तुमहाश्रमणःकुलिशासनः॥११॥गोपेशश्चा
थास्ययशोधरेयोबाहुलःसुतः॥देवदत्तोऽनुजोथस्युःश्रावकाःशिष्यसं
ज्ञिनः॥१२॥प्रत्येकबुद्धाःखड्गास्युःसुदांताश्चैकचारिणः॥स्वयंभुवोथमा
रीचीत्रिमुखावज्रकालिका॥१३॥विकटावज्रवाराहीगौरीपोत्रिर
थाचसा॥लोकनाथस्तुलोकेशःसरोजीगुणसागरः॥१४॥ ॥

---

स्वर्लोकादिदशस्वर्गस्य

स्वाहाभुगादिनवदेवानां५ ऋनामादित्रीणिअदित्याः४ पूर्वजादिपंचपितॄणां६कव्य
वालेत्येकंपितृभेदस्य दैत्यादिपंच दैत्यमातादित्रीणि७बुद्धादिसप्तविंशत्८९१०
सर्वार्थसिद्धादिचत्वारिशाक्यमुनेः११ यशोधरेयादिद्वेशाक्यसुतस्य एकंशाक्यभ्रा
तुःशिष्याणामेकं१२मारीचादिसप्तमायादेव्याः१३लोकनाथादिचत्वारिबुद्धभेद
स्य१४

लोकेश्वरःकृपाद्वैतःसुधावर्षीहलाहलः॥सुखावतीश्वरःकन्यारामोऽसि
ताम्रशेखरः॥१५॥चिंतामणिःपद्मपाणिर्बहुरूपःखसर्पणः॥अनीचद्
र्शीकारंडव्यूहःपोतलकप्रियः॥१६॥जटाधरोमहावीर्योवज्रसूर्योऽवलो
कितः॥तारामहाश्रीरोंकारास्वाहाश्रीश्चमनोरमा॥१७॥तारिणीचजया
ऽनंताशिवालोकेश्वरात्मजा॥खदूरवासिनीभद्रावैश्यानीलसरस्वती॥१८
शंखिनीचमहातारावसुधाराधनंददा॥त्रिलोचनालोचनौस्यान्मणि
भद्रस्तुजंभलः॥१९॥पूर्वयक्षोजलेंद्रोथमंजुश्रीर्ज्ञानदर्पणः॥मंजुभद्रो
मंजुघोषःकुमारोष्टारचक्रवान्॥२०॥स्थिरचक्रोवज्रधरःप्रज्ञाकायश्च
वादिराट्॥नीलोत्पलीमहाराजोनीलःशार्दूलवाहनः॥२१॥धियांपतिः
पूर्वजिनःखड्गीदंडीविभूषणः॥बालव्रतःपंचचीरःसिंहकेलिःशिखाधरः
॥२२॥वागीश्वरोथहेरंबोहेरुकश्चक्रसंवरः॥देवोवज्रकपालीचनिशुं
भीशशिशेखरः॥२३॥वज्रटीकोऽथमैत्रेयोयुवराजोजितश्चसः॥चीव
रीश्रमणोभिक्षुर्वल्यश्चैत्रोथचेलुकः॥२४॥श्रामणेरःप्रव्रजितोमहापा
सकगोमिनौ॥अथहंसरथोब्रह्माविरिंचोष्टश्रवाःसनत्॥२५॥कंजः
प्राणश्चवेदीशावेदगर्भपुराणगुः॥अब्जजोविश्वरेताश्चकमलःप्रपि
तामहः॥२६॥नाभिजन्माशतधृतिर्ब्राह्मीतुब्रह्मकन्यका॥वाग्देवी
शारदाशुक्लामहाश्वेतासरस्वती॥२७॥अथहरिशतबिंदुश्रीकरश्री
वराहाजितपरपुरुषश्चागर्भषाड्गुंहनंताः॥नरकजिद्धृतधामाके
शवोजन्मकीलःक्रतुपुरुषनृसिंहश्चनथजन्हुश्चदेवाः॥२८॥कोकः
पुराणपुरुषोनलिनेशयश्चवासुर्नारायणपुनर्वसुविश्वरूपाः॥अंकःश्रीनि
वासधरणीधरवामनैकशृंगाश्चवृष्णिवृषशत्रुदशावताराः॥२९॥

---

लोकेश्वराद्येकोनविंशतिस्तस्यैव १५।१६ तारादीन्येकविंशतिः १७।१८ मणिभद्रादि
चत्वारि पूर्वयक्षस्य १९ मंजुश्रीत्यादि पंचविंशतिः पूर्वजिनस्य २०।२१।२२ हेरंबाद्य.
श्चौवज्रटीकस्य २३ मैत्रेयादित्रीणि भाविबुद्धस्य चीवर्यादि पंच बुद्धभिक्षु
कस्य चेलुकादि पंचभिक्षुशिष्यस्य २४ हंसरथादि सप्तदश ब्रह्मणः २५
२६ ब्राह्म्यादि सप्त सरस्वत्याः २७ हर्यादीनि षट्षष्टिर्विष्णोः २८।२९ ५

सोमगर्भादि देवादि वराहस्वर्णबिंदवः॥ गदाग्रजोमुंजकेशीसदायो
गीसनातनः॥३०॥ रंतिदेवशिवकीर्तनोत्रिपात्सोमसिंधुरधिराहुमूर्द्ध
भित्॥ कालनेमियवनारिपांडवाभीलसिंधुवृषकृष्णकेशिनः॥३१॥ हे
मशंखःशतावर्त्तीमनुसात्वतवारिशाः॥ वर्धमानःशतानंदोजगन्नाथः
सुयासुनः॥३२॥ पूतनाधेनुकारिष्टकेशिचाणूरसूदनः॥ भूकश्यपस्त्व
स्यपितादुंदुक्षित्यदितिःप्रसूः॥३३॥ स्यंदनस्तुशतानंदःसारथिश्चास्यदा
रुकः॥ तुरंगाःशैब्यसुग्रीवमेघपुष्पबलाहकाः॥३४॥ ध्वजोभुजंगहामं
त्रीपवनव्याधिरुद्धवः॥ शैनेयस्तुशिनेर्नप्तायुयुधानश्चसात्यकिः॥३५
बलभद्रस्तुहालःस्यात्सौनंदीहलतालभृत्॥ संवर्त्तकोगुप्तचरोरुक्मिदा
र्यकुंडलः॥३६॥ मधुप्रियोथप्रद्युम्नोजराभीरुश्शमांतकः॥ प्रसूनास
मपंचेषुःकंजनोमधुसारथिः॥३७॥ रागरज्जुःकलाकेलिमधुदीपरवीप
वः॥ इक्षुकेतुर्मकरांकःसंकल्पभवोगजश्वरूपास्त्रः॥ रणरणकोरतिरम
णःसंसारगुरुर्मनोजन्मा॥३८॥ कौस्त्रिश्चास्यप्रियारागलताकेलिकला
वती॥ सेःकेनतीचास्यबाणामोहनोन्मादनेस्तथा॥३९॥ संतापनःशोष
णश्चनिश्चेष्टाकरणोऽपिच॥ सुतोऽनिरुद्धःस्याद्विश्वकेतुःप्रीतिनृपःस्कं
तः॥४०॥ श्रीवत्सश्रीचलासामारमाजलधिजेंदिरा॥ मणिःस्यमंतको
हस्तेविष्णुरुरसिकौस्तुभः॥४१॥ तार्क्ष्यःशिलोकाःकामायुररुणावरज
श्विरात्॥ पक्षिसिंहउन्नतीशोवज्रतुंडःस्कथाहरः॥४२॥ स्वर्णपक्षस्तु
सुरवसूःशाल्मलीभुजगाशनः॥ शंभुर्भगालीकपिशांजनश्चहीरःकर
सुर्भेरुरिहार्णो॥ पुरारिपंचाननभैरवाट्टहासप्रहासाश्चरवकुंतलश्च ४३

३०।३१।३२ द्वेविष्णोःपितुःएकंविष्णोःमातुः ३३ रथस्यैकं सारथेरेकं शैव्यादिचत्वा
रिरथतुरगाणांपृथगेकैकस्य ३४ ध्वजस्यैकं पवनव्याध्यादिद्वेमंत्रिणःशैनेया
दिचत्वारिसात्यकेः ३५ बलभद्रादिदशबलदेवस्य ३६ प्रद्युम्नाद्येकविंशतिः
कामदेवस्य ३७।३८ रागलतादिचत्वारिरतेः मोहनादिपंचकामबाणानां
पृथगेकैकस्यएकैकं ३९ अनिरुद्धादित्रीणिकामसुतस्य श्र्याद्यष्टलक्ष्म्याः ४०
विष्णोर्हस्तमणेरेकंउरोमणेरेकं ४१ तार्क्ष्यादिचतुर्दश ४२।४३॥ 

कंठेकालजयंतगुह्यगुरवोजोटिंगगोपालकोपिंगाक्षःकठमर्दैवत
जटाटंकाव्ययाकूटकृत्॥चंद्रापीडमहानटोचशमिरोहःशैलधन्वाज
टाचीरोऽथर्वणनंदिवर्धनगुडाकेशोग्रकालंजराः॥४४॥मिहिराणोजग
द्योनिष्टंकटीकोऽक्षवाहनः॥कूक्करोवरदःस्वसप्रसादोद्भुतध्वनः ४५
ऊःस्थाणुःशिपिविष्टश्चमःकोलोधर्मवाहनः॥विरूपाविषमत्र्यक्षःसंध्या
नाडीवृषांचनः॥४६॥एकपाङ्गोतिकोभृङ्गोऽर्ध्वरेतःपांशुचंदनाः॥अस्थि
मालीशिवेश्वास्यखट्वांगस्तस्कंदघुणोः॥४७॥अजगवोजगावेश्चवृषो
भृंगीरिटिस्त्वसौ॥भृंगरीटःशलोभृंगीनाडीदेहोस्थिविग्रहः॥४८॥महा
कालोमहाभीभोमहाकायोवृषाणकः॥द्वाःस्थस्तुनंदीशालंकायनस्तां
डवतालिकः॥४९॥स्यान्नंदिकेश्वरोऽथार्याहिंडीशिखरवासिनी॥शक्तिः
सिंहरथागोलासिनीबालीवृषहूता॥५०॥सोःकृष्णापिंगलालंबाशैलेयी
गणनायिका॥वाराहिकेकानंशाचशिवदूतीयमस्वसा॥५१॥कोट्टवी
बाभ्रवीकैटभीकेटभायादवीकर्बुरीत्वेश्वरीचेश्वरा॥भ्रामरीदक्षक-
न्याचबर्हिध्वजानंदपुत्रीचमारीचकालंजरी॥५२॥गौतमीतामसीष
ष्ठीजयंतीशूलधृक्सती॥सिंहस्तस्यामनस्तालःसख्योस्तुविजयाज
या॥५३॥वज्रतुंडःकरिमुखःपृश्निशृंगोगणाग्रणीः॥त्रिधातुरेकदंतश्च
द्विदेहोमूषिकाचनः॥५४॥विघ्नहाराकुमारस्तुस्वामीद्वादशलोचनः॥
बालचर्यःसिद्धसेनःकृकवाकुध्वजश्चसः॥५५॥देवराजस्तुकःकौशी
कोसन्महाबाहुदनेयदाल्मीवराणोद्रिभित्॥ वज्रपाणिर्महेंद्रःस्क
रग्रामणीर्यामनेमिर्वृषानाकनाथोहरिः॥५६॥ ॥६॥ ॥

---

शंभ्वादिचतुःषष्टिःशिवस्य४४।४५।४६शिवखट्वांगस्यैकं४७द्वेशिवधनुषःवृ
षादिद्वेशिववृषभस्य भृंगरीटादीनिषट्भृंगिणः४८महाकालादीनिचत्वारि नंद्या
दिचत्वारि४९शिवद्वारस्थस्यआर्यादीनिसप्तत्रिंशत् पार्वत्याः५०।५१।५२।५३
पार्वतीसिंहस्यैकं पार्वतीसख्योः पृथक् द्वे विजयादीनि ५४ वज्रतुंडादीनि
नवगणेशस्य५५कुमारादीनिषट्कार्तिकेयस्य५६देवरादीनिषट्विंशतिरिंद्र-

प्राचीनबर्हिः खदिरः कपिलाश्वोवरक्रतुः॥ प्राचीपतिस्तपःस्तंकःपुलो मारिश्वमाहिरः॥५७॥ पूतनाषौटूप्रिया त्वस्य चारुधाराशतावरी॥ शची ऋतादेवसेनामातलिस्त्वहयंकषः॥५८॥ उच्चैःश्रवाःश्वेतहयो वृषणश्वो मरावती॥ वृषभासास्करपुरीवनमैंद्रं वृषणवस्क॥५९॥ नंदनं कंदसारं स्वा न्मिश्रकावणमित्यपि॥ हस्तिमल्लश्चतुर्दंतोभद्ररेणुर्मदावरः॥६०॥ श्वेत द्वीपःक्रदामाथ वज्रोऽस्त्री गिरिकंटकः॥ वज्राशनिर्भिदुर्भिद्रोजम्भारिश्चि दशायुधम्॥६१॥ शतधारंशतारंचाप्नोत्थंभिदिरमंबुजम्॥ मार्जारकर्णी चामुंडाकर्णमोटिश्चचर्चिका॥६२॥ विद्याधरःकामरूपीखेचरस्थिरयौव वर्नः॥ स्पर्शानंदारतिमदाप्सरसःक्रमदात्मजाः॥६३॥ देवोद्यानानिवैभ्रा जंमिश्रकेसिध्रकारणम्॥ चैत्ररथंचनासिक्योशुजोदस्रोगदागदौ॥६४॥ कृ षाघासिसधयोंचतिर्जुहूबाणईषिरतुषग्रहाशिराः॥ छागवाहनस्तूदा कुर्बर्हिषःस्वर्णसप्तघृतमंत्रदीधितिः॥६५॥ पपर्रोकृहसनीमणिपीथाः सप्तजिव्हसमिधावसितार्चिः॥ नाचिकेतभुजिभारतविश्वप्साःक्रचिःप चिसमंतभुजौचे॥६६॥ वडवाग्नौतुसलिलेंधनःस्याद्वडवामुखम्॥ का कध्वजोवाणिजश्चस्कंधाग्निस्तृणकाष्ठधूर्क्॥६७॥ छागणस्त्वकरीषा ग्निस्तृणाग्निःस्यात्तुवत्सलः॥ तुषानलःकुकूलःस्योन्मुर्मुरोथाग्निकुकूटे ॥६८॥ संकिलोदहनोल्कोस्यादंगारेकोकिलाज्मलौ॥ धूममंभमरुद्धाहू रवतमालशिखिध्वजाः॥६९॥ अग्निवाहस्तरीःस्वाहात्वग्नायीदहनप्रिया जीवितेशोमयःशीर्णपादश्चमहिषध्वजः॥७०॥ मंदोस्यकांताधूमोर्णाचि

स्य ५७।५८ चारुधरादित्रीणिइंद्रस्त्रियाः एकंकन्यायाः सारथेरेकं ५९ उच्चैःश्रवसा दित्रीण्यश्वस्य अमरावत्यादीत्रीणिपुर्याः वृषणवस्वादिचत्वारिवनस्य ६० हस्तिम ल्लादिषट्गजस्य ६१ वज्रादिद्वादश ६२ मार्जारकर्ण्यादिचत्वारिचामुंडायाः ६३ वि द्याधरादिचत्वारि स्पर्शानंदादिचत्वा र्यप्सरसः ६४ वैभ्राजेतिचत्वारिदेवोद्याना नामेकैकं नासिक्यादिचत्वारिस्वर्वैद्ययोः ६५ कृशान्वादिपंचविंशतिरग्नेः ६६।६७ व डवाग्न्याद्यष्टौ ६८ छागणादिद्वेकरीषाग्नेः तृणाग्न्यादिद्वे तुषाग्न्यादिद्वे अग्नि कुकूट्यादित्रीण्यग्निकणायाः ६९ अंगारादित्रीणिधूमादिसप्त ७० स्वाहादित्री-

त्रयुमेस्त्कलेरवकः॥भृत्योचंडमहाचंडोकालीचौतुविचारभूः॥७१॥पंजि
कात्वग्रसंधोनीनृचक्षास्तुखसात्मजः॥कीलालपाःपलाशीचक्षपाटो
नरविघ्रणः॥७२॥संध्यावलोरात्रिमदोहनूषःशमनीषदः॥पलाशोधि
क्षुरःशंकुःकापिशेयस्तुपिंडकः॥७३॥पिशाचोमेघनादस्तुवरुणोवःप
रंजयः॥दैत्यदेवश्ववातस्तुनभःप्राणोजगद्बलः॥७४॥भोगिकांतुःकंपल
क्ष्मापश्वधारावनिश्वसः॥खश्वासाक्षिपणुर्धूलिध्वजःसस्युरंकेतिः॥७५
वातुलोवातगुल्मःस्याच्चरथोयुर्निदाघजः॥झंझोनिलःप्रावृषिजोवासं
तोमलयानिलः॥७६॥श्रीदधनकेलिमनुराट्श्वेतोदररत्नगर्भनिधि-
नाथाः॥कुतनुकुहेच्छावसवःपिशाचकीसत्यसंगरस्त्रिशिरोः॥७७॥अ
स्त्रीपद्मोमहापद्मःशंखोमकेरकच्छपो॥मुकुंदकुंदनीलश्चचर्चोस्यु
र्निधयोनव॥७८॥सुतोस्यमायुराजःस्यात्तथावर्णकविर्निधौ॥आसं
गिनीचवातालीस्याद्वात्यावातमंडली॥७९ ॥इतिस्वर्गवर्गः॥ ॥
कुनाभिःस्याद्विहायस्तुखंमरुन्मेघवर्त्मच॥अक्षरंचाथपाथोदःखत
मालोगदांबरः॥८०॥मदयित्नुर्वायुदारुव्योमधूमोनभोगजः॥गाडवः
कंधरोवातरथोवारिमसिस्त्रियाम्॥८१॥करकास्याद्धनुककोवीजोद
कमिराचरम्॥मेघास्थिवर्षणंतुस्याद्वोघृतंचपरामृतम्॥८२॥सौदा
म्नीत्वशनिर्विद्युदणुभावाचिरद्युतिः॥८३॥तिथिप्रणीर्दर्शविपन्निशा
मणिस्त्रिनेत्रचूडामणिरत्रिनेत्रभूः॥सुधागर्भोह्लोमृगपिप्लुपक्षजोद-
शाश्वसिप्रग्रहणोमिचंदिराः॥८४॥छायामृगधरोराजाभाःपरिज्ञाबलक्षगुः

व्यग्निस्त्रियःजीवितेशादिपंचयमस्य ७१ एकंयमपत्न्याःएकंयमलेखस्य यमभृ
त्ययोःप्रत्येकंद्वेविचारभुवएकं ७२ पंजिकादिद्वे नृचक्षादित्रयोदशयमदूतस्य ७३
कापिशेयादित्रीणिपिशाचस्य ७४ मेघनादादिपंचवरुणस्य वातादीनित्रयोदश
वायोः ७५। ७६ वातुलादिद्वेवातगुल्मस्य निदाघवायोरेकं ७७ श्रीदादिद्वादशकु
बेरस्य ७८ पद्मादिनवप्रत्येकमेकैकंनिधीनां ७९ मायुराजादित्रीणिकुबेरसूनोः
आसंगिन्यादिचत्वारिवातभ्रमेः ८० कुनाभ्यादिषडाकाशस्य पाथोदाद्येकादशमे
घस्य ८१। ८२ करकादिसप्त ८३ सौदाम्न्यादिषड्विद्युतः ८३ तिथिप्रण्यादिचतुस्त्रिंश
च्चंद्रस्य ८४

द्विजदाक्षायणीतुंगीरोहिणीयज्वनांपतिः॥उडुपःपर्वधिःक्लेदुर्जयंत
स्तपसोहरिः॥८६॥तारापीडःखचमसोविकसःसिंधुनंदनः॥चंद्रिका
चंद्रशालोस्यान्नीहारःखनिशाजलम्॥८७॥शीतंतुशीतलंपत्रहिमं
तुहिमदुर्दिनम्॥कुज्झटिर्धूममहिषीरताप्रीचकुहेलिका॥८८॥धूमि
काचनभोरेणुरथागस्त्योग्निमारुती॥सत्याग्निर्वारुणिर्विंध्यकूटोवा
तापिसूदनः॥८९॥दीप्ताग्निरौर्वशेयश्चसमुद्रचुलकोस्यतु॥प्रियाकौ
षीतकीलोपामुद्राख्याचविदर्भजा॥९०॥प्राक्फाल्गुनेयस्तस्तथ्यानु
जःपारुष्यगोरथौ॥दिदिविद्वांदशकरश्चक्षाःस्फुरगुरुर्गुरुः॥९१॥शुक्रो
मःशतपर्वेशोमघाभूर्भृगुरास्फुजित्॥षोडशार्चिर्नवार्चिस्तुमंगलः
खोल्मुकःकुजः॥९२॥बुधोहेमाराजपुत्रएकदेहःप्रहर्षणः॥स्यात्पंचा
र्चिःश्रविष्ठाजःश्यामांगोकांगरोधनः॥९४॥शनैश्चरोनीलवासामंदश्छा
यात्मजःशनिः॥राहुस्तमग्रहकल्लोलोभ्रपिशाचोप्यथाहिकः॥९५॥के
तुर्ज्योतीरथस्तुस्याद्ग्रहाधारोध्रुवश्चसः॥नक्षोणंसूर्यमुक्तादिखुधे
रंगारिणीस्मृता॥९५॥आसन्नास्तमयाधीरैरुच्यतेचोपधूपिता॥सू
नीतिर्ध्रुवमातास्यान्मातादक्षस्यमारिषा॥९६॥छायापथोदेवपथः
सोमधारानभःसरित्॥दिनमणीस्त्वव्यधिषोभानेमिरवरप्रतः॥९७
॥गभस्तिहस्तोंऽशुधरःखरांशुर्भारविर्भगः॥वेदादयःप्रतिदिवा
भानुःपीलुस्तमोपहः॥९८॥दिनमणिहरिहेलिअभ्रभाकोषभासू

---

८६ चंद्रिकादिद्वे नीहारादिद्वे ८७ शीतादिद्वे पत्रहिमादिद्वे हिमदुर्दिनस्य
कुज्झस्यादिषट् कुहेलिकायाः ८८ अगस्त्यादिनव ८९ कौशीतक्यादित्री
ण्यगस्तिपत्न्याः ९० प्राक्फाल्गुनेयादिनवबृहस्पतेः ९१ शुक्रादिसप्तन
वार्चिरादिचत्वारिमंगलस्य॥९२ बुधादिदश ९३ शनैश्चरादिपंच राह्वा
दित्रीणि अहिकादिद्वेकेतोः ९४ ज्योतीरथादित्रीणिध्रुवस्य सूर्यस्यकादिश
एकं ९५ निकटसूर्यास्तादिशएकंएकंध्रुवमातुः एकंदक्षमातुः ९६ छा
यापथादिचत्वारिदेवपथस्य ९७ दिनमण्याद्यष्टत्रिंशद्रवेः ९७।९८

दरथिखगपतंगेनाद्र्यः सप्तसप्तिः॥ मिहरमणिरपीथाः कालकृ
त्पद्मपाणिः खमणिररुणभूरावंशफमानंशफमाली॥ ९९॥ छायास्यात्त
पतीमंदजननीभूमयीवरी॥ संज्ञातुयमकालिंदीरेवंतमनुदस्त्रसूः
॥१००॥ त्रसरेणुर्महावीर्या स्वातिः सूर्यास्फवर्चला॥ स्वरेणुर्घर्मवी
त्वाष्ट्रीप्रियेन्चैतेविवस्वतः॥ १॥ अम्भनोरमणोऽनूरुर्जटायुस्त्वरुणा
त्मजः॥ ॥इतिदिग्वर्गः॥ ॥कालस्त्वपृथ्वुर्जहकोभसंतोभसदित्य
पि॥ २॥ पीथः पीयुस्तिर्थश्चाथ वास्रोव्युष्टांशकेदिनम्॥ उषाप्रभातंगो
सर्गः सायोत्सवोविकालकैः॥ ३॥ रात्रीरक्षोजननीशर्वरीचक्रभेदिनी
घोरा॥ श्यामायाम्यादोषातुंगीभौतीशताक्षीच॥ ४॥ द्युस्तवोषानि-
शाख्याचवासतेयीतमानिशौ॥ यस्यांमत्तानिशिश्वानःश्वनिशंश्व
निशोन्चसा॥ ५॥ निःसंपातोऽर्धरात्रःस्यात्सर्वावसरइत्यपि॥ उच्चंद्रा
पररात्रौद्वौदर्शोमामावसीचसा॥ ६॥ भूतःकृष्णचतुर्दश्यांपौर्णम्यां
धर्मवासरः॥ शक्रोत्सवोध्वजोत्थानंशारदीद्यूतपूर्णिमा॥ ७॥ कोजा
गरःशरत्पर्वःकौमुदीचामरस्त्रियाम्॥ यक्षरात्रिस्तुदीपालीचैत्रा
वल्यांमधूत्सवः॥ ८॥ स्फवसंतःकाममहोवासंतीकर्दमौस्त्रियौ॥ श्रा
मस्तुमासोवर्षांशोवत्सरस्तुयुगांशकः॥ ९॥ ऋतुवृत्तिर्मासमानः
स्यात्कालग्रंथिरुर्वदः॥ कालप्रभातंशरदोप्रावृषातुजलार्णवः॥ १०॥

---

९९ छायादिपंचशनिमातुः संज्ञादिचतुर्दशयममातुः १०१ अम्भना
दित्रीण्यरुणस्य जटाय्वादिद्वेकालाद्यष्ट २ वास्रादिचत्वारिदिनस्य
उषादिद्वेप्रभातस्य गोसर्गादित्रीणिविकालस्य १०३ रात्र्यादिसप्तदश
४ श्वनिशादिद्वे ५ निःसंपातादित्रीण्यर्धरात्रस्य उच्चंद्रादिद्वे ६ परस
त्रस्य दर्शादित्रीणि ६ एकंकृष्णचतुर्दश्याः पौर्णम्यादिद्वे शक्रोत्सवा
वादिद्वे शारद्यादिपंचकोजागरायाः ७ यक्षराज्यादिद्वेदीपावल्याः
चैत्रावल्यादिषट् ८ श्रामादित्रीणिमासस्य वत्सरादिषड्वर्षस्य ९ का
लप्रभातादिद्वेशरदृतोः प्रावृषादिद्वेवर्षर्तोः॥ १० छ छ छ

कौमुदः कार्तिको मासः फाल्गुनालस्तु फाल्गुनेः॥ ज्येष्ठामूलीये मिच्छंति मासमाषाढपूर्वजम्॥ ११॥ कृतं सत्ययुगं त्रेताग्नायी द्वापरयज्ञियौ॥ कलिर्झर्झरकः कर्मयुगं पापं तु पातकम्॥ १२॥ शल्यं तु स्तं च कल्कोऽथ भद्रं मङ्गलं शिवं तथा॥ शंशुभं चाव्यये थोत्मा जीवः पुरुषमुद्गलौ॥ १३॥ अंतर्यामीश्वरश्चांतः करणं तु मनो निगुः॥ ॥ इति कालवर्गः॥ ॥ बुद्धिः पंडा विदा चर्चा वीविचारे तर्के निर्णयौ॥ १४॥ गुंजा च चर्चा थैसिद्धांतोत्तरपक्षसमाधयः॥ कृतांतेः पूर्वपक्षस्तु चोद्यं गीर्भणितिर्गिरो॥ १५॥ वाचां छंदस्तु निगमैः सा म्न्यूक्थं स्वरपत्तनम्॥ ब्रह्माक्षरं स्यादोंकारः प्रश्नदूती प्रहेलिका॥ १६॥ संज्ञाधिवृचनं सद्यः कृतं लक्षणनामनी॥ व्यपदेशः प्रसिद्धिस्तु टंकारोथ नवस्तवः॥ १७॥ शब्दाभिलापौ त्वभिधाऽभिधानं वाचको ध्वनिः॥ ह्रासः कुहरितं चाथ मन्मनो गद्गदध्वनौ॥ १८॥ तूरं तु तूर्यं स्यात्ताड्यमानास्तु पटहादयः॥ कुरर्धिः करताली स्यात्ध्वनिनाला तु काहलो॥ १९॥ मड्डुको मर्दनो मेंद्रो ढक्का विजयमर्दलः॥ डुगडः प्रतिपन्नूर्यं डमरुः सूत्रकोणकः॥ २०॥ नाली घटी याम नाली दंड ढक्का यमेरुका॥ यामघोषोऽथ ताम्नी स्यान्मानरं ध्रावि कालिका॥ २१॥ भवरुस्त्रेतपटहो मृत्स्क-

---

कौमुदादिद्वौ कार्तिकस्य फाल्गुनादिद्वौ फाल्गुनस्य ज्येष्ठस्यैकं ११ कृतादिद्वे त्रेतादिद्वे द्वापरादिद्वे कल्यादित्रीणि पापादिपंच १२ भद्रादिपंच शुभस्य आत्मादि षट् १३ अंतःकरणादित्रीणि मनसः बुद्ध्यादिचत्वारि विचारादिपंच १४ सिद्धांतादिचत्वारि पूर्वपक्षादिद्वे प्रश्नस्य गीरादिचत्वारि वचसः १५ छंदसादिद्वे निगमस्य मासादित्रीणि ब्रह्माक्षरादिद्वे ॐकारस्य द्वौ प्रहेलिकायाः १६ संज्ञादिषट् नाम्नः प्रसिद्ध्यादिद्वे नवादिद्वे स्तवस्य १७ शब्दाद्यष्ट ध्वनेः मन्मनादिद्वे गद्गदध्वनेः १८ तूरादिद्वे ताडितपटहादेः करध्र्यादिद्वे करताल्याः ध्वनिनालादिद्वे काहलायाः १९ मड्डुकादित्रीणि मृदंगस्य ढक्कादिद्वे विजयढक्कायाः डुगडादिद्वे डमर्वादिद्वे २० नाल्यादिषट् दंडढक्कायाः ताम्नीत्यादित्रीणि मानरंध्रायाः २१

भंगुरकैश्च सः॥ रणतूर्यं तु संग्रामपटहो भयडिंडिमः॥२२॥ भक्ततूर्यं नृपाभोरं मल्लतूर्यं महस्वनः॥ मुखवाद्यं वक्रनालं वेणोर्विवरनालिका॥२३॥ वारवाणिः प्रणेतास्याः कथकैकनटौ समौ॥ सर्वपेशील्यारंभः स्यात्तालावचरो नटः॥२४॥ लयपुत्री नटी नर्त्तः खड्गधारादिनर्तकौ॥ प्लवकः केलकश्चाथ भंडश्चाटुबटुः समौ॥२५॥ गायने गाथकः स्त्रीणां हल्लीषं सह नर्तनं॥२६॥ वात्सल्यशांतौ तु रसौ शृंगारः कौशिकैः स्मृतः॥२६॥ संभोगो विप्रलंभश्च तद्भेदौ वर्णिका मसी॥ मसिर्नाव्यामर्दनं तु स्याद्व्यामो वेज्ञा तु पांसनं॥२७॥ डमरुस्तु चमत्कारः प्रोदिस्तु किंपदेहिको॥ स्वेदः प्रस्रवणं स्विन्नो ह्रीयो व्रीडो नटाधिको॥२८॥ भामः क्रोधो निःशमस्तु शोके वीर्यं शठीरता॥ छलं मिषं च वैदग्धी भंगिश्च भनिमीलिको॥२९॥ स्याच्चिंता चिंतयोथोह्या हननं रणरणं च तत्॥ परिहासः केलिसुखः केलिर्द्रवननर्मणी॥३०॥ रामोद्भेदस्तु पुलकस्त्वङ्कुपुष्पं च त्वगंकुरः॥ स्वदोषगूहनं म्रक्षो रागसंगो तु गृध्नुतो॥३१॥ काप्यकारः स यश्चित्ते पापमाधाय शंसनं॥ कौकृत्यं विप्रतीसारो

---

भयरुद्रादि त्रीणि प्रेतपटहस्य रणतूर्यादि त्रीणि २२ भक्ततूर्यादि द्वे. मल्लतूर्यादि द्वे मुखवाद्यादि द्वे वेण्वादि द्वे २३ वंशीवादकस्यैकं कथकादि द्वे सर्ववेश्यादि चत्वारि नटस्य २४ लयपुत्र्यादि त्रीणि नट्याः प्लवकादि द्वे नर्तकभेदस्य भांडादि द्वे २५ गायनादि द्वे हल्लीषादि द्वे स्त्रीसहनर्तनस्य वात्सल्यादि द्वे रसभेदयोः पृथगेकैकस्य शृंगारादि द्वे २६ संभोगादि द्वे शृंगारभेदयोरेकैकं वर्णिकादि त्रीणि मस्याः व्यामनादि द्वे अवज्ञादि द्वे २७ डमर्वादि द्वे चमत्कारस्य प्रोद्यादि द्वे स्वेदादि त्रीणि व्रीडादि द्वे लज्जायाः २८ भामादि द्वे क्रोधस्य निःशमादि द्वे शोकस्य वीर्यादि द्वे छलादि द्वे वैदग्ध्यादि त्रीणि भंग्याः २९ चिंतादि द्वे ऊह्याहनादि द्वे विवाहस्य परिहासादि द्वे केल्यादि त्रीणि ३० रोमोद्भेदादि चत्वारि पुलकस्य स्वदोषगूहनादि द्वे रागादि त्रीणि गृध्नुतायाः। ३१ ५ ५ ५ ५ ५ ५

विंबाधातुविहेठनम्॥३२॥ दुःखंलोकोभवश्चैवसंसारःकष्टकार
कैः॥निर्वाणमस्तकोमोक्षःशीतीभावःशमोमृतम्॥३३॥ ॥
इतिनाट्यवर्गः॥ ॥अधोऽव्येयंस्यात्पातालेविरोकंश्वभ्रेम-
स्त्रियौ॥तमसंतुनिशाचर्मनीलपंकंरजोबलम्॥३४॥दिनांतको-
वियद्भूतिःखलुग्भृत्त्रोथनागभृत्॥डुंडुःस्त्रीस्यादलूताजगरोथह
लाहलः॥३५॥ब्रह्मसर्पोश्वलोलाचद्विमुखाहिरहीरणिः॥राजोहि
रलगर्दस्तुकालसर्पोमहाविषेः॥३६॥भांडपुष्पस्तुभुजगोभवेत्को
कुटिकंदलः॥गोनासगोनसौहालाहलंहालहलंविषम्॥३७॥अथा
अक्षोद्विरसनःसमकोलश्चभेकभुक्॥कुंभीनसोमंडलीचगरलं
जंगमंविषम्॥३८॥अनंतोवासुकिःपद्मोमहापद्मोपितक्षकः॥क
र्कोटःकुलिकःशंखइत्यष्टौनागनायकाः॥३९॥पुरीभोगवतीचैषां
भोगिन्योनागकन्यकाः॥ ॥इतिपातालभोगिवर्गः॥ ॥
अफंदुःखमघंचैंद्रीत्वलक्ष्मीःकालकर्णिका॥४०॥ ॥ ॥
इतिनरकवर्गः॥ ॥ ॥पाथोधिसिंधुमकरालयवारिराशीगं
गाधरेंदुजनकास्तिमिरूर्मिमाली॥वार्धिर्मितद्रुतिमिकोषमहाश
याश्चक्लीबंचशैलशिबिरंधरणीप्लवश्च॥४१॥पुमान्कचंगलोवाकः

---

सपापकथनस्यैकं कौकुत्यादिद्वेकुकृत्यस्य विंबाधादिद्वे ३२ दुःखलोकादिचत्वा
रिसंसारस्य निर्वाणादिषट्मोक्षस्य ३३ अधसादिद्वेपातालस्य विरोकादिद्वेश्व
भ्रस्य तमसाद्यष्टांधकारस्य ३४ नागभृदादिद्वेउलूतादिद्वेऽजगरस्य हला-
हलादित्रीणिब्रह्मसर्पस्य ३५ द्विमुखाद्यादित्रीणि अलगर्दादित्रीणिकाल
सर्पस्य ३६ भांडपुष्पादिद्वे हालाहलादित्रीणिविषस्य ३७ अभक्षादिषट्
सर्पस्य जांगलविषस्यैकं ३८ अनंताद्यष्टनागराजानांपृथगेकैकस्यएके
कं ३९ नागपुर्याएकं भोगिन्यादिद्वेनागकन्यानां अफादित्रीणिदुःखस्य
ऐन्द्यादित्रीणिअलक्ष्म्याः ४० पाथोध्याद्येकविंशतिः समुद्रस्य ४१

कूलंकषपरांगवौ॥ तरंतोदारदःपेरुर्महीप्राचीरमद्वयोः॥४२॥न
दीनश्चाथकमलंनीरंनाराःस्त्रियामिरा॥ कंदकंजलमस्थायमग
धेथांभसांभ्रमः॥४३॥ तानूरोवायुगुल्मश्चकणलाभःकलंकुर
॥पुरोटिःपत्रझंकारेवदालःकूलहंडकः॥४४॥चुलुकोघनजंब
लेदलाढ्येपंककर्वटेः॥ तरणोभेलकेवारिरथोनौस्तरिकःपूर्वः।
४५॥ होडस्तरांधुर्वहेनंवहित्रंवार्वटेःपुमान्॥ पादारकःस्यात्पो
लिंदेःपत्रबालेतुलाधटेः॥४६॥ समुद्रकफडिंडीरजलहासास्तुपं
नके॥ कैवर्तेजालिकश्छोटीकुपिनीस्यादथप्लवः॥४७॥पलवःपं
जरारवेटेः करंडीतुजलेशयः॥ आत्माशीशंवरोमूकोनिमेषोव
ल्कुवानपि॥४८॥मीनेवदालःपाठीनोमत्स्यराजस्तुरोहितः॥भा
लांकेश्चाथकुलिशंकरंकाश्मीले इत्यपि॥४९॥ फलकीस्याच्चित्रफ
लीराजग्रीवोमदार्मदः॥ कवयीककचपृष्ठीकेंकत्रोटोजलव्यथे
॥५०॥शफरःश्वेतकोलःस्यात्खशोटस्तुखलेशयः॥ इल्लिशोवारि-
कर्पूरगांगेयशफराधिपाः॥५१॥जलतालोप्यथचलत्सूर्णिमाचं
द्रचंचलौ॥ जलवृश्चिकइंचाकेगंगाटेयोगलानिलेः॥५२॥शा
लःशकुलगंडेःस्यादंधाहिःकुचिकोद्वयोः॥ ब्राह्मीतुपंकगडकौ

---

४२ कमलादिसप्तजलस्य अस्थायादिद्वेअगाधस्य अंभसांभ्रमादि ४३।४४
चुलुकादिद्वेघनजंबालस्य दलाढ्यादिद्वे पंककर्वटस्य तरणादिद्वेभेलकस्य
वारिरथादिचत्वारिनौकायाः४५ होडादित्रीणि वहित्रादिद्वे पादारकादिद्वे पत्रबा
लादिद्वे ४६ समुद्रकफादिचत्वारिसमुद्रफेनस्य कैवर्तादिचत्वारि प्लवादित्रीणि पंज
रारवेटस्य ४७ करंड्यादिपंचजलेशयस्य अनिमेषादित्रीणिमत्स्यस्य।४८ वदादिद्वे
मत्स्यराजादित्रीणिरोहितस्यकुलिशादिद्वे ४९ फलक्यादिद्वेराजग्रीवादिद्वेमत्स्य
भेदस्य कवय्यादिद्वे कंकत्रोटादिद्वेमत्स्यविशेषस्य ५० शफरादिद्वे खेटकादिद्वेख
लेशयस्य इल्लिशादिपंच ५१ जलसूर्णिमादिद्वे मत्स्यभेदस्य जलवृश्चिकादिद्वे इं
चाकस्य गंगाटेयादिद्वे ५२॥शालादिद्वे अंधाह्यादिद्वे ब्राह्म्यादिद्वे पंकगंडस्य·

लघुगर्गोस्त्रिकंटकेः॥५३॥तिर्यग्यानः कुलीरः स्यान्मुरवाक्षोहार
लोचनः॥ बहिः कूटीचरैः पोनाधानंतु स्याज्जलांडकेम्॥५४॥जलरू
पस्तु मकरो मरोलिरसि दंष्ट्रकः॥ मीनरैस्तंतुनागस्तु नक्रवाडव
हारकैः॥५५॥ नक्रस्तु वार्भटस्या दंबुकिरा टोंबुकंटकेः॥ जलभूक
रमायाद झषाशन न्हदग्रहोः॥५६॥जलकूर्मस्त्वंबुकीशोवसाढ्यः
शिशुकेश्वसः॥उद्रस्तु जलमार्जारजलाखुनकुलप्लवोः॥५७॥
मृत्किराघुर्घुरी वारिकृमिस्तु जलमक्षिको॥५८॥ पटालुकाजलौ
कांबुसर्पिणी वेणिवेधिनी॥ व्यंगस्तु नंदकोभेकोगूढवर्चाः कृता
लयः॥५९॥रेकोजिव्होथ पंचांगगुप्तेक्रोडांघ्रिकच्छपो॥५९॥गडुः किं
चुलुकोः यांधुर्विकिरश्चूडकश्चसः॥चुंदाचुंटीचचूडोथांधकूपः कर्क
रांधुकेः॥६०॥ पल्वलं दीर्घिका वापी यष्टिका मीनगोधिको॥ अव
घट्टावटौतु स्यौ तल्लंविल्लं तलंचतत्॥६१॥ द्विजप्रपालवालं स्यात्के
दारः पांशुमर्दनेः॥ नदीनिर्झरिणी रोधोवक्रा सागरगामिनी॥६२
॥ नलोदाचापिलासिंधुर्मर्षिकुल्यावहाचसो॥अध्वगागांधिनी
गंगा हैमवत्यग्रशेखरा॥६३॥

---

लघुगर्गादि द्वे त्रिकंटकस्य ५३ नियंग्यानादि पंच कुलीरस्य पोनाधाना
दि द्वे जलांडकस्य ५४ जलरूपादि पंच मकरस्य तंतुनागादि त्रीणि ग्रा
हस्य ५५ नक्रादि चत्वारि जलभूकरादि चत्वारि ५६ जलकूर्मादि चत्वा
रि शिशुमारस्य उद्रादि पंच ५७ मृत्किरादि द्वे घुर्घुर्याः वारिकृम्यादि द्वे
पटालुकादि चत्वारि जलौकायाः ५८ व्यंगादि सप्त भेकस्य पंचांगगुप्ता
दि त्रीणि कच्छपस्य ५९ गडुवादि द्वे किंचुलुकस्य अंधवादि षट् कूपस्य अं
धकूपादि द्वे ६० पल्वलादि पंच वाप्याः अवघट्टादि द्वे गर्तस्य तल्लादि
पंच आलवालस्य ६१ केदारादि द्वे क्षेत्रस्य नद्यादि नव ६२ अध्वगादि स
मगंगायाः ६३

धर्मद्रवीसिद्धसिंधुस्तापी तु यमुना यमी॥ रेवा तु पूर्वगंगास्यान्मुरला तु मुरंदला॥६४॥ स्यादर्धगंगा कावेरी वासिष्ठी गोतमी समे॥अथ गोदावरी गोलोकुवलं तूत्पलं कुवेम्॥६५॥ कैरवं गंधसोमं स्यात्कंदोटश्च निशाह्वसः॥ श्रीकरं कृष्णकंदं च रक्तोत्पलमलिप्रियं॥६६॥ लक्ष्मीगृहं कुमुद्वोथ शालूकः पंकसूरणः॥ पृश्नी तु कुंभिका वारिमुली पर्णी रवमूलिका॥६७॥ स्याद्वारि चत्वरोऽथांबु तालः सलिलकुंतलः॥ शैवलो हठपर्णी स्त्री कावारं वारिचामरम्॥६८॥ पद्मेकवारं पंकेजं बिसनाभिस्तु पद्मिनी॥ पुटकिन्येवमेवान्याः कुंदिन्यम्लानिनी मुखाः॥६९॥ बिसं तु तंतुलं बिसं स्यात् शृंगाटो वारिकुब्जकः॥१७०॥ ॥९॥ इति वारिवर्गः॥ ॥इति त्रिकांडशेषः प्रथमः कांडः समाप्तः॥ ॥

भूर्भूतधात्री गिरिकर्णिकाब्धिद्वीपा ससुद्रांबरमेखला कूः॥ क्षमाद्रिकीला च जगद्वहा च पुंसि स्थितौ मध्यमलोकमर्त्यौ॥१॥ महाकांता गंधवती रत्नगर्भा च मेदिनी॥ स्वर्वस्तनी भारतारव्यं तु वर्षं हैमवतं विदुः॥२॥ भारतं नरभूः किंपूरुषं हरिवर्षं ततः॥ भद्राश्वमुत्तरकुरु हिरण्मयमिलावृतं॥३॥ केतुमालं समभूनि स्फुर्भुवो च वर्षाणि वै नव॥ जंबुप्लक्षे कुशे क्रौंचे शाके शाल्मलिपुष्करे॥४॥ द्वीपाः सप्ताथ सप्तैव समुद्रा

---

ताप्यादि त्रीणि यमुनायाः रेवादि द्वे मुरलादि द्वे नदीभेदस्य ६४ अर्धगंगादि द्वे कावेर्याः वासिष्ठ्यादि द्वे गोमत्याः गोदावर्यादि द्वे कुवलादि त्रीण्युत्पलस्य ६५ कैरवादि षट् कुमुदस्य रक्तोत्पलादि चत्वारि ६६ शालूकादि द्वे पृश्न्यादि षट् कुंभिकायाः ६७ अंबुतालादि चत्वारि शैवालस्य ६८ पद्मादि त्रीणि बिसनाभ्यादि त्रीणि पुटकिन्याः कुंदिन्यादि द्वे पुटकिनीभेदयोः पृथगेकैकस्य ६९ बिसादि त्रीणि शृंगाटकादीनि द्वे १७० इति वारिवर्गः षोडश पृथिव्याः १ द्वे हिमवत्खंडस्य २ नव भुवो नव वर्षाणां ३ सप्त सप्त द्वीपानां ४ सप्त समुद्राणां ५

अपि कीर्तिताः॥ लवणेक्षुरसर्सर्पिर्दधिदुग्धजलांतकाः॥५॥ ऊषरं
तूषवानूषोब्रह्मावर्तस्तपोवदः॥ कुरुक्षेत्रंप्रयागंचहिमाद्रिविंध्यमं
तरा॥६॥ मध्यदेशोथपुंड्राःस्युर्वरेंद्रीगोडनीवृति॥ प्रभासःसोमतीर्थं
स्याद्दंतवैदीकुशस्थली॥७॥ प्राग्ज्योतिषःकामरूपेतीरभुक्तिस्तुनिच्छ
विः॥ विदेहोथाथकाश्मीरेकीराःस्युःशास्त्रशिल्पिनः॥८॥ तुरुष्काःख
शयथुस्काःबाल्हीकाश्चत्रिगर्तकाः॥ दाशेरकामरुभुवोमालवाःस्युर
वंतयः॥९॥डाहलाश्चेदयश्चैद्याःकारूषास्तुबृहद्गृहाः॥यदवस्तुदशा
र्हाःस्युःसात्वताःकुकुराश्चते॥१०॥ ओड्राउत्कलनामानोमगधाःकीकटाम
ताः॥ वेलाकूलंतामलिप्तंतामलिप्तीतमालिका॥११॥ एकचक्रंहरि
गृहंशंभपुर्यथवर्तनिः॥ पूर्वदेशोथसाकेतमयोध्योत्तरकोशला॥१२
॥ कुशस्थलंकान्यकुब्जंनागाह्वंहस्तिनापुरं॥ गजाह्वंहास्तिनंचा-
थश्रावंतीधर्मपत्तनम्॥१३॥ कुरुक्षेत्रंविनशनंकौशांबीवत्सपत्तने
म्॥ प्राजापत्यःप्रयागःस्यात्द्वारकावनमालिनी॥१४॥ द्वारवत्यब्धि
नगरीविदेहामिथिलेसमे॥ मथुरातुमधूपघ्नंजित्वरीतुतपस्थली॥
१५॥ वाराणसीतीर्थराज्ञीविशालोज्जयिनीसमे॥ चंपातुमालिनीपु
ष्पाःपुरंपाटलिपुत्रकम्॥१६॥ देवीकोटबाणपुरंकोटीवर्षमुपावनम्॥

---

त्रीण्यूषरस्य द्वेब्रह्मावर्तस्य मध्यदेशस्यैकं ६ त्रीणिगोडदेशस्य द्वेप्रभा-
सस्य द्वे३तवेद्याः ७ द्वेकामरूपस्य त्रीणितीरभुक्तेः त्रीणिकाश्मीरस्य ८
नवदेशभेदानामेकैकं ९ त्रीणिचेदिदेशस्य द्वेकारूषस्य चत्वारिदशार्हस्य
१० द्वेओड्रस्य द्वेमगधस्य चत्वारितामलिप्तस्य ११ शंभपुर्यास्त्रीणि द्वे
पूर्वदेशस्य त्रीण्ययोध्यायाः १२ द्वेकान्यकुब्जस्य चत्वारिहस्तिनापुर-
स्य द्वेधर्मपुर्याः १३ द्वेकुरुक्षेत्रस्य द्वेकौशांब्याः द्वेप्रयागस्य चत्वारिद्वा
रकायाः १४ द्वेमिथिलाराजधान्याः द्वेमथुरायाः चत्वारिकाश्याः १५ द्वे
उज्जयिन्याः त्रीणिकर्णपुर्याः द्वेपाटलिपुत्रस्य १६ पंचशोणितपुरस्य

स्याच्छोणितपुरंचाथयोजनंमार्गधेनुकम्॥१७॥क्रिमिशैलस्तुव-
ल्मीकःशक्रमूर्धाथसंचरः॥धरणःपिंडिलःसेतुःपंथास्तुखुल्लमोव्
हः॥१८॥वादःपथश्चमार्गश्चैरवपुरंनूर्ध्वगंपुरम्॥हरिश्चंद्रपुरंशोभे
सुदूंगःप्रतिमार्गकः॥१९॥शृंगाटंगोनिर्मुटस्तुपण्याजीवकचंगलं॥
पुंसिहट्टःक्रयारोहोजन्यंग्रामसुखंचतत्॥२०॥ ॥इतिभूमिवर्गः॥
॥ ॥स्यादभिस्यंदिरमणंशाखानगरमित्यपि॥शासनंधर्मकीलः
स्यान्मकुतिःशूद्रशासनम्॥२१॥पट्टोलिकाकूसकीलोपांशफकूलंनक
स्यचित्॥षड्डियवैःस्यादंगुष्ठएतैर्द्वादशभिर्भवेत्॥२२॥वितस्तिःस्याद
तोद्वाभ्यांहस्तःस्यात्तच्चतुष्टयम्॥दंडोधन्वंतरंतस्यसहस्रद्वितयेनतु
॥२३॥क्रोशस्ताभ्यांतुगव्यूतिस्तद्द्वयंयोजनंमतम्॥चतुरष्टशतंग्रा
मांतद्रोणेमुखकर्वटौ॥२४॥गर्भागारापवरकेवास्तुस्यादुहपोतकेः
॥ओकोगृहंपिटंचालोवडभीचंद्रशालिका॥२५॥कूटागारंचाथकपि
शीर्षंरवोडकशीर्षकं॥क्रमशीर्षंचाथखरकुटीनापितशालिका॥२६
॥कुलायिकापक्षिशालाकारावेश्मबधांगकं॥कायमानंतृणकुटी
दर्भटंनिभृतंगृहं॥२७॥कुद्दंकोद्वावपिठराइंद्रकोषस्तुमंचकेः॥
वासागारंभोगगृहंकन्यापल्यादनिष्कुटाः॥२८॥शिवस्यवृषमंडप्यां

---

त्रीणिवल्मीकस्य चत्वारिसेतोःषट्मार्गस्य १८ऊर्ध्वगपुरस्येकं द्वेशोभपु
रस्य चत्वारिप्रतिमार्गस्य १९ त्रीणिपण्याजीवस्य चत्वारिहट्टस्य २०
द्वेशाखानगरस्य द्वेराजशासनस्य द्वेशूद्रशासनस्य २१ द्वेव्यवस्थाप
त्रस्य अनाम पट्टोलिकायाएकं अंगुष्ठस्येकं वितस्तेरेकं २२ हस्तस्ये
कं द्वेहस्तचतुष्टयस्य क्रोशस्येकं २३ गव्यूतेरेकं योजनस्यैकं ग्रामभे
द्योरेकेकं २४ द्वेगर्भगृहस्य द्वेवास्तुनः द्वेगृहस्य द्वेचालस्य त्रीणि
वडभ्याः २५ त्रीणिकपिशीर्षस्य द्वेनापितगृहस्य २६ द्वेपक्षिशालायाः
द्वेकारागृहस्य द्वेतृणछन्नगृहस्य निभृतगृहस्येकं २७ गृहभेदस्यत्री
णि द्वेमंचस्य पंचवासगृहस्य २८

बुधैर्गोपुटिकंस्मृतं॥ वातायनंगृहाक्षःस्याद्धूटशयनंतथा॥ २९॥
उपशल्योपकंठेद्वेकपाटोद्वारकंटकः॥ कवाटश्चाररंकथ्याचाटःप्रा
कारइत्यपि॥ ३०॥ ॥इतिपुरवर्गः॥ ॥शैलस्थावरधातु
भृद्धरकुकीलोव्यंगकूःसानुमान्जीमूतःपृथुशेखरश्चकटकीदंती
नगोनिर्झरी॥ कुट्टारोऽथहिमालयोनगपतिर्मेनाधवोमागुरुःकै
लासोगणपर्वतश्चरजतप्रस्थःकुबेराचलः॥ ३१॥ हिरण्यनाभ
मैनाकस्सुनाभोहिमवत्सुते॥ शैलाग्रेशिखरंशृंगंदंतःप्राग्भारइ
त्यपि॥ ३२॥ पूर्वाद्रिर्दिनमूर्द्धास्यादस्ताद्रिश्चरमाचलः॥ चंदनाद्रिस्तु
मलयःक्रौंचःक्रौंचश्चमाल्यवान्॥ ३३॥ महेंद्रोमलयःसत्यःशक्ति-
मान्गंधमादनः॥ विंध्यश्चपारियात्रश्चसप्तैतेचकुलाचलाः॥ ३४
अश्मापवारुकःकाठःपारटश्चमृन्मरुः॥ घर्षणालःशिलापुत्रो
गृहाश्मागृहकच्छपः॥ ३५॥ गैरिकंतुवनालक्तंरक्तधातुगवेरु
कम्॥ प्रत्यश्मागिरिमृच्चाथशिलाधातुःसितोपलः॥ ३६॥ मक्को-
लोवर्णलेखाचकठिनाककुरवटीखटी॥ ३७॥ ॥इतिशैलवर्गः
॥ ॥वार्क्षंवनंतलंतल्कंगुहिनंसमजंगसं॥ लीलोद्यानंदेवनं
स्याद्वींजोलीपंक्तिरावली॥ ३७॥ वृक्षःकारस्करोगच्छःपलाशीवि
ष्टरःस्थिरः॥ चैत्योदेवतरुर्देवावासेकारिभकुंजरो॥ ३८॥ छाया

---

एकंशिवरृषंगृहस्य त्रीणिगवाक्षस्य २९ द्वेग्रामांतस्य चत्वारिकपाट
स्य द्वेप्रावरणस्य ३० चतुर्दशशैलस्य चत्वारिहिमालयस्य चत्वा
रिकैलासस्य ३१ त्रीणिमैनाकस्य पंचशिखरस्य २२ द्वेउदयाद्रेः
द्वेअस्ताद्रेः द्वेमलयस्य त्रीणिमाल्यवतः ३३ सप्तकुलाचलानामेकैकं
३४ षडाश्मनः द्वेशिलापुत्रस्य द्वेशिलापट्टस्य ३५ षड्गैरिकस्य त्री
णिशिलाधातोः ३६ चत्वारिखटिकायाः ३६ सप्तवनस्य द्वेलीलोद्या
नस्य त्रीणिपंक्तेः ३७ षट्वृक्षस्य पंचचैत्यस्य ३८

तरुस्थिरछायोवंदाकारुहास्मृता॥ वनस्पतिर्निर्मुदेःस्यात्फुल्लो न्निद्रविकस्वराः॥३९॥ स्तिनोन्मुद्रौकिलिंजस्त्वसूक्ष्मंदार्वथपल्लवः ॥ विसलंकिसलेंचाथोत्कलिकागारितेसमे॥४०॥ गुच्छोगुलुछःक्षेपैःस्याल्लमरीमंजरंनना॥मंजिष्ठकंटकेपत्रसूचिह्रुनरववंकिलाः॥४१॥ पिप्पलावादरंगःस्याच्चैत्यदुःकेशवालयेः॥ यक्षोदुंबरकंत्वस्यफलेथगृहनाशनः॥४२॥ देववृक्षोदलेगंधिःसप्तपर्णःशिशेरुजा॥ दंतहर्षणजंबीरोकतकांबुप्रसादनें॥४३॥ वरुणत्वश्मरीघ्नोथाध्वगभोग्योमधुद्रुमः॥ कपिचूतोऽम्रातकोस्यफलेपशहरीतकी॥४४॥ पिकबंधुस्त्वचूतःस्यात्स्त्रीप्रियःषट्पदातिथिः॥ मधुदूतोवसंतद्रुर्महाकालोरुकालकौ॥४५॥ शोभांजनस्त्वस्त्रीचित्तहारीविद्रधिनाशनः॥ प्रभंजनोथप्राचीनपनसांगोहरीतकी॥४६॥ महाकपित्थोबिल्वर्श्वकोलिर्गृध्रनखीस्मृता॥ स्यात्पिच्छलदलास्वादुफलोऽथोनागरंगके॥४७॥ वक्राधिवासीनारंगःकिमीरत्वकस्त्वगंधकः॥ स्याद्धर्षणःपिच्छिलत्वकधवस्त्वमधुरत्वचः॥४८॥ पिशाचद्रुःपीतफलःशाकोटःकर्कशच्छदः॥ अर्शोहितस्करक्षोघ्नोभल्लातक्यथशाल्मली॥४९॥ दुरारोहास्मृतापिंडीतगरःक

---

द्वेछायातरोः द्वेवंदायाः द्वेभपुष्पवृक्षस्य पंचफुल्लस्य ३९ द्वेसूक्ष्मदारोः त्रीणिपल्लवस्य द्वेउत्कालिकायाः ४० त्रीणिगुच्छस्य त्रीणिमंजर्याः चत्वारिकंटकस्य ४१ पंचपिप्पलस्य तत्फलस्यैकं पंचसप्तपर्णस्य ४२ चत्वारिजंबीरस्य ४३ द्वेवरुणस्य चत्वार्यम्रातकस्य द्वेतत्पुष्पस्य ४४ षडाम्रस्य द्वेमहाकालस्य ४५ चत्वारिशोभांजनस्य चत्वारिबिल्वस्य ४६ चत्वारिबदर्याः सप्तनागरंगस्य ४७ चत्वारिधवस्य ४८ द्वे शाकोटस्य त्रीणिभल्लातक्याः द्वेशाल्मल्याः ४९ द्वेपिंडीतगरस्य

फवर्धनः॥ काकचिंचा तु लाबीजं खदिरो बालपत्रकः॥ ५०॥ यूप-
द्रुः कुष्ठहृत्चोथ करंजो घृतपूर्णकः॥ रसायनफला पथ्या शक्रसृ-
ष्टा स्कंधोद्भवा॥ ५१॥ सरलो धूपवृक्षः स्यात् शोणकोन्यं कुमूरुहः
॥ चंपकोल्वस्तु मुरजफलः स्यात्पनसश्च सः॥ ५२॥ डहुः क्षुद्रांबुप
नसौ निचुलो रक्तमंजरः॥ निंबोर्कपादपः पुष्पगंधस्तु कुसुमाधिरा
ट्॥ ५३॥ चंपकोचरलब्धश्चैव बकुलः सिंहकेशरः॥ शीधुगंधोथ कं
केलिर्नटः कांतांघ्रिदोहदः॥ ५४॥ अशोकः पिंडपुष्पस्तु दाडिमः फ
लशाडवः॥ दाडिंबः पर्वरुट् च स्यात्स्वाद्वम्लः शकवल्लभः॥ ५५॥ पिं
डीरोर्थस्तु पर्णो भूनागाख्यो नागकेशरः॥ स्यात्पुष्परोचनश्चापि चूर्-
र्णं तस्य हरिद्रवः॥ ५६॥ निशिपुष्पा तु शेफाली कुटजः पांडुरद्रुमः
॥ लताशंकुतरुः सालो नीपो धाराकदंबकः॥ ५७॥ कटंकटेरी हरि
द्रा शिंशपा गुरुपत्रिका॥ पटोलं स्याद्राजफलं तस्य मूलं तु रम्यकम्॥
५८॥ सूत्रपुष्पस्तु कार्पासे जीर्णपर्णं कदंबकम्॥ प्रहसंतानि यूथी
स्याद्दमनः पुष्पचामरः॥ ५९॥ मालतीपुष्पकलिका सोमनस्यायनीं
विदुः॥ कुंदे स्याद्दोरटः पुंसि ग्रैष्मी तु नवमालिका॥ रक्तपिंडस्त्वोड्र
पुष्पं स्यादम्लानः कुरंटकः॥ ६०॥ कंदलशिलींध्रपुष्पे श्लेष्मघ्ना त्रि
पुरमल्लिका प्रोक्ता॥ एरंड हस्तिकर्णौ प्राचीनामलक वारि व-

---

द्वे काकचिंच्याः चत्वारि खदिरस्य ५० द्वे करंजस्य चत्वारि हरीतक्याः ५१ द्वे
सरलस्य द्वे शोणकस्य त्रीणि पनसस्य ५२ द्वे लकुचस्य चत्वारि निंबस्य
चत्वारि चंपकस्य ५३ त्रीणि बकुलस्य चत्वार्यशोकस्य ५४ अष्ट दाडिम-
स्य ५५ पंच नागकेसरस्य तच्चूर्णस्यैकं ५६ द्वे शेफाल्याः द्वे कुटजस्य द्वे
सालस्य द्वे धाराकदंबस्य ५७ द्वे हरिद्रायाः द्वे शिंशपायाः द्वे पटोलस्य
तन्मूलस्यैकं ५८ द्वे कार्पासस्य द्वे कदंबस्य द्वे यूथ्याः द्वे दमनस्य ५९ माल
तीकलिकाया एकं द्वे कुंदस्य द्वे नवमालिकायाः द्वे ओड्रपुष्पस्य द्वे कुरं
टकस्य ६० द्वे शिलींध्रपुष्पस्य द्वे त्रिपुरमल्लिकायाः

दरे द्वे॥६१॥ गृहत्या दलि धुस्तूरो कदली त्वायतच्छदा॥६२॥स्यात्तं
तुविग्रहा मंजिफला वारणवल्लभा॥ वातिंगणस्तु वार्ता कुवार्ता
कः शाकबिंदवः॥६३॥ क्लीबे वंगं च वार्ताकी स्यान्महाष्टहतीत्यपि
॥ कुष्ठं गदाक्कयं मूलं त्वस्य पुष्करमूलकम्॥६४॥ वंकसेनः स्त्वग
स्तिद्रुः शुकनासो मुनिद्रुमः॥ अनलिः कुनली पुत्रंजीवस्तु श्लीप
दापहः॥६५॥ छत्रको मल्लिपत्रं स्यात्कुञ्जको वारिकंटकः॥ वास्तू
कष्टक्क देशीयः शाकवीरो घनामलः॥६६॥ शोथजिद्वरहा काल-
शाकोप्यथ महोषधी॥ महीविषघ्नी चक्रांगी मत्स्याक्षी हिलमोचि
का॥६७॥ जलब्रह्मी च शालिंचे पत्तूरो लोहमारकः॥ केचुकं पेचुली
पेचुर्नाडीचो विश्वरोचनः॥६८॥ केशराजो नागमारः वपरुभेंगसो
दरेः॥ फनिषण्णं चुचुः पुंसि छत्रपत्रं तमालकम्॥६९॥ स्थलपद्मे
मथो देवपत्नी मध्वालुकं विदुः॥ फलपुच्छो वरंडालुः स्याद्रंगेष्टालुकं
तुयत्॥७०॥ श्रीमस्तकः स्वस्तिकः स्याद्राहूच्छिष्टो रसोनकः॥ कू
ष्मांडस्तु घृणावासस्तिमिषो ग्राम्यककर्टी॥७१॥ वालुकी कर्कटी
र्वारुर्मूत्रला रोमशा च सा॥ स्यात्त्रेलालश्चित्रफलः फरवाशो राजते
मिषः॥७२॥ लतापनस नादाक्षो सेंदुरूर्ध्वासितस्तुयः॥ पवारुः कार
वेल्लो सौगोडुंबा गजचिर्भटः॥७३॥ मृत्युबीजस्तु वंशः स्यात्केतकः कक

---

द्वे एरंडस्य द्वे प्राचीनामलकस्य ६१ द्वे धूस्तूरस्य पंच कदल्याः ६२ सप्तवा
र्ताकोः ६३ द्वे कुष्ठस्य पुष्करमूलस्यैकं ६४ षडगस्तिद्रोः द्वे पुत्रंजीवस्य
६५ द्वे छत्रायाः द्वे कुञ्जकस्य द्वे वास्तूकस्य त्रीणि पुनर्नवायाः ६६ द्वे का
लशाकस्य पंच कटुरोहिण्याः त्रीणि जलब्रह्म्याः ६७ त्रीणि शालिंचायाः
पंच पेचुकस्य ६८ चत्वारि केशराजस्य द्वे शफनिषंडस्य त्रीणि स्थलपद्मस्य
६९ द्वे मध्वालोः द्वे वरंडालोः त्रीणि लंगेष्टालोः ७० द्वे रसोनस्य चत्वारि
कूष्मांडस्य ७१ पंच कर्कट्याः सप्त फरवाशस्य ७२ पंच कारवेल्लस्य द्वे गो
डुंबायाः ७३ द्वे वंशस्य द्वे केतकस्य द्वे बहुमूल्यस्य ७४

चछदैः॥ द्वेकक्टोबहुमूलैःस्यात्तु करीरे वेणुकर्करेः॥७४॥ काशोश्व-
वालुः काकेक्षुर्वनहासश्चजंतुलो॥ गुडदारुर्मधुतृणंस्यादिक्षुरसि
पत्रकेः॥७५॥ रवानोदकोनारिकेलःकरकांभाःशिरःफलैः॥स्कर-
जनोगोपदलोराजतालश्छटाफलः॥७६॥ करमद्दस्तंतुसारोगु
वाकोकोट इत्यपि॥ रामपूगस्तकामीनोमुनिपूगःस्करेवर्द्दैः॥७७
॥पूगवोटस्तहिंतालैः क्लीबंकिरिटितत्फलम्॥ घनामयःस्यात्ख
र्जूरौ द्वौतुकाचिमभंजरैः॥७८॥ तरौदेवकुलोद्भूते दूर्वातुहरितालि
का॥७९॥ ॥इतिवनौषधिवर्गः॥ ॥ ॥सिंहःकंठीरवोभी
मविक्रांतःक्रूरमाचलः॥ पंचशिरवश्चशैलाटःपारींद्रःश्वेतपिंगलः
॥८०॥ मरुत्पवश्चनादोस्यचुक्कारः क्ष्वेडितंचनतं॥ उत्पादकस्तशर
भःशार्दूलोऽष्टापदश्चर्सैः॥८१॥ अथहिंस्त्रपशुर्व्याडःश्वापदःशि
विरित्यपि॥ वाधीनसस्त्वेकचरोगणोत्सा हश्चगंडकैः॥८२॥हिंसा
रुः श्वापदोव्याघ्रो महिषस्तरजस्वलः॥ दंशभीरुर्जरंतश्चनालि
कोयमवाहनैः॥८३॥अथस्तूकरेवनाहिरदंतायुधचक्रवज्रदीर्घ
रदाः॥ सूचीरोमाबहुस्करारवनिकस्थूलनासिकोभूक्षितं॥८४॥ए
णःकुरंगमोरिश्यःसाहृभ्यश्चारुलोचनः॥ गोलांगुलेकपित्थास्यद
धिशोणनगाटनाः॥८५॥किरिवश्चैहूरवस्तस्यात्भृगालोघोररासनः

---

द्वेकरीरस्य ७४ पंचकाशस्य चत्वारीक्षोः ७५ चत्वारिनारिकेलस्य पू
गवृक्षस्याष्टौ ७६ चत्वारिरामपूगस्य ७७ द्वेहिंतालस्य तत्फलस्यैकं
द्वेखर्जूरस्य देवकुलोद्भूतद्रोर्द्वे ७८ द्वेदूर्वायाः ७९ नवसिंहस्य ८० द्वे
सिंहनादस्य चत्वारिशरभस्य ८१ चत्वारिहिंस्रपशोः चत्वारिगंडक
स्य ८२ त्रीणिव्याघ्रस्य षट्महिषस्य ८३ दशभूकरस्य ८४ पंचकुरं
गस्य पंचवानरस्य ८५ षट्भृगालस्य पंचभृगालिकायाः ८६

लोपाकोमृतमत्तश्च वनश्वोथ सृगालिका ॥८६॥ लोमालिकादीस
जिह्वाकिरिविरुल्कामुखीचसौ ॥ बिडालः कुंदमो नक्तंचारी दीसा
क्षजाहकौ ॥८७॥ शशकस्तु वनाखुः स्यात्खट्टाशी पूतिशारिजो ॥
गवयस्तु गवालूके एडकः शिशुवाल्यकः ॥८८॥ वनछागोथ गंधो
तुखट्टाशो वनवासनः ॥ उंदुरुस्तु दुमोरंध्रबभ्रुर्दानातु मूषिको ॥८९॥
स्याच्छिकावेश्मनकुलः पुंवृषोगंधमूषिके ॥ स्याद्द दारः कृकचपाव
कृकलाशस्तृणांजनः ॥९०॥ प्रतिसूर्योप्यंजनस्काचित्रकोलाहलाह
लेः ॥ कारस्करादिकाकर्णजलौकोस्यादथोवटिः ॥९१॥ उपादिकोदे
हिकास्योदष्टपादस्तुकिंलनुः ॥ प्रसादकुक्कुदोझिल्लीकंठोगृहकपो
तकः ॥९२॥ पारावतोथ शकारव्योदिवांधोवक्रनासिकः ॥ हरिनेत्रो
दिवासीतोनखाशी पीयुघर्घरो ॥९३॥ काकभीरुर्नक्तचारी कैणादी
नस्तु खंजनः ॥ काकछर्दिः खंजखेलस्तातनोमुनिपुत्रकः ॥९४॥
भद्रनामारतनिधिः काष्ठकुट्टः शतछदे ॥ दीर्घपादस्तु कंकेः स्याद्ग
लेगंडस्तु मर्कटैः ॥९५॥ चातके बभ्रु चापीह घनतोलस्त्रिशंकवः ॥ व
र्षप्रियोथ मेधावी चिरिः कीरः पलाशनैः ॥९६॥ कुक्कुटस्तु विष्टत्ता-
क्षोराभिवेदी कलाविकः ॥ उषाकलोथताम्राक्षः कोकपुष्टः कुहूमु
खः ॥९७॥ मधुकंठो घोषयित्नुः कामतालः सुतर्दनः ॥ काकोरतज्व
रः स्त्री श्रावकागूढमैथुनः ॥९८॥ कारवः परमृत्युश्चवलुंदाको

---

पंचबिडालस्य ८७ द्वेशशस्य द्वेखट्टाश्याः द्वेगवयस्य त्रीण्येडकस्य ८८
त्रीणिखट्टाशस्य त्रीण्युंदुरोः द्वेमूषिकायाः ८९ चत्वारिछुछुंदर्याः पंच
कृकलाशस्य ९० त्रीणिपल्याः द्वेकर्णजलौकसः द्वेउपपादिकायाः ९१
द्वेअष्टपादः चत्वारिपारावतस्य ९२ दशोलूकस्य ९३ अष्टखंजनस्य
९४ चत्वारिकाष्ठकुट्टस्य द्वेकंकस्य द्वेगलगंडपक्षिणः ९५ षट्चात-
कस्य चत्वारिकीरस्य ९६ पंचकुक्कुटस्य सप्तकोकिलस्य ९७ सप्तद-
शकाकस्य ९८

मोद्गुलिर्हिकः॥ शुकजःसत्यवाक्काणोऽपकृष्णोनगरीवकः॥९९॥ ऐं
द्रिश्वनार्डाजंघोथगृध्रःस्याद्दूरदर्शिनि॥ शितिकंठस्तदात्यूहःकाक
मद्गुःकचाटुरः॥१००॥चिरंभणस्तुचिल्लःस्यात्खभ्रांतिःकंठनीडकेः
सूक्तामदनशलाकाचित्रास्ती शारिकाचचंडाच॥ शकुनज्ञातुज्येष्ठा
गृहोलिकाटहूनीमूलौ॥१॥ दीर्घजंघोनिशोतःस्याद्बकोटःश्फल्क
वायसः॥२॥ कंकेरुद्वार वलिभुक्शिखीचंद्रविहंगमः॥ बकेरुका
बलाकोस्यात्कुररोमत्स्यनाशनः॥३॥ हूंहूचारीचक्रवाकःसारस
स्तकलांकुरः॥गोमर्दश्चित्रपक्षस्तुतित्तिरिःस्यात्कपिंजलः॥४॥ल
घुमांसोमयूरस्तुचंद्रकीचित्रमेखलः॥ प्रचलाकीसितापांगशिखा
वलगलध्रताः॥५॥मार्जारकश्चाथतिलमयूरःस्याद्गुरुंठकः॥मत्स्या
शनोमीनरंकोनासाच्छिन्नीतुपूर्णिकौ॥६॥ पिपीलिकातुहोरोस्या
द्यमकीटस्तुघुर्घुरः॥स्यान्मर्कटस्तुशलके आशाबंधोऽस्यजाल
के॥७॥ फालखेलागूरुयोधीभारतीव्योमनासिकौ॥ चंचिमूचि-
स्तुस्कगृहःपीतलुंडोथसर्षपी॥८॥ हापुत्रिकारवंजनिकातुलि-
कास्कोटिकेसमौ॥ कूरेटव्याधनच्छूःस्यात्तरुकूणिस्तुवाग्गदः॥९॥
वर्त्तिकाविष्णुलिंगीस्याल्लावकोलघुजंगलः॥सरःकाकस्तुहंसः
स्याज्जालपात्सुरुदंशकेः॥१०॥गोभंडीरःपंककीरःकोयष्टिर्ज

---

९९ द्वेगृध्रस्य चत्वारिदात्यूहस्य १०० चत्वारिचिल्लस्य पंचशारिका
याः पंचगृहगोधायाः १ अष्टबकस्य २ द्वेबलाकायाः द्वेकुररस्य
३ द्वेचक्रवाकस्य त्रीणिसारसस्य चत्वारितित्तिरेः ४ मयूरस्याष्टौ
५ द्वेतिलमयूरस्य द्वेमीनरंकस्य द्वेपूर्णिकायाः ६ द्वेपिपीलिका
याः द्वेघुर्घुरस्य द्वेशलकस्य तज्जालस्यैकं ७ चत्वारिभारत्याः त्री-
णिकारंडवस्य पंचहापुत्रिकायाः ८ द्वेधनेच्छोः द्वेवाग्गुदस्य ९ द्वे
वर्त्तिकायाः द्वेलावकस्य चत्वारिहंसस्य १० द्वेजलकुक्कुभस्य

लकुकुर्भः॥ जीवंजीवोविषंमृत्युर्जीवजीवोऽथमक्षिका॥११॥ माचिकाभंमरालीचदंशःस्याद्भमरालिका॥ भंकारीचर्मचट्यांतुजतुनीगृहमाचिकौ॥१२॥ विषसूककाभृंगरोलोवरोलस्तृणषट्पदः॥ वरटीतुवरालीस्याद्भ्राह्मण्यथतमोमणिः॥१३॥ ध्वांतोन्मेषश्चखद्योतोज्योतिरिंगिनिमेषरुक्॥ भ्रमरश्चंचरीकःस्याद्रोलंबोमधुसूदनः॥१४॥ इंदिंदिरःपुष्पकीटोमधुद्रोमधुकेशटः॥ रेणुवासोऽथमशकोघोषोरणरणश्चसः॥१५॥ पक्षीतुनाडीचरणःस्यात्रंचुभृदनेकजः॥ स्यःखगोत्पतवारंककंठाग्निव्योमचारिणः॥१६॥ युगलद्वंद्वयुग्मानियुगंयमलयामले॥ ॥ ॥ इतिसिंहवर्गः॥ ॥ ॥ स्त्रीवधूर्योषितारामामंडयंतीवधूजनः॥ कन्यकालकनंदोसाभूषिताधर्मकारिणी॥१७॥ स्वस्वेदाचाथतरुणीदिक्करीधनिकाचसा॥ मरुंडोच्चललाटास्यात्सश्मश्रुर्नरमानिनी॥१८॥ स्नुषावधूटीमधुरनिस्वनाहंसगद्गदा॥ क्रोधनाभामिनीचंडीदारुस्त्रीशालभंजिका॥१९॥ विरक्तादुर्भगोसमपुत्रसूःस्कतवस्करा॥ पतिव्रतैकपत्नीस्याद्विधवाजालिकामता॥२०॥ विश्वस्तावांछिनीतुस्याद्भंजिकाकलतूलिका॥ वेश्याभूलावारवाणिर्भ्रंशराप्यथकुट्टिनी॥२१॥ इज्यास्याद्दतालीचघटदासीगणेरुका

---

त्रीणिजीवंजीवस्य त्रीणिमक्षिकायाः ११ त्रीणिदंशस्य त्रीणिचर्मचट्याः १२ चत्वारिभृंगरोलस्य त्रीणिवरट्याः पंचखद्योतस्य १३ नवभ्रमरस्य १४ त्रीणिमशकस्य १५ पक्षिणोष्ट १६ षड्युगस्य षट्स्त्रियः द्वेकन्यायाः अदूषितायाः १७ त्रीणितरुण्याः द्वेउच्चललाटायाः द्वेसश्मश्रोः १८ द्वेस्नुषायाः द्वेमधुरस्वनायाः त्रीणिक्रोधनायाः द्वेदारुस्त्रियः १९ द्वेदुर्भगायाः द्वेसमपुत्रायाः द्वेपतिव्रतायाः त्रीणिविधवायाः २० त्रीणिवांछिन्याः चत्वारिवेश्यायाः पंचकुट्टिन्याः २१ द्वेम्लानांगया.

मलिष्ठासरजाः षाण्मातुर द्वैमातुरौ समौ ॥ २२ ॥ समदुर्दुहितोपुत्रोद्वि
तीयः कुलधारकः ॥ पिताजनयिता वत्सोशिशुकः क्षीणकंठकः ॥ २३ ॥
बालोमुष्टिंधयश्चाथश्यालिकाकेलिकुंचिको ॥ नागरोदेवरः श्यालो
वारकीरोथसाश्रुधीः ॥ २४ ॥ श्वश्रूर्वृन्दः शतानीकोजरंतः स्यादथांशः
कः ॥ सगंधज्ञातिदायादौ मातुलोमातृकेशटः ॥ २५ ॥ भर्ताभरुर्नर्म
कीलः प्राणनाथः स्मरोत्सवः ॥ हृदयेशोरतगुरुर्जारः पापपतिः
समौ ॥ २६ ॥ कुमारभृत्यास्याद्बालतंत्रंगर्भिण्यवेक्षणं ॥ गर्भाष्टमो
देवमासो नाभिनालामलोस्मृता ॥ २७ ॥ आधानिकं पुंसवनं सीमं
तोन्नयनंच तत् ॥ खल्लीटः खलितिः कल्लो बधिरः खोररवंजकौ ॥
२८ ॥ दोर्गडुर्वाहुकुंठः स्याद्दोषधंतु भिषग्जितम् ॥ त्वकुसुष्मिकाकि
लासंस्यात् श्लीपदं पादगंडिरः ॥ २९ ॥ योन्यर्शः कंदसंज्ञंस्यात्कि
णः शूकंव्रणोपिच ॥ अजीर्णोवायुगंडोंतर्वमिश्चपलताशयः ॥ ३०
॥ पापरोगो रक्तवटीमसूर्यथतमोव्रणः ॥ वल्मीकोथातिसारोल्पगंधिः
स्यादुदरामयः ॥ ३१ ॥ कुरंड ह्रद्रोसिंघाणशेटौ स्कंदनरेचनौ ॥ गर्भंडो
नाभिगुडकोभिमंथोलोचनामये ॥ ३२ ॥ गुवगंडोवगंडः स्यात्पित्तमायु
पलंकरः ॥ श्लेष्मावलाशो मांसंतु जरूथेमथ शोणितम् ॥ ३३ ॥ पल

---

द्वेद्वैमातुरस्य २२ द्वेदुहितुः त्रीणिपुत्रस्य त्रीणिपितुः चत्वारिबालस्य २३
द्वेश्यालिकायाः द्वेदेवरस्य द्वेश्यालस्य द्वेश्वश्र्वाः २४ त्रीणिवृन्दस्य चत्वा
रिज्ञातेः द्वेमातुलस्य २५ सप्तभर्तुः द्वेजारस्य २६ त्रीणिगर्भिणीचर्यायाः
द्वेगर्भाष्टमस्य द्वेनाभिनालायाः २७ त्रीणिसंस्काराणामेकैकं द्वेखल्ली
टस्य द्वेबधिरस्य द्वेरवंजस्य २८ द्वेबाहुकुंठस्य द्वेऔषधस्य द्वेकिलास
स्य द्वेश्लीपदस्य २९ चत्वारियोन्यर्शस्य चत्वार्यजीर्णस्य ३० त्रीणिवसंत
व्रणस्य द्वेवल्मीकस्य त्रीण्यतिसारस्य ३१ त्रीणिकुरंडस्य द्वेरेचनस्य
द्वेनाभिगुडस्य द्वेनेत्रामयस्य ३२ द्वेअवगंडस्य त्रीणिपित्तस्य द्वेश्लेष्म
णः द्वेमांसस्य द्वेरक्तस्य ३३

क्षारोथ मस्तिष्को मस्तुलुंगोप्यथ स्त्रसा॥ वस्नसा थोधरमधुक्लीबे वक्त्रासवेः पुमान्॥ ३४॥ जिह्वामलं तु कुलुकं पिप्पिको दंतजे मलं॥ पिंडोस्त्रियां कुलं क्षेत्रं शरीरं स्कंदपंजरौ॥ ३५॥ शस्तं वपुः पुद्गलं स्यादंगमंगं तु कोमलं॥ पायुस्तनुन्हदोमार्गउच्चारस्त पुरीषणे॥ ३६॥ भगं गुह्यं वरांगं च कलत्रं जन्म वर्त्म च॥ स्मरागारं रतिगृहमधोधस्य दिह्वाव्यये॥ ३७॥ नासंधिरधरोवाच्यदेशश्च स्मरकूपकः॥ संसारमार्गश्च रतिकुहरं प्रकृतिः स्त्रियाम्॥ ३८॥ पुष्पापत्य पथौ चाथ नितंबः स्यात्कटीरकः॥ लिंगं तु लांगलं शेफः साधनं मदनांकुशः॥ ३९॥ स्मरस्तंभश्च कंदर्पमुसलो ध्वज इत्यपि॥ स्त्रियां नागलता चांडकोषस्तु फलकोषकः॥ ४०॥ नाभिर्द्वयोस्तु दकूपी तुंदस्तंदिकरः पुमान्॥ अधोमर्मशक्रुद्द्वार मुरुशक्थि च जाघनी॥ ४१॥ भुजा बाहा च बाहो स्यात्कुलिर्हस्तो भुजादलैः॥ कुचो वक्षोरुहो प्रोक्तो हस्तपुच्छं तु कल्मषम्॥ ४२॥ नखः पुनर्भवः कामांकुशः स्यात्करकंटकः॥ करेटुः करशूकश्च पुच्छत्यंगुलिमोटनम्॥ ४३॥ स्यात्काकलं कंठमणिर्नसा नस्या च नासिका॥ गंधनाली च नासिक्यं बागदलं दंतवाससि॥ ४४॥ दंतः खरुर्वक्त्रखुरो जंभो हानुर्द्विजस्तथा॥ राजदंतौ स्तु चत्वारो दशनानां पुरस्थिताः॥ ४५॥ गोधिश्चालो

---

द्वे मस्तिष्कस्य द्वे वस्नसायाः द्वे अधरमधुनः ३४ द्वे जिह्वामलस्य दंतमलस्यैकं त्रीणि शरीरस्य ३५ शस्तवपुष एकं कोमलांगस्यैकं त्रीणि पायोः द्वे विष्ठायाः ३६ सप्तदश भगस्य ३७ ३८ द्वे नितंबस्य नव लिंगस्य ३९ द्वे अंडकोषस्य ४० चत्वारि नाभ्याः ४१ त्रीणि भुजायाः त्रीणि भुजादलस्य द्वे स्तनस्य द्वे हस्तपुच्छस्य ४२ षट् नखानां द्वे अंगुलिमोटनस्य ४३ द्वे कंठमणेः पंच नासिकायाः द्वे ओष्ठस्य ४४ षट् दंतानां त्रीणि भालस्य त्रीणि नेत्रस्य ४५

महाशंखं देवदीपस्तु लोचनं॥ अंबकं चाथ नेत्रांबु बाष्पोनालेतेमन्-
स्त्रियाम्॥ कटाक्षकाक्षौ काकुस्तु जिह्वा स्यात्प्रतिजिह्विका॥४६॥
स्कधाश्रवांच कर्णस्तु श्रोतः क्लीबे ध्वनिग्रहः॥ स्याच्छब्दाधिष्ठानमथक
बरः केशगर्भकः॥४७॥ कबरी कूर्टकश्चाथ कोटिरः स्याज्जटासटौ
॥करारोटोंगुलीटः स्यात्तारंकः कर्णदर्पणः॥४८॥ अंदुकः पादकट
कोभिषेकः स्नानमित्यपि॥ पटच्चरं जीर्णवस्त्रं सिचयप्रोथशाटकौः
॥४९॥ पटवापः पटमयं दूष्यं वस्त्रगृहं स्थलं॥ स्वरग्रहः स्वरगृहं कु
बातुस्थूलशाटकः॥५०॥ चोलोंडुकः शिरोवेष्टो विरिंगिन्यवगुंठिका॥
पाठांत्यवनिका सूर्यरक्तसंज्ञं तु कुंकुमं॥५१॥ जागुडं दीपनं घ-
स्रं सौरभं घुसृणं च तत्॥ स्याद्गमातृकालाक्षो गंधकाष्ठं तु जोंग
कं॥५२॥ कपिंचंचलतैलाख्यः सिल्होथ सरलद्रवः॥ दधिक्षीर
घृताब्धः स्यात् धूनको वन्हिवल्लभः॥५३॥ शालवेष्टः सर्जमणिः
कस्तूरी गंधचोलिका॥ मदाह्वश्चाथ संचारी धूपो गंधपिशाचिकौ
॥५४॥ वेणुसारस्तु कर्पूरश्चंद्रभस्म हिमाह्वयः॥ वेधकोमालय
स्तु स्याच्छ्रीखंडो रोहिणश्च सः॥५५॥ विछित्तिस्तु कषायः स्यात्स
मालंभनमित्यपि॥ ललाटिका शंखचरी विष्टरः पीठमस्त्रियां॥
५६॥ निषद्यारवट्टिका संदी चातुरस्तु मसूरकः॥ प्रतियलस्तु

---

त्रीणि नेत्रांबुनः द्वे कटाक्षस्य चत्वारि जिह्वायाः ४६ चत्वारि कर्णयोः च
त्वारि कबर्याः ४७ त्रीणि जटायाः द्वे अंगुलीयकस्य द्वे तारंकस्य ४८
द्वे पादकटकस्य द्वे स्नानस्य द्वे जीर्णवस्त्रस्य त्रीणि शाटकस्य ४९
पंच वस्त्रगृहस्य द्वे स्वरगृहस्य द्वे स्रुगहनावृतेः ५० द्वे शिरोवेष्टस्य
चत्वारि तिरस्करिण्याः सप्त कुंकुमस्य ५१ द्वे लाक्षायाः द्वे अगरुकाष्ठ
स्य ५२ त्रीणि सिल्हस्य चत्वारि सरलद्रवस्य द्वे धूनकस्य ५३ द्वे साल
वेष्टस्य त्रीणि कस्तूर्याः त्रीणि धूपस्य ५४ पंच कर्पूरस्य त्रीणि श्रीखंड
स्य त्रीणि काषायस्य द्वे ललाटिकायाः द्वे पाठस्य ५६ त्रीणि खट्वायाः

रचनौ कटकोलः पतद्ग्रहः ॥ ५७ ॥ पूगपीठं च दीपस्कस्नेहाशः क
ज्जलध्वजः ॥ दशेंधनो गृहमणि र्दोषातिलक इत्यपि ॥ ५८ ॥ शिखा
तरुर्दीपवृक्षे ज्योत्स्नावृक्षो ऽथ लोचकः ॥ कज्जले स्यादिरिपके कंदु
कस्वोदनागुडे ॥ ५९ ॥ निश्रुक्कणं दंतशाणे पिष्टातो धूलिगुच्छकेः
॥ १६० ॥ ॥ इति मनुष्यवर्गः ॥ ॥ वंश्यः कुल्यश्च बीज्यः स्याद्ब्रह्म
चारी बटुः समौ ॥ स्याद्बटूकरणं तूपनयनं गृहमेधिनि ॥ ६१ ॥ ज्येष्ठा
श्रमी गृही वानप्रस्थो वैखानसोऽग्रहः ॥ वृक्कजस्त्वनमो विप्रो वर्ण
ज्येष्ठः कठो द्विजः ॥ ६२ ॥ मैत्रः पुनरुक्तजन्मा स्यादथ ब्राह्मणायनः
॥ शुद्धसंतानजो विप्रः श्रोत्रं श्रोत्रियतां विदुः ॥ ६३ ॥ स्यादक्षरसुखः
कालाक्षरिकः शिक्षिताक्षरः ॥ काव्यस्य कर्ता भविनी गुणनी शील
नं स्मृतं ॥ ६४ ॥ क्रियाकारो नवछात्रः कार्पटिकः सममवित् ॥ पार्ष
त्परिषदो गोष्ठी राजसूयो नृपाध्वरः ॥ ६५ ॥ क्रतूत्तमेश्वाथ चांद्राय
णमिंदुव्रतं स्मृतम् ॥ हवनी होमकुंडं स्यान्महावीरो मखानलः
॥ ६६ ॥ होमधूमस्तु निगणो होमभस्म तु वैष्टुभं ॥ आर्यके पिंडपा
श्चादि पितृकार्यमथो हविः ॥ ६७ ॥ होत्रं हविष्यं सान्नाय्यं पाठको धर्म
भाणकः ॥ सभ्यास्तु प्राश्निको देवद्रोणी यात्रादिचोकसाम् ॥ ६८ ॥

---

द्वे उपबर्हणस्य द्वे रचनायाः त्रीणि पतद्ग्रहस्य ५७ षट् दीपस्य ५८ त्रीणि
दीपवृक्षस्य द्वे कज्जलस्य त्रीणि कंदुकस्य ५९ द्वे दंतशाणस्य द्वे पट
वासस्य ६० त्रीणि वंश्यस्य द्वे ब्रह्मचारिणः द्वे उपनयनस्य ६१ त्रीणि गृ
हिणः त्रीणि वानप्रस्थस्य अष्ट विप्रस्य ६२ शुद्धकुलोत्पन्नविप्रस्यैकं
द्वे श्रोत्रस्य ६३ चत्वारि शिक्षिताक्षरस्य त्रीणि पाटनिश्चयस्य ६४ द्वे न
वछात्रस्य द्वे कार्पटिकस्य त्रीणि परिषदस्य त्रीणि राजसूयस्य ६५
द्वे चांद्रायणस्य द्वे होमकुंडस्य द्वे मखाग्नेः ६६ द्वे होमधूमस्य होमभ
स्मनो द्वे पितृकार्यस्यैकं चत्वारि हविषः ६७ द्वे पाठकस्य द्वे सभ्यानां
देवयात्राया एकं ६८

इष्टापूर्ते तें दे कोत्त्या यागखातादि कर्म यत्॥ यज्ञद्रव्यं तु पात्रीयं भा घुणस्त्वतिथिर्द्वयोः॥६९॥ कौशलं कुशलप्रश्नः समीची वंदना मतो॥ उपोषणं तूपवासो रोगाद्यैर्लंघनं च तत्॥७०॥ अंतरे त्र्यंतरे भुक्तमाहुः षष्ठाल्लुकालकम्॥ राइं सिन्हं मथो चारुव्रता मासोपवासिनी॥ ७१॥ स्याद्गायत्री तु सावित्री ब्रह्मारण्यं तु पाठभूः॥ पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनी॥७२॥ कच्छा कच्छटिका कक्षा धटी कौपीनमित्यपि॥ व्रैडालव्रतिकः सर्वाभिसंधी छद्मतापसः॥७३॥ कमंडलुः श्वैत्सुमुखौ जोटिंगस्तु महाव्रती॥ उरस्कटः पंचवटी बालयज्ञोपवीतकं ॥७४॥ भालेतिस्रो भस्मरेखास्त्रिपुंड्रकमथर्षयः॥ शापास्त्राः सत्यवचसो व्यासाद्यास्तु महर्षयः॥७५॥ परमर्षयस्तु भेलाद्या देवर्षयः कणादयः॥ ब्रह्मर्षयो वसिष्ठाद्याः स्कश्रुताद्याः श्रुतर्षयः॥७६ ॥ऋतपर्णादयो राजर्षयः कांडर्षयस्त्वमी॥ जैमिन्याद्या नारदस्तु कपिवक्त्रो विधातृभूः॥७७॥ देवब्रह्मा देवलश्च दुर्वासास्तु कुशाशणिः॥ प्राचेतसस्तु वाल्मीकिः कविर्ज्येष्ठः कुशीवशः॥७८॥ अपिवल्मीकवाल्मीकौ कृतकोटिस्तु काश्यपः॥ कृष्णद्वैपायनो वेदव्यासः स्यात्सत्यभारतः॥७९॥ पाराशरिः सात्यवतो माठरो बादरायणः॥ वसिष्ठोऽरुंधतीनाथो विश्वामित्रस्तु गाधिजः॥८०॥ गौतमस्तु शतानंदः कणादः काश्यपः समौ॥ धन्वंतरिर्दिवोदासः काशि

---

यागखातादिकर्मण एकं द्वे यज्ञद्रव्यस्य द्वे अतिथेः ६९ द्वे कुशलप्रश्नस्य द्वे वंदनायाः द्वे उपवासस्य रोगोपवासस्यैकं ७० त्रीणि अंतरत्र्यंतरभुक्तस्य द्वे मासोपवासिन्याः ७१ द्वे गायत्र्याः द्वे वेदपाठभुवः चत्वारि यज्ञोपवीतस्य ७२ पंच कौपीनस्य त्रीणि छद्मतपस्विनः ७३ द्वे कमंडलोः पंचोरस्कटस्य ७४ भस्मलेखात्रयस्यैकं त्रीणि ऋषीणां ७५ ७६ त्रीणि नारदस्य ७७ द्वे देवलस्य द्वे दुर्वाससः षट् वाल्मीकेः ७८ द्वे काश्यपस्य सप्त व्यासस्य ७९ द्वे वसिष्ठस्य द्वे विश्वामित्रस्य ८० द्वे गौतमस्य द्वे कणादस्य अष्ट धन्वंतर्यादीनां प्रत्येकं द्वयं द्वयं ८१

राजःस्कंधोद्भवेः॥८१॥पालकाख्यागणवतीकरेणुरुचिरासुतेः॥
विष्णुगुप्तस्तुकौंडिन्यश्चाणक्योद्रोमिणोंशुलः॥८२॥वात्स्यायनोमं
दनागःपक्षिलस्वामिनावपि॥उपवर्षोहलभृतिःकृतकोटिरया-
चितः॥८३॥पाणिनिस्त्वाहिकेदाक्षीपुत्रःशालंकिपाणिनौ॥शा-
णोत्तरीयोथव्याडिर्विंध्यस्थोनंदिनीसुतः॥८४॥मेधावीचाथमेधा
जित्कात्यःकात्यायनश्चसः॥पुनर्वसुर्वररुचिर्गोनर्दीयःपतंजलिः
॥८५॥चूर्णिकृद्भाष्यकारश्चहरिर्भर्तृहरिःस्मृतः॥ रघुकारःका-
लिदासोमेधारुद्रश्चकोटिजित्॥८६॥भारविःशतपुष्पःस्याद्भव-
भूतिस्तुविस्मृतः॥भूगर्भोप्यथयःप्रातःस्मर्यतेशुभकाम्यया॥८७
॥स्वस्वगृहीतनामास्यात्सैंडिन्यंभैक्षजीविका॥पाषंडकौलिकौ
खंजनरतंयतिमैथुनं॥८८॥अभावादंगनात्यागस्तुरगब्रह्मचर्य
कं॥सुखघंटाहुलहुलीनागवीदस्तुटंकरः॥८९॥खटकस्त्र्यक्षरं
श्चाथदारकर्मकरग्रहः॥वाधुक्यंचविवाहेस्यात्कुहलिःपूगपुष्पि
कौ॥९०॥नांदीकोतोरणस्तंभोसुरतंत्वभिमानितं॥धर्षितंसंप्रयो
गोन्नारतंचाब्रह्मचर्यकं॥९१॥उपसृष्टंत्रिभद्रंचक्रीडारत्नंमहासु
खं॥ ॥इतिब्रह्मवर्गः॥ ॥द्विजलिंगीनृपःक्षत्रःक्षत्रियोथप्रजे
श्वरः॥राजाधिपोमंडलेशएकजन्माभयापहः॥९२॥स्कंधावारःस्या

---

नवचाणक्यस्य ८२ चत्वार्युपवर्षस्य ८३ षट्पाणिनेः चत्वारिव्या
डेः ८४ पंचकात्यायनस्य चत्वारिपतंजलेः ८५ द्वेभर्तृहरेः चत्वा-
रिकालिदासस्य ८६ द्वेभारवेः त्रीणिभवभूतेः प्रातस्मर्यस्यैकं ८७
द्वेभैक्षजीविकायाः द्वेपाखंडस्य द्वेयतिगोप्यरतेः ८८ अभावात्स्त्री-
त्यागस्यैकं द्वेसुखघंटायाः चत्वारिनागवादस्य ८९ चत्वारिविवाह
स्य द्वेविवाहपुष्पादेः ९० द्वेमंगलस्तंभस्य दशसुरतस्य ९१ चत्वा
रिक्षत्रियस्य त्रीणिराज्ञः त्रीणिमंडलेशस्य ९२ द्वेसेनायाः

स्कटकैः शिबिरं तु बलस्थितिः ॥ आदिराजः पृथुर्वैण्यः काकुत्स्थस्तु
पुरंजयः ॥ १३ ॥ यौवनाश्वस्तु मांधाता खट्वांगस्तु दिलीपराट् ॥ रा
मो दाशरथिः कौशल्याजनिर्दशकंठजित् ॥ १४ ॥ मैथिली जानकी
सीता वैदेही भूमिजान्वसा ॥ रामपुत्रौ कुशलवौ कैकयोत्तया कुशी
लवौ ॥ १५ ॥ सौमित्रिर्लक्ष्मणो मेघनादजित्राथ रावणः ॥ राक्षसेंद्रो
दशमुखो लंकेशो धनदानुजः ॥ १६ ॥ मंदोदरीशः पौलस्त्यो मेघनाद
स्तु शक्रजित् ॥ हनूमान्हनुमानांजनेयो योगचरानिलौ ॥ १७ ॥ हि
डिंबारमणो रामदूतश्चैवार्जुनध्वजः ॥ ऐंद्रिस्तु वाली वालिश्च सुग्री
वो रविनंदनः ॥ १८ ॥ ऐलः पुरूरवा बोधिरुर्वशीवल्लभश्च सः ॥ यया
तिर्नाहुषिः शाकुंतलेयो भरतः स्मृतः ॥ १९ ॥ दौष्यंतिः सर्वदमनो ऽर्जु
नो बाहुसहस्रभृत् ॥ हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः ॥
२०० ॥ नलो ऽश्वविन्नैषधश्च महाभीषस्तु शांतनुः ॥ प्रतीपोऽस्य प्रिया
काली दासेयी च मत्स्योदरी ॥ २०१ ॥ विचित्रवीर्यचित्रांगदसूर्योजनगं
धिका ॥ व्यासमाता सत्यवती गांगेयो गांगिनीसुतः ॥ २ ॥ देवव्रतः शां
तनवो गांगो गांगायनिश्च सः ॥ भीष्मः कौणपदंतश्च स्वेच्छामृत्युः पु
रावसुः ॥ ३ ॥ धृतराष्ट्रस्त्वांबिकेयः पांडुर्माद्रीपृथापतिः ॥ दुर्योधन
स्तु कुरुराड्गांधारेयः सुयोधनः ॥ ४ ॥ धर्मपुत्रो ऽजमीढः स्यात् कर्णा
नुज युधिष्ठिरौ ॥ अजातशत्रुः कंकोऽथ भीमसेनः कटव्रणः ॥ ५ ॥ वी
ररेणुर्नागबलो गुणकारो वृकोदरः ॥ बककीचककिर्मीरजरा

---

द्वे सेनास्थानस्य त्रीणि पृथोः द्वे काकुत्स्थस्य १३ द्वे मांधातुः द्वे दिलीपस्य चत्वारि रामस्य १४ पंच सीतायाः द्वे रामपुत्रयोरेकैकं ऐकोसेयकं १५ त्रीणि लक्ष्मणस्य सप्त रावणस्य १६ द्वे मेघनादस्य अष्ट हनूमतः १७ त्रीणि वालेः द्वे सुग्रीवस्य १८ चत्वारि पुरूरवसः द्वे ययातेः चत्वारि भरतस्य १९ चत्वारि कार्तवीर्यस्य पंच नलस्य २०० त्रीणि शांतनोः अष्ट मत्स्यकन्यायाः १ द्वे भीष्मस्य २ ३ द्वे धृतराष्ट्रस्य त्रीणि पांडोः चत्वारि दुर्योधनस्य ४ षट् युधिष्ठिरस्य एकादश भीमसेनस्य ५ ६

संधहिडिंबजित्[११]॥६॥ पार्थः किरीटी गांडीवी गुडाकेशो बृहन्नलः॥
अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनंजयः॥७॥ सव्यसाची सुभद्रे
शः शब्दभेदी कपिध्वजः॥ वार्त्रघ्नश्चापि बीभत्सुः द्रौपदी पांडुशर्मि-
ला॥८॥ पांचाली पार्षती कृष्णा वेदिजा नित्ययौवना॥ याज्ञसेन्य
थ राधेयो वसुषेणोर्कनंदनः॥९॥ घटोत्कचांतकः कर्णश्चंपेशः सू
तपुत्रकः॥ द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः॥१०॥ द्रोणा
यनोऽथ राजर्षिर्जनमेजयसंज्ञकः॥ पारीक्षितोऽप्यथ जरत्कारुर्याया
वरो मतः॥११॥ प्रियास्य मनसा देवी जरत्कारुरथैतयोः॥ आस्तीकं
माता तनयो विरोचनसुतो बलिः॥१२॥ बाणो विंध्यावलीपुत्रस्त्वा
ष्ट्रो वृत्रोऽप्यहिश्वसः॥ दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः॥
१३॥ बार्हद्रथिर्जरासंधः कंसः स्यादुग्रसेनजः॥ कर्णीसुतो मूलदे
वो मूलभद्रः कलांकुरः॥१४॥ मंत्री ग्रंथिहरो मात्यो द्वाःस्थितो वेत्र
धारकः॥ द्वौः साथिको वर्तरूको गर्वाटो दंडवासिनिः॥१५॥ सहपां
शुकिलः स्नेही वयस्योऽप्यथ वार्त्तिकः॥ वार्तापन्नः प्रवृत्तज्ञो मौहूर्त्तो
दैवलेखकः॥१६॥ चित्रोक्तिः पुष्पशकटी दैवप्रश्न उपश्रुतिः॥ लेख
को मसिपण्यः स्याद्वोरकः किरिकोऽपिसः॥१७॥ मसीधानी मसि
मणिर्मेलांधुर्वर्णकूपिका॥ मसीजलं तु मेला स्यात् पराजन
मसी द्वयोः॥१८॥ लेखनी वर्णतूली स्याल्लेखो वाचिकहारकः

---

षोडशार्जुनस्य ७ अष्ट द्रौपद्याः ८ सप्त कर्णस्य ९ त्रीणि द्रोणस्य त्री
ण्यश्वत्थाम्नः १० त्रीणि जनमेजयस्य द्वे जरत्कारोः ११ द्वे तत्प्रियायाः
तत्सुतस्यैकं द्वे बलेः १२ द्वे बाणस्य त्रीणि वृत्रस्य चत्वारि शिशुपालस्य
१३ द्वे जरासंधस्य षट् कंसस्य १४ त्रीण्यमात्यस्य षट् द्वाःस्थितस्य १५ त्री
णि वयस्यस्य त्रीणि प्रवृत्तिज्ञस्य द्वे गणकस्य १६ चत्वार्याकाशवाण्याः
चत्वारि लेखकस्य १७ चत्वारि मसिधान्याः द्वे मसीजलस्य द्वे कज्जल्याः
१८ द्वे कमलस्य चत्वारि लेखस्य

वर्णदूतःस्वस्तिमुखर्कः कचेलं तन्निबोधनम् ॥१९॥ लेख्यस्थानं ग्रं
थकूटौ मुद्राप्रत्ययकारिणी ॥ यातुर्गंतुश्च पथिकौ हारिः पथिकसं
हतिः ॥२०॥ संदेशःप्राभृतं कोशौ स्युत्कोचस्तूपदानकौ ॥ जनांतिकं
त्वप्रकाशो हुंडी स्यान्न्यायसारिणी ॥२१॥ तांबूलदो वाग्गुलिकः स-
वाहकोंगमर्दकः ॥ चामरं रोमगुत्सं च केशरं चावचूलकौ ॥२२॥ कुठे
रुर्मंथरुः प्रोतोत्सादनं वस्त्रकुट्टिमं ॥ छत्रं शुद्धोदजं राजभृंगं कनक
दंडके ॥२३॥ हस्तीमहामृगः पीलुः सिंधुरो दीर्घमारुतः ॥ राजीवोज
लकांक्षश्च निर्झरः करटी करी ॥२४॥ विलोमजिह्वांतःस्वेदपिंडपा
दलतालुकाः ॥ वरांगः पुष्करी शूर्पकर्णसामजपेचिलौः ॥२५॥
करिणी वासितो गंभीरवेद्यंकुशदुर्धरः ॥ चालकव्यालकौ राजवा
ह्यो विजयकुंजरः ॥२६॥ ईशा दंतो महादंतः कर्णास्फाले झलज्झ
लौ ॥ मदप्रयोगो व्यस्तारो विक्कस्तु करिशावकः ॥२७॥ आरक्तः कुंभ
संधिः स्यात्संदानोऽश्वावतो धरः ॥ नासापूर्वं स्थूलहस्तं दंतमूले करी
रिकौ ॥२८॥ शंखकदौ दंतमध्ये प्रवेष्टः पृष्ठतल्पनं ॥ आयस्कारः प्र
जंघाग्रे प्रोहश्चरणपर्वणि ॥२९॥ न नागात्रावरेनीली कर्णाराक
र्णवेधनी ॥ आलानं शंकुरक्षोभः पाराधिर्गजबंधिनी ॥३०॥

---

पत्रीनिबंधनस्येकं १९ द्वे लेख्यस्थानस्य द्वे मुद्रायाः त्रीणि पथिकस्य द्वे
पथिकसंघस्य २० त्रीणि संदेशस्य द्वे उत्कोचस्य द्वे अप्रकाशस्य द्वे न्या
यसारिण्याः २१ द्वे तांबूलदस्य द्वे अंगमर्दकस्य चत्वारि चामरस्य
२२ द्वे चामरवातस्य चत्वारि छत्रस्य द्वे स्वर्णदंडछत्रस्य २३ द्वाविंशति
र्हस्तिनः २४ २५ द्वे करिण्याः चत्वार्यंकुशापेतुः द्वे विजयगजस्य २६
द्वे गजदंतस्य द्वे कर्णास्फालस्य द्वे प्रमदप्रयोगस्य द्वे करिशावकस्य
२७ द्वे कुंभसंधेः संदानस्येकं नासापूर्वस्येकं द्वे दंतमूलस्य २८ त्री
णि दंतमध्यस्य द्वे पृष्ठतल्पनस्य द्वे प्रजंघाग्रस्य द्वे चरणपर्वणः २९
द्वे गात्रावरयोरेकैकं पंचकर्णवेधिन्याः त्रीणि गजबंधनस्तंभस्य ३०

पारीतु शृंखला हिंजीरोऽस्त्री स्यादंकुशश्च सः ॥ पित्तज्वरः पाकलो
स्यत्कूटपूर्वस्त्रिदोषजः ॥३१॥ अश्वकिल्की हरिक्रांतः शालिहोत्रश्च
मुद्गभुक् ॥ स्त्री पुंसश्चामरो हेषीराजस्कंधो मरुद्रथः ॥३२॥ वातायनश्च
कशाफौ यस्तु पंचांगपुष्पितः ॥ स पंचभद्रः सूर्याश्वे वाताद्हरितोसमौ
॥३३॥ याप्याश्वोऽश्वमेधीयः पारसीकः परादनः ॥ आवट्टजेऽश्वचोस्कस्तु
सिंधुवारो हयोत्तमः ॥३४॥ बालाश्वजात्याऽजानेयो वेशरोऽश्वतरः खरैः
॥ श्री कुलसकोऽहृदावर्तौ रोचमानो गलोद्भवः ॥३५॥ ऊर्ध्वोस्थितिः पुरुषि
कैर्विक्रांतिस्तु पलायितं ॥ पुलासन्नाहप्ररवरौ कश्यिं कविकोच्यते ॥
३६॥ ग्रीवाघंटा घर्घरा स्याद्रश्मिः प्रवयणं च तत् ॥ प्रतोदोऽथ खुरो विं
खः पुटो लुंठनं वेल्लने ॥३७॥ वल्मा दंतालिका पल्ययनं पर्याणमस्य तु ॥
वंकाग्रभागः स्यादश्वपालो वल्लभपालकः ॥३८॥ नंदिघोषोऽर्जुनरथो
नीतिघोषस्तु गीष्पतेः ॥ चंकुरं धोरणं यानमात्रे चक्रं त्वरिस्मृतम् ॥३९
लघ्वी त्वाश्वीरथी कालवलनं त्वंकवर्मणी ॥ मेंठो मेंडो हस्तिपके जंघा
त्राणं तु मंरवुर्ण ॥४०॥ स्यान्नायकाश्चेसरिकौ नासीरं दर्पऊषणि ॥ शा
स्त्रमायुधमुक्तातुः स्यावरं तु धनुर्गुणी ॥४१॥ शरावापो धनुः स्त्री स्या
त्तूणः ताम्रिणता पिच्च ॥ ध्यध्यस्तु अतिकायः स्याज्जीवास्याभारवंगुणैः ४२

---

त्रीणि शृंखलायाः त्रीणि अंकुशस्य द्वे हस्तिपालकस्य ३१ द्वादशाश्वस्य ३२
त्रीणि पंचभद्रस्य द्वे सूर्याश्वस्य ३३ द्वे अश्वमेधीयस्य त्रीणि पारसीकाश्व
स्य द्वे सिंधुदेशाश्वस्य द्वे कुलाश्वश्वस्य ३४ त्रीणि अश्वतरस्य द्वे अश्वहृदाव
र्तस्य अश्वगलावर्तस्यैकं ३५ ऊर्ध्वावर्तस्यैकं द्वे अश्वगतेः त्रीणि सन्नाहस्य
द्वे कविकायाः ३६ द्वे ग्रीवाघंटायाः त्रीणि प्रतोदस्य त्रीणि खुरस्य द्वे लुंठनस्य
३७ त्रीणि वल्गायाः द्वे पल्याणस्य द्वे अश्वपालस्य ३८ अर्जुनरथस्यैकं बृ
हस्पतिरथस्यैकं द्वे यानमात्रस्य द्वे चक्रस्य ३९ त्रीणि लघुरथस्य त्री
णि वर्मणः त्रीणि हस्तिपस्य द्वे जंघात्राणस्य ४० द्वे नायकस्य त्रीणि दर्प
स्य त्रीणि शस्त्रस्य सप्त धनुषः ४१ षट् धनुर्गुणस्य ४२

शरुत्ताभ्यासश्चखुरली बाणास्यादस्त्रकंटकः॥स्थूलक्षेडोविपाठ
श्चचित्रपुंखः शरःसरः॥४३॥पत्रवाहोक्षिकर्षोऽथतीरंविज्जलशा
यकौ॥लोहनालस्तुनाराचःप्रसरःकांडगोचरः॥४४॥ऋषिःखड्ग
स्तरवारिःशस्त्रोभद्रात्मजश्चसः॥धाराविषोविशसनोन्युब्जखड्गः
करीतलः॥४५॥स्याद्दृनश्चक्रफलंपर्शुःपरसुरित्यपि॥दीर्घायुधः
शलःकुंतःशल्यःशंकुर्विषांकुरः॥४६॥श्रीलोस्त्रीसीसकंलग्नाः
प्रातगेंयास्तुतिग्रताः॥मागावलीबंदिपाठोवस्तुकीटस्तुयाचि-
तः॥४७॥वातकेतुःक्षितिकणःस्यात्पांशुःमेदिनीद्रवः॥संभारःसर्व
पूर्णत्वेपताकाव्योममंजरं॥४८॥कदलीकंदलीचीनंमक्षवाटस्तु
मल्लभूः॥भीरुस्तुभेलोहरिणात्हृदयःस्यात्सलंकटः॥४९॥विद्रवस्तु
भृगालीस्यादाघातस्तुवधस्थली॥कदनंमारणंमंथःसौप्तिकंरा
त्रिमारणं॥५०॥निपातोभूमिलाभश्चमृत्युःरथ्यथमारकः॥मरणो
मारिरुत्थानःशवस्तुक्षितिवर्धनः॥५१॥पंचावस्थःकटःस्थागःश्म
शानंतुशनानकं॥रुद्राक्रीडोदाहसरःसंस्क्रियास्क्रियोसमे॥५२
चिताकाष्ठमठश्चैत्यंचिताचूडकमिष्यते॥चित्तंचाथांलशय्यायां
खट्वि वांकुटेइत्यपि॥५३॥उपग्रहस्तुग्राहःस्यात्कुंदीकरमरीत्य
पि॥२५४॥ ॥इतिक्षत्रियवर्गः॥ ॥ ॥ ॥ ॥

---

द्वेशस्त्राभ्यासस्य नवबाणस्य ४३ त्रीणिसायकस्य चत्वारिनाराच-
स्य ४४ सप्तखड्गस्य द्वेन्युब्जखड्गस्य ४५ द्वेचक्रफलस्य द्वेपरशोः ष
ट्कुंतस्य ४६ द्वेभूलस्य त्रीणिस्तुतिव्रतस्य द्वेस्तानिग्रंथस्य द्वेयाचक
स्य ४७ चत्वारिपांशोः द्वेसंभारस्य पंचपताकायाः ४८ द्वेमल्लभुवः च
त्वारिभीरोः ४९ द्वेअपयानस्य द्वेवधस्थल्याः त्रीणिमारणस्य द्वेरात्रि
मारणस्य ५० त्रीणिमृत्योः चत्वारिमारकस्य पंचशवस्य ५१ चत्वारि
श्मशानस्य द्वेसंस्कारस्य ५२ पंचचितायाः त्रीणिशवरथस्य ५३
चत्वारिबंद्याः ५४

तृष्णाधनपिशाचीस्याद्दार्धुष्यंधान्यवर्धनी॥प्रामीत्यमृणमर्थो नांप्रयोगःस्यात्कलांबिका॥५५॥ऋणमुक्तिर्विगणनं क्षेत्रेवारटं मुच्यते॥हलिर्हृद्दलेमुद्गोहरिनामावनाखुकः॥५६॥वासंतश्चाथमसुरोमसूरोव्रीहिकांचनः॥सर्षपःस्यात्सरिषपः कुदुस्नेहाच तंतुभः॥५७॥यवेदःशितशूकःस्याद्गोधूमोम्लेंछभोजनः॥ताम्रवृन्तःकुलत्थःस्यान्निःस्नेहश्चंडिकातसी॥५८॥मूरवःपुरीषमोमाषोराजमाषस्तुवर्वदः॥फुल्लफालःशूर्पवातेमस्त्रीतितउचालनी॥५९॥कंडनुदूखलंप्रस्थःपालिःसूदःप्रचेलुकः॥कुसूलोव्रीह्यगारःस्यात्कंदुरग्निष्ठउच्यते॥६०॥आलिंजरोनानंदास्त्रीमृत्स्नाभांडकमुष्टिको॥भारासनंवाःसदनंकूणनोहंडिकासुतः॥६१॥कलसीगर्गरीतुल्या स्याच्छरावस्तुमार्तिकः॥शालाजिरःपार्थिवश्चमृत्कांश्यमथलोहिका॥६२॥खरसोदःखरपात्रंशिंघाणंकाचभाजनं॥काष्ठलोहीतुवातर्द्धिर्जीरकोदीप्यकःस्मृतः॥६३॥कटभंगस्तुशुंठी स्यात्कांजिकंतुतुषोदकं॥गृहाम्लंसिद्धसलिलंरक्षोघ्नंधातुनाशनम्॥६४॥गृहिणीमधुरोहिंगुशूलघ्नस्तूपधूपनं॥घर्षणीहेमरागिण्योहरिद्रापीतवालुका॥६५॥गंडोलंस्याद्गुडःस्याद्वैःपि

---

द्वे तृष्णायाः द्वे वार्धुष्यस्य द्वे ऋणस्य अर्थप्रयोगस्यैकं ५५ द्वे ऋणमुक्तेः द्वे क्षेत्रस्य द्वे हृद्दलस्य चत्वारि मुद्गस्य ५६ चत्वारि मसुरस्य चत्वारि सर्षपस्य ५७ द्वे यवस्य द्वे गोधूमस्य द्वे कुलत्थस्य त्रीण्यतस्याः ५८ त्रीणि माषस्य द्वे राजमाषस्य द्वे शूर्पवातस्य द्वे चालन्याः ५९ द्वे उदूखलस्य चत्वारि पाल्याः द्वे कुसूलस्य द्वे कंदोः ६० द्वे हज्जलाधारस्य द्वे भांडभेदस्य द्वे जलाधारस्य द्वे हंडिकासुतस्य ६१ द्वे कलस्याः पंच शरावस्य त्रीणि लोहपात्रस्य ६२ द्वे काचपात्रस्य द्वे काष्ठलोह्याः द्वे जीरकस्य ६३ द्वे शुंठ्याः अष्ट कांजिकस्य ६४ त्रीणि हिंगुनः चत्वारि हरिद्रायाः ६५ त्रीणि गुडस्य द्वे शर्करायाः

प्यटा गुडशर्करा॥ महाश्वेता तु मधुजो प्रयस्तं स्यात्स्नेहसंस्कृतं॥ ६६
॥ चिपिटो धान्यचमसे स्त्रियां पूपश्चरूपणः॥ आलिंपनात्पैणोदी
पनं मंडोदकं च तत्॥ ६७॥ वटकः पिष्टपूरे स्याद्गतो पायनवायने
॥ प्रहेणकं चाथ पोली पूपाली च पर्दी च सा॥ ६८॥ सक्तुश्चूर्णकं आ
पूप्यो भक्तं कूरः प्रसादनः॥ मंडो ज्येष्ठांबुरवादिका लाजाः पारी तु दो
हनी॥ ६९॥ निपानं स्त्री गवी तु वा निर्लिपा रोहिणी च सा॥ गव्यं श्रेष्ठं
पुंसवनं स्याद्दोहापनयः पुमान्॥ ७०॥ अथ दोहः पयः क्षीरं प्राग्राटं
वाघनं दधि॥ कटूरं तु दधिस्नेहो जग्धिर्भोजन भक्षणे॥ ७१॥ देहया
मा विश्वणनं भुक्तमभ्यवसानवत्॥ कल्यवर्तः प्रातराशः प्रातर्भो-
जनमित्यपि॥ ७२॥ अनड्वान् गां करोगं धर्मेथुनः शक्करिर्वृषः॥ क
कुद्मान्पुंगवश्चाथ कंठालाजालगोणिका॥ ७३॥ दोग्धा शकृत्क
रिर्वत्सस्तेषां माटीकनं क्रमः॥ गवादिकं जाघधनं पलिक्नी बालग
र्भिणी॥ ७४॥ करांकं गोमयछत्रे गोग्रंथिः शकृत्गोमयं॥ करीषश्छ
गणो हंभा रंभणं च गवां ध्वनौ॥ ७५॥ नैचिकं गोः शिरोदेशो वंदना
या तु रोचना॥ मंथानमंथतकाटोः स्याद्दुट्ठः कंठकाशनः॥ ७६॥ लं
बोष्ठाध्वगवासंत कुलनाशमरुद्विपाः॥ आलिर्बहुकरो बक्रग्रीवो
मेषस्करोमशः॥ ७७॥ संस्फाल हुडु भेडुश्च मेषी स्याज्जालकिन्य

---

द्वे सितायाः द्वे तैलसंस्कृतस्य ६६ द्वे चिपिटस्य द्वे पूपविशेषस्य द्वे त्व-
न्तेः द्वे मंडोदकस्य ६७ द्वे वटकस्य त्रीणि वायनस्य त्रीणि पोल्याः ६८ द्वे
सक्तोः चत्वारि भक्तस्य द्वे मंडस्य द्वे लाजानां सप्त दोहन्याः ६९ चत्वारि ग
व्यस्य ७० त्रीणि दुग्धस्य एकं अघनदध्नः द्वे दधिस्नेहस्य सप्त भोजनस्य
७१ त्रीणि प्रातर्भोजनस्य ७२ सप्त वृषस्य द्वे कंठालायाः ७३ त्रीणि व-
त्सस्य वत्सगतेरेकं गवादिधनस्यैकं द्वे बालगर्भिण्याः ७४ द्वे गोमयछ
त्रस्य द्वे शकृत्गोमयस्य द्वे करीषस्य द्वे गोध्वनेः ७५ गोः शिरोदेशस्यैकं द्वे
रोचनायाः त्रीणि मंथानस्य द्वे शोष्ठस्य ७६ पंच मेषस्य ७७ त्रीणि मेष्याः

विः॥ वर्करस्त लंबकर्णश्छागो बस्तः शिवाप्रियः॥७८॥ अल्पायुर्ल
घुकायश्च मेनादः पर्णभोजनः॥ परिक्रमसहो बुक्को देवानांप्रियं
इत्यपि॥७९॥ छागीसंजा चुलुंपास्याच्छंकुकर्णस्तु गर्दभः॥ स्मरः
स्मर्यश्चिरंमेही ग्राम्याश्वो रेणुरूषितः॥८०॥ पशुश्चारिः शुन्धूजंघोरं
त्नचारुशिलामणिः॥ स्याद्यावीपत्तनवणिग्घेडाबुक्कोश्वविक्रयी॥
८१॥ सर्वमूल्यं द्यूतबीजं हिरण्यं च कपर्दके॥ वराटकः पणार्थेः स्या
द्भास्करः स्फाटिकोपलः॥८२॥ शार्ङ्गिपिष्टं धौतशिलं गल्वर्कश्च सुसा
रवत्॥ अश्मसारस्त्विंद्रनीलो वैडूर्यं वालवायजं॥८३॥ बालसूर्य
मथो रक्तकंदलो विद्रुमश्च सः॥ लतामणिः प्रवालः स्याद्राजपट्टो
विराटजः॥८४॥ कुरुविल्लः पद्मरागो दधीच्यस्थितु हीरकं॥ स्वर्ण
लोहवरं चाग्निबीजं चांपेयमित्यपि॥८५॥ रूप्ये श्वेतं रंगबीजं सिं
दुकांते मणीचकं॥ ताम्रकं तु लोहितायस्सूर्याह्वं सुनिपित्तलं॥८६
॥ कंसे तु कांस्यकंसास्थि ताम्रार्धं सथ मौक्तिकं॥ रसोपलं शुक्ति
बीजं सिंदूरं रक्तवालकं॥८७॥ पारदः सिद्धधातुः स्याद्धरबीजं च
सूतकं॥ रंगं स्करेभं मृद्वंगं कुसुंभं ग्राम्यकुंकुमं॥८८॥ हरिताले
तु कर्बूरं गोदंतो नटसंज्ञकः॥ दारदं तु हिंगुलः स्याद्धिंगुलं रक्त
पारदं॥८९॥ रसगंधो गंधरसो गांधारं मांसिवर्द्धनं॥ क्षारं तु स्याद्य

---

द्वादशच्छागस्य ७८ ७९ त्रीणि छाग्याः अष्टगर्दभस्य ८० त्रीणि गिरलस्य
द्वे पत्तनवणिजः द्वे अश्वविक्रयिणः ८१ षट् कपर्दकस्य चत्वारि स्फटि
कस्य ८२ द्वे इंद्रनीलस्य त्रीणि वैडूर्यस्य ८३ चत्वारि विद्रुमस्य द्वे विराटज
स्य ८४ द्वे पद्मरागस्य द्वे हीरकस्य चत्वारि स्वर्णस्य ८५ त्रीणि रूप्यस्य
द्वे चंद्रवर्णरूप्यस्य चत्वारि ताम्रस्य ८६ चत्वारि कांस्यस्य त्रीणि मौक्ति
कस्य द्वे सिंदूरस्य ८७ चत्वारि पारदस्य त्रीणि रंगस्य द्वे कुसुंभस्य ८८
द्वे हरितालस्य द्वे गोदंतस्य चत्वारि हिंगुलोः ८९ चत्वारि रसगंधस्य
चत्वारि यवक्षारस्य ९०

वक्षारोयवभूकश्चरेचर्के:॥९०॥शिलाजितुशिलाव्याधिस्तृफलात्रि
फलोपिच॥ ॥इतिवैश्यवर्गः॥ ॥शूद्रःस्यात्पादजोदासो
ग्रामकूटोमहत्तरः॥ मालिकःपुष्पलावःस्यात्कुंभकारस्तमृत्क
रः॥२९१॥ दंडभृत्पैलगंडुस्तस्कधाजीवीचलेपकः॥ कायस्थेकूटस्त
त्वंजीकरौचित्रकरेकृणुः॥९२॥चर्मरुःकुरटःपादुकृत्कलादस्त
गौंजिकः॥नाडिंधमःस्वर्णकारोवात्सीपुत्रस्तुनापितः॥९३॥ चंद्रि
लोनखकुट्टश्चरजकःकर्मकीलकः॥ कन्यापालःपालवणिग्देव
रस्त्वमलद्विजः॥९४॥ अजाजीवस्तजाबालोनिष्कश्चांडालउच्यते
॥कुक्कुरेदीर्घसुरतचांतदरसनालिहः॥९५॥ रतव्रणोग्राममृगस्त
थेंद्रमहकासुकः॥कपिलोवक्रपुच्छश्चशयालुररतत्रपः॥९६॥शु
न्याशुन्यंशुनीरस्याच्चोरःशंकितवर्णकः॥ स्यात्कुंभिलश्चप्रचुरपु
रुषोथकुजंभिरः॥९७॥स्कुरुंगाहिवधश्चोरेचंदीकालस्तमाचलः
॥ प्रसह्यचोरश्चिल्लाभःस्त्रीचोरोरतहिंडकः॥९८॥ काव्यचो
रश्चंद्ररेणुःकुड्यछेद्यंतुखानिकम्॥ संधिःस्कुरुंगोतद्भेदाःश्री
वत्सगोक्षुरवादयः॥९९॥ कपालनालिकातर्कुस्तर्कुशानस्त
सामकः॥ वर्तनातर्कुपीठीस्यात्पिंजनंतूलकार्मुकम्॥३००॥

---

द्वेशिलाजतुनः द्वेत्रिफलायाः त्रीणिशूद्रस्य द्वेमहत्तरस्य द्वेमालि
कस्य त्रीणिकुंभकारस्य ९१ त्रीणिलेपकस्य त्रीणिकायस्थस्य द्वेचि
त्रकारस्य ९२ त्रीणिचर्मकारस्य चत्वारिस्वर्णकारस्य चत्वारिना
पितस्य ९३ द्वेरजकस्य द्वेकन्यापालस्य द्वेदेवलस्य ९४ द्वेअजाजी
वस्य द्वेचांडालस्य एकादशकुक्कुरस्य ९५ ९६ त्रीणिशुनीसंघ
स्य चत्वारिचोरस्य त्रीणिवधचोरस्य ९७ चत्वारिप्रसह्यचोरस्य
द्वेस्त्रीचोरस्य ९८ द्वेकाव्यचोरस्य द्वेसंधेः द्वेसंधिभेदयोरेकैकं
९९ द्वेतर्कोः द्वेतर्कुशाणस्य द्वेतर्कुपीठ्याः द्वेतूलधनुः ३००

तूलः पिचुः पिचुतूलं पिंजिका तूलनासिका॥ तंत्रकाष्ठं तुरी-
स्त्री स्यात्तु ग्रीष्महासेंद्रतूलके॥ १॥ पन्नद्धी पादुका प्राणाहिता
पदरथा त्वपि॥ कावारी जंगमकुटी भ्रमत्कुट्यथ खर्परः॥ २॥
वारित्रा मूर्धखोलश्च सैव पत्रपिशाचिका॥ वासी तु तक्षणी न-
स्त्री क्रकचः पत्रदारकः॥ ३॥ मद्यं त्वरिष्टं मैरेयं कत्तोयं कापि-
शायनं॥ माध्वीचं मधु माध्वीकं कपिशी कांचमालिका॥ ४॥
वीरा देस्या प्रसन्ना च माधवी गंधमादनी॥ गोडी च वाल्कली
मध्वासवयक्षरसौ नैरि॥ ५॥ नलिनी नारिकेयस्य स्करा तालस्य
तालती॥ स्मरासवो सुरवसुरं पारिः स्यात्पानभाजनम्॥ ६॥ शौं-
डापानं मदस्थानं द्यूतकृत्कृष्णाकोहलः॥ देवसभ्यस्तु सभि-
को लग्नकस्तृणमत्कुणः॥ ७॥ चुंचुरी तिंतिडी द्यूते पंचाली शारि
शृंखला॥ अष्टकां गंनयत्पीठी नयस्तु जतुपुत्रकः॥ ८॥ ॥
इति शूद्रवर्गः॥ ॥ इति त्रिकांडशेषे द्वितीयकांडः समाप्तिमग
मत्॥ ॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥ ॥ छ॥

---

त्रीणि तूलस्य द्वे पिंजिकायाः द्वे तुर्याः द्वे इंद्रतूलस्य १ चत्वारि पादु-
कायाः त्रीणि तृणादिछत्रस्य चत्वारि चलत्रायाः २ द्वे तक्षण्याः
द्वे क्रकचस्य ३ पंचदश मद्यस्य ४ द्वे गोड्याः द्वे पुष्पमद्यस्य ५ ना-
रिकेरस्करायाः एकं त्रीणि तालस्करायाः द्वे पानभाजनस्य ६ द्वे मद
स्थानस्य द्वे द्यूतकृतः द्वे देवसभ्यस्य त्रीणि लग्नकस्य ७ त्रीणि द्यूत
स्य द्वे शारिशृंखलायाः द्वे नयत्पीठ्याः द्वे नयस्य ३०८

श्रीगणेशायनमः॥ क्षेमंकरोरिष्टतातिः स्यान्मद्रंकरशंकरौ॥
आसुव्यायणविज्ञातौपुभान्नादः कुटीचके॥१॥स्थपुटंविषमं
संचारजीवीशरणार्थकः॥ अभिपन्नः शरणार्थीपांडुपृष्ठस्त्वल
क्षणः॥२॥उद्भटोड्डामरोत्तालेमाविष्टःप्रेतवाहितः॥मेरवोलितस्त
रलितस्तृषितस्तर्षितःसतृट्॥ ३॥ऊर्ध्वस्थोर्ध्वंदमौतुल्यौग्रा-
म्योग्रामेयकःस्मृतः॥पराचीनंप्रतीपंस्यात्समीचीनंसमंजसम्
॥४॥स्वस्थानस्थःपरान्द्वेष्टियःसगोष्ठश्वउच्यते॥ दातातुदारुमु
न्चिरःस्याद्विदग्धस्तुनागरः॥५॥ षिड्गोव्यलीकःषद्भमज्ञः कामके
लिर्विदूषकः॥पीठकेलिःपीठमर्दोभविलम्ब्बि दुरोविर्टः॥ ६॥प्र
घटाविच्छारुग्रगंडौमेधावीमेधिरःसमौ॥युक्तंपरिमितेभीमंत्वा
भीतेप्रश्लथःश्लथः॥७॥शिथिलौवोदआर्द्रःस्याच्चिरस्थोनायक-
कःस्मृतः॥स्यादायःशूलिकंतीक्ष्णकर्माशोन्वोहनंकृतिः॥८॥कु
सृत्याविभवान्वेषिपार्श्वकःसंधिजीवकः॥ वाक्याभिधायीपुरुषः
पृष्ठमांसादउच्यते॥९॥ भार्याटःस्वस्त्रियोदाताऽन्नार्थंदूषक-
पांसनौ॥ धृष्णुर्धृष्णग्दधृग्धृष्टौदग्नोरःस्कसघातकः॥१०॥

---

चत्वारिक्षेमंकरस्य द्वेविज्ञातस्य द्वौपुभान्नादस्य १ विषमसंचारजी
विनः एकं त्रीणिशरणार्थिनः द्वेअलक्षणस्य २ त्रीण्युद्भटस्य द्वेप्रे
तवाहितस्य द्वेतरलितस्य त्रीणितृषितस्य ३ द्वेऊर्ध्वस्थस्य द्वे
ग्राम्यस्य द्वेप्रतीपस्य द्वेसमीचीनस्य ४ गोष्ठस्यैकं त्रीणिदातुः द्वे
विदग्धस्य दशाषिड्गस्य ६ द्वेशारुग्रगंडस्य द्वेमेधाविनः द्वेयुक्तस्य
द्वेभीमस्य द्वेशिथिलस्य ७ द्वेआर्द्रस्य द्वेनायकस्य द्वेतीक्ष्णकर्म-
णः द्वेअनहंकृतेः ८ संधिजीवनस्यैकं वाक्याभिधायिनएकं ९
अन्नार्थंस्वस्त्रीदातुरेकं द्वेदूषकस्य चत्वारिधृष्टस्य द्वेस्कसघा
तस्य १०

देशकः शासिता शास्ता शिक्षुरव्यवसायवान्॥ चकितः शंकितो भीतः प्रतियत्नः प्रयत्नवान्॥ ११॥ आधार्मिको धार्मिकः स्यात्प्रसृतांतरितो समौ॥ कृपणो दृढमुष्टिः स्याद्देवयुर्धार्मिकः सुकृतः॥ १२॥ मनआपो मनोज्ञः स्यात्चक्षुष्यः प्रियदर्शनः॥ खखंडं भद्रकं न्युंखं लडहं चारु बंधुरः॥ १३॥ भट्टारो भगवान्पूज्यः शक्तिमतिबलौ समौ॥ पटुः पाटविको धूर्तः स्थगस्तीक्ष्णस्तु राजघः॥ १४॥ संबंधी गुणवान्संगुंजिप्रयुर्मित्रवत्सलः॥ धर्मार्थकाममोक्षेषु लोकतत्वार्थयोरपि॥ १५॥ षट्स्कप्रज्ञास्ति यस्यासौ षट्प्रज्ञ इति सः स्मृतः॥ मध्यस्थस्तु निसृष्टः स्यादुग्नपृष्ठस्तु संमुखः॥ १६॥ स्यात्कथंकथिकः प्रष्टो विचक्षुर्विमनाः स्मृतः॥ प्रतारितो व्यंसितः स्यात्प्रोथस्तु प्रथितो मतः॥ १७॥ माशब्दिकः प्रतिषेद्धा जडमात्रसुखौ समौ॥ प्रीणं पुराणं भिन्नं तु व्यवच्छिन्नं विशेषितं॥ १८॥ विनाकृतं विरहितं त्यक्तं निर्व्यूढ उच्यते॥ तिक्तः कषायः सुरभिः कक्खटो निर्वहो दृढः॥ १९॥ निःसंधिश्च निवातश्च समूढं शोधितं समे॥ स्यादागंतुकमाहार्यं सेमे पंक्तिमपाकिमे॥ २०॥ कोमलं पेलवं पापे पेलवः पापसदृक्षवाः॥ रोमांचितो हृष्टरोमा अजानेयास्तु निर्भयाः॥ २१॥ अन्यासा-

---

त्रीणि शासितुः द्वे अव्यवसायिनः त्रीणि भीतस्य द्वे प्रयत्नवतः ११ द्वे अधार्मिकस्य द्वे अंतरितस्य द्वे कृपणस्य त्रीणि धार्मिकस्य १२ नव प्रियदर्शनस्य १३ द्वे भट्टारस्य द्वे प्रतिबलस्य चत्वारि धूर्तस्य द्वे तीक्ष्णस्य १४ त्रीणि संबंधिनः द्वे मित्रवत्सलस्य धर्मादिषु प्रज्ञावतः १५ द्वे मध्यस्थस्य द्वे संमुखस्य १६ द्वे प्रष्टुः द्वे विमनसः द्वे प्रतारितस्य द्वे प्रथितस्य १७ द्वे प्रतिषेद्धुः द्वे जडस्य द्वे पुराणस्य पंच विरहितस्य १८ द्वे त्यक्तस्य त्रीणि सुगंधेः पंच दृढस्य १९ द्वे शोधितस्य द्वे आगंतुकस्य द्वे पक्किमस्य २० द्वे कोमलस्य चत्वारि पापिष्ठस्य द्वे रोमांचितस्य त्रीणि निर्भयस्य २१

धारणंत्वावेशिकंप्रातिष्ठिनंचनर्तनं॥ भिन्नकःक्षपणोऽन्हीकोबौद्धो
वैनायिकःस्मृतः॥२२॥ओर्ध्वंभ्रे तसिकःशैवेःकौलआन्वयिकेः
स्मृतः॥पांचार्थिकःपाशुपतश्छिद्रूपःस्फूर्तिमान्मतेः॥२३॥प्राज्ञाउद
ग्रारितज्ञास्यांछंयुशंबश्रुभंयवेः॥गौरवितास्त्वार्यमिश्रोश्लाघ्या
स्तत्रभवन्मुरवाः॥२४॥स्याद्देवानांप्रियःक्षेपेहूतकोबंधुदग्धवत्॥
अणुःकनीयानल्पिष्ठःपिंडितंगुणितंहितम्॥२५॥रवुद्वासूदोऽ
विनीतःस्यान्मशलमसृणेसमे॥प्रांजलःप्रगुणोजिह्मःप्राणाय्यः
साध्वनिंदितेः॥२६॥त्वत्वच्छिन्नंचान्यतरंदपष्ठुलमपष्ठुचे॥करंबि
तंचरवचितंरूषितंगुरुगुंडितं॥२७॥ सपात्रसमितोऽन्यत्रभोजना
न्मिलितोनर्यः॥ ॥ इतिविशेष्यनिघ्नवर्गः॥ ॥विधि
र्विधानंकर्मास्त्रीक्रियाकृत्याविधाकृतिः॥ स्यात्पंथुसाधनंकर्म
युताजस्येतुसंगतम्॥२८॥ अंगारितंपलाशस्यांकलिकोद्गमः
नेस्मृतं॥ जलयंत्रगृहंधीरैःसमुद्रगृहमुच्यते॥२९॥जलहंतु
विदुःस्वल्पेसमालीकुसुमाकरे॥ स्तनाभोगस्तनभरःप्रभाग
स्तुसंपदि॥३०॥आलिंगनंत्वंगपालिःश्लिषारवाद्दृस्त्वसद्गुहः॥
स्यादंधोनेदृक्सग्धिःसहभोजनमित्यपि॥३१॥ धार्मिकाणां-

---

त्रीणिसाधारणस्य पंचबौद्धस्य २२ द्वेशैवस्य द्वेकौलस्य चत्वारिपा
शुपतस्य २३ द्वेप्रज्ञायाः त्रीणिशुभयोः द्वेगौरवितस्य श्लाघ्यस्ये
कं २४ क्षेपोक्तेरेकं द्वेबंधुदग्धस्य त्रीण्यणोः त्रीणिगुणितस्य २५ द्वे
अविनीतस्य द्वेमसृणस्य त्रीणिजिह्मस्य त्रीणिसाधोः २६ चत्वारि
भिन्नस्य द्वेअपष्ठुलस्य चत्वारिरवचितस्य २७ पात्रसमितस्यैकं ष
ट्कर्मणः द्वेसाधनस्य संगतस्यैकं २८ पलाशकलिकोद्गमस्यैकं
द्वेजलयंत्रगृहस्य २९ स्वल्पजलयंत्रस्यैकं द्वेकुसुमाकरस्य द्वे
स्तनभस्य द्वेसुसंपदः ३० त्रीण्यालिंगनस्य द्वेअसद्गुहस्य द्वेअंध
सः द्वेसहभोजनस्य ३१

तु संभूय भोजने गणचक्रकं ॥ क्रीडाक्रीडकयोर्दौस्थः सेवायां सेवके च सः ॥ ३२ दानं दायोथ दुर्जातं दुःसमं चासमंजसं ॥ कलंजो वा विषास्त्रेण हतो यो मृगपक्षिणौ ॥ ३३ ॥ छेदोक्तिर्वक्रभणितं गोमुखं तूपलेपनं ॥ वार्धायनासंयेत्सूर्णं पात्रंपूर्णोल्लकं च तत् ॥ ३४ ॥ बुद्धद्रव्यं स्तोपिकं स्यात्सत्वं द्रव्यं च वस्तु च ॥ लेशस्तूपपदं गंधोनुबंधे षल्करावपि ॥ ३५ ॥ छेदः खंडोस्त्रियां गालिः शपनं शमनं शमः ॥ क्षेमस्तु धूलिकेदारः प्सा वीतिर्भक्षणं च सा ॥ ३६ ॥ मैत्रेयिका मित्रयुद्धं पर्यंकस्त्ववसक्थिका ॥ अथ हेतुरुपादानं प्रत्ययाः सहकारिणः ॥ ३७ ॥ अनुमा त्वनुमानं स्याद्व्याप्यं लिंगं च साधनं ॥ प्रत्यक्षोपाक्षमध्यक्षं धंधं धांध्यमपाटवं ॥ ३८ ॥ बोधो बोधिः समंतात्तु ज्ञानं स्यात्समुदागमः ॥ ऋषिः शास्त्रकृदाचार्यः शास्त्रं तु स्मृतिरागमः ॥ ३९ ॥ साख्यं समीक्षं स्यादिव्यदोहदं तूपयाचितं ॥ कारिणो रूपमिच्छंति कर्णास्फालेझलज्झलो ॥ ४० ॥ रामेण रावणवधो रामायणमथोच्चयः ॥ वरत्रग्रंथिश्चनीवी स्यात्क्वणितं रतिकूजितं ॥ ४१ ॥ श्वभ्रोवपातो हल्लेखस्तर्कश्शीर्णं तु शीलितं ॥ एकीया एकपक्षाः स्युः सहायाः सहभाविनः ॥ ४२ ॥ कुली

---

धार्मिकसहभोजनस्यैकं क्रीडाक्रीडकसेवासेवकानामेकं ३२ द्वेदानस्य त्रीण्यसमंजसः कलंजस्यैकं ३३ द्वेवक्रभणितस्य द्वेलेपनस्य द्वे वार्धायनात्सस्य ३४ द्वेबुद्धद्रव्यस्य त्रीणि द्रव्यस्य पंचलेशस्य ३५ द्वेखंडस्य द्वेगालेः द्वेशमनस्य द्वेक्षेमस्य त्रीणिभक्षणस्य ३६ द्वे मित्रयुद्धस्य द्वेपर्यंकस्य द्वेहेतोः द्वेसहकारिणो ३७ द्वेअनुमानस्य त्रीणिव्याप्यस्य त्रीणिप्रत्यक्षस्य त्रीणिधंधायाः ३८ द्वेबोधस्य समंताज्ज्ञानस्यैकं त्रीणिऋषेः त्रीणिशास्त्रस्य ३९ द्वेसांख्यस्य द्वेउपयाचितस्य गजकर्णास्फालस्यैकं ४० रामायणस्यैकं त्रीणिनिव्याः द्वेरतिकूजितस्य ४१ द्वेगर्तस्य द्वेतर्कस्य द्वेशीलितस्य चतारिसहायानां ४२

रात्स्येगर्विर्जानपदाराष्ट्रनिवासिनः॥प्रत्यक्षीव्यक्तदृष्टेर्थेश्चाथकर्त
नतर्कुटे॥४३॥चिरकालंदीर्घरात्रंमाभिक्षामस्तवाजिनं॥नदात्वं
प्रसुरवंराजमल्लउत्सिक्तउन्द्धतः॥४४॥द्वैधंविवादेआरंभआदरा
डंबरार्थकेः॥रभसोगमकारित्वंकौमुदीकार्तिकोत्सवे॥४५॥आ
वेशाटोपसंरंभाः प्रियावाक्चटुचाटुनी॥प्रतिरूपंप्रतिच्छंदः
संवेशनरतिक्रिये॥४६॥अभ्यासःखुरलीयोग्यानिर्वर्णनेनिभाल
ने॥शालिनीकरणंन्यग्भावनंगंधनसूचने॥४७॥भावःपदार्थोध
र्मःस्यात्सत्वंतत्वंचवस्तुच॥संदर्भस्तुप्रबंधःस्योद्ग्रंथोद्वात्रिंशद
क्षरी॥४८॥सर्वबंधोमहाकाव्यंमहारूपकनाटके॥अथवाङ्मय
भेदाःस्युःश्लेषश्चंपूःखंडकथाकथा॥४९॥आख्यायिकापरिकथाकल
पकविशेषकौ॥संदानमनिरूढंचप्रकीर्णंगुत्सकादिच॥५०॥
सर्गोवर्गपरिच्छेदोद्वाताध्यायांकसंग्रहाः॥उच्छ्वासःपरिवर्तश्च
पटलःकांडमस्त्रियां॥५१॥स्थानंप्रकरणंपर्वाह्निकंचग्रंथसंधयः
५२॥प्रज्ञप्तिःपरिभाषाशैलीसंकेतसमयकाराश्च॥प्रतिवाणिप्र
तिवचनंसमुदाचारस्त्वभिप्रायाः॥५३॥अप्रतिरूपकथास्यात्स
गणिकोच्छोरणंपरित्यागः॥स्याद्दुद्धर्धनमंतर्हासस्त्रिषुपिंडमा
हारः॥५४॥अवसर्गःप्राकाम्यंस्वाच्छंद्यानुमननमित्यपिच॥आक

---

द्वेकर्कटशिशोः द्वेराष्ट्रनिवासिनां द्वेसाक्षिणः द्वेतर्कुटस्य ४३ द्वेचिरकालस्यत्री
ण्याभिक्षायाः द्वेतदात्वस्य त्रीण्युद्धतस्य ४४ द्वेविवादस्य त्रीण्यारभस्य द्वेर
भसस्य द्वेकार्तिकोत्सवस्य ४५ त्रीणिसरंभस्य द्वेप्रियवाचः द्वेप्रतिछंदस्य द्वे
रतिक्रियायाः ४६ त्रीणिशास्त्राभ्यासस्य द्वेदर्शनस्य द्वेन्यग्भवनस्य द्वेसूचन
स्य४७ षट्वस्तुनः द्वेसंदर्भस्य द्वेग्रंथस्य ४८ द्वेमहाकाव्यस्य द्वेनाटकस्य पंचवाङ्म
यभेदानामेकैकं ४९ द्वेतिलकस्य द्वेदाम्नः द्वेचामरस्य ५० नवकथापरिच्छेदानामेके
कं षट्ग्रंथसंधीनामेकैकं ५१।५२ पंचसंकेतस्य द्वेप्रतिवचनस्य द्वेअभिप्रायस्य
५३ अप्रतिरूपकथायाएकं द्वेपरित्यागस्य द्वेअंतर्हासस्य द्वेआहारस्य ५४ त्रीणि

प्रकाम्यस्य

ल्पकउत्कंठाचिंताकर्मण्यैथास्त्यानं॥५५॥आक्षेपोत्याकारैःस्वा
ध्यायःस्यान्निरंतराभ्यासे॥हर्षस्वनःकिलकिलोसहृशःस्पंदनं
तुनिस्पंदः॥५६॥अवसानंतुविरामोमध्येमथोमंडलंचक्रं॥स्यो
दारंभःप्रस्तावनातदामुखमपिज्ञेयम्॥५७॥ ॥ ॥
इतिसंकीर्णवर्गः॥ ॥ ॥५॥ ॥छ॥ ॥छ

## अथनानार्थः

स्वरकाद्यादिकाद्यंतक्रमान्नानार्थसंग्रहम्॥विहायामरकोशो
क्तमकार्षीत्पुरुषोत्तमः॥५८॥शक्रार्कपर्णयोश्चार्कोऽभीक
स्त्वभयकामिनोः॥रूपकांतिकयोश्चांकोऽलिसकोभेककोकि
लौ॥५९॥अतिकंनिकटंचुल्लिर्नाट्योक्तौचाग्रजातिका॥अनी
कोस्त्रीरणेसैन्येगोर्यांमातरिचांबिका॥६०॥स्यादश्मंतकमुद्धा
नेमल्लिकाच्छदनेपिच॥आन्हिकंदिननिर्वर्त्यतत्क्लीबंनित्यकर्मणि
॥६१॥स्यादाच्छुरितकंहासविशेषेचनखक्षते॥उदकंपथ्यत्का
लीयफलेमदनेकंटके॥६२॥स्त्रियामुत्कलिकाहेलोत्कंठासलि
लोर्मिषु॥कोशांगेकौशिकोविश्वामित्रेगोर्यांचकौशिकी॥६३
॥कृष्णातेंचहिमान्यांचगौरीकात्योश्चकालिका॥वर्षोपलेस्त्रीक
रकाकरंकेकरकोस्त्रियां॥६४॥कुसुंभेदाडिमेपक्षिभेदेचकरकः
पुमान्॥करमध्यांगुलौचास्यात्कर्णिकाथद्रुमांतरे॥६५॥हूकेधूर्ते
चकाकःस्यात्कौतुकंमंगलेच्छयोः॥भोग्येप्यथस्यात्कुलकंश्लोकेका
र्थपटालयोः॥६६॥कुलकोनाककाकेंदुकआत्माचसुखंचकं॥पेचक
स्त्रीजितोकाकरुकोकोलेयकःशुनि॥६७॥कुलीनेचाथकनकं
धुस्तूरेनागकेसरे॥चंपकेकिंशुकेहेम्निकृषकोफालकर्षकौ॥६८॥
मांचेक्षकदशनौचद्रुमांगेकटकोस्त्रियां॥राजधान्यांनितंबेद्रेर्वल
येकटकोस्त्रियां॥६९॥वेणौनाकार्मुकंचापेगुणवृक्षेपिकूपकः

त्रीणिचिंताकर्मणः त्रीणिआक्षेपस्य ५५ द्वेसाध्यायस्य द्वेहर्षस्वनस्य द्वेनिःस्पं
दनस्य ५६ त्रीण्यवसानस्य द्वेचक्रस्य त्रीणिप्रस्तावनायाः

कल्कोविभीतकेतैलादिशेषेचाऽथकंचुकः॥ ७०॥निर्मोकेचोल
केवारबाणेऽथकुशिकोमुनौ॥शालेकिष्कुःप्रकोष्ठेपिव्याख्याश्लोके
पिकारिका॥७१॥खगेयमेछयाविमेकंकःसूच्यांचकूर्चिका॥क्र
मुकोभद्रमुस्तेपिकोकश्चक्रेवृकेपिच॥७२॥पुनर्नवाकारवेल्लुपर्णी
शंभुकठिल्लुकः॥कृकवाकुर्मयूरेपिवंशेदैत्येचकीचकः॥नीचे
पिक्षुल्लकोमूर्द्धत्राणेनाकौचखोलकः॥चौरोदुरूचरखलकोगो
लकौमणिजारजौ॥७४॥खगेलग्नेचगोरंकुःसंख्याभेदेपिगंडुकः
॥शृंग्यांचग्राममधुन्द्वेचग्रामसमुद्गुरिकास्त्रियां॥७५॥गाधिकोलेख
केपिस्याद्गुह्यकःश्लेष्ठेकनिघ्नयोः॥वेश्यायूथ्योश्चगणिकाचषकंसर
केपिच॥७६॥ग्रंथिकोपार्थदेवज्ञौग्रंथिपर्णेचनद्वयोः॥कंठालंकार
खद्योतविद्युत्सुचिल्लिमीलिका॥७७॥चारकोभोजकेबंधेनाद
कांगेपिचूलिका॥चित्रकंचित्रकेक्लीबंव्याघ्रेरंडेचचित्रकौ॥७८
गृहासक्तेपक्षिमृगेछेकोनागरिकेत्रिषु॥कंबोजलकरंकःस्यान्ना
रिकेलफलेपिच॥७९॥जैवातृकःकृशेचंद्रेदीर्घायुषिचसन्त्रिषु॥
जालिकावस्त्रभित्कूटकृत्केवर्त्तेचजालिकौ॥८०॥जंघायामद्रि-
भित्तौचखनित्रेग्रावदारणे॥कपित्थेचास्त्रियांटंकःपुंटुकाव-
ल्पशोणकौ॥८१॥तिलकंचित्रकेक्लोम्निनातरौतिलकालके॥गृह
दारेतंडकोस्त्रीसमासप्रायवाचिच॥८२॥तुरुष्कःसिल्हकेदेशे
प्राण्यंगेत्रितयेत्रिकं॥कूपांगेस्त्रीतिक्तशाकःखदिरेवरुणद्रुमे
॥८३॥दैत्येनाकर्णधारेचतारकंदृशिभेनना॥द्विकौकाकचक्रवाकौ
पृश्न्यांकुंदेदलादकः॥८४॥नरकोनिरयेदैत्येनौवाहेस्यान्नियो
मकः॥सभ्येगुरौचनवफलिकानवरजस्यपि॥८५॥नालीको
पद्मनाराचौद्वंद्वेपिपेटकोस्त्रियां॥सौभाग्येपिपताकास्यात्पं
कोस्त्रीकर्दमांहसोः॥८६॥पंचालिकावस्त्रकृतपुत्रिकागीत
भेदयोः॥मणिदोषेशिलाभेदेपुलकोलोमहर्षणे॥८७॥पर्य
स्त्यामपिपल्यंकःप्रियकोमृगनीपयोः॥पुष्पकंकंकणेपि-

स्यात्पराकोव्रतखड्गयोः॥८८॥ चामरेग्रंथभेदेचविस्तारेपिप्र-
कीर्णकं॥ सितछत्राब्जयोपुंडरीकंपुंसीतुदिग्गजे॥८९॥ व्याघ्रे
चकोशकारेचपाकौपचनशावकौ॥ पुष्कलकोगंधमृगेकीलके
क्षपणेपिच॥९०॥ कपर्दरज्जुराजीवबीजकोशेवराटकः॥ वृंदार
कौस्रुरश्रेष्ठौगिरिमेघौबलाहकौ॥९१॥ पिंजेनासिकताकर्णभू
षाकन्याचबालिका॥ शिवमल्यांबकःकन्देराज्ञिभट्टारकःसु
रे॥९२॥ भूमिकारचनायांचमूर्त्यंतरपरिग्रहे॥ मधूकावल्लिभे
देचबर्हिचंद्रचमेचकः॥९३॥ हारभेदेमाणवकोबालेकुपुरुषे
वटौ॥ मयूरकोऽपामार्गेचहंसभेदेपिमल्लिकः॥९४॥ यूनकंव
स्त्रभेदेचयौतुकेसंशयेपिच॥ यमकंसंयमेशब्दालंकारेयमजेत्रि
षु॥९५॥ याज्ञिकोयाजकेदर्भेविलेशोकरुचौपुमान्॥ राकादृष्ट
रजःकन्याकच्छपूर्णेंदुपूर्णिमा॥९६॥ नीलवस्त्रेक्षितारायांलोचको
निर्मितौत्रिषु॥ नगरीशाखयोर्लंकाकरिण्यामपिबंधकी॥९७॥
गुरावनाथेगरुडेजिनेविघ्नेविनायकः॥ वृषांकोशिवभल्लातौ
वंचकौधूर्तफेरवौ॥९८॥ वैदेहकोवाणिजकेवेश्यायामपिशूद्रजे
॥ वैलक्ष्याकार्ययोःक्लीबंव्यलीकंत्रिषुनागरे॥९९॥ बाल्हीकंबा
ल्हिकंधीरहिंगुनोनार्श्वदेशयोः॥ विपाकःपरिणामेपितिलकोपि
विशेषकः॥१००॥ शंकुःकीलकसंख्यास्त्रजल जंतुषुदृश्यते॥ शिशुकः
शिशुमारेपिशुकंग्रंथिशिरीषयोः॥१॥ क्लीबेरावणपात्रेनावचा
पिशातपर्विका॥ शल्कश्चूर्णेपिश्लूकस्तुस्यादनुक्रोशश्रृंगयोः
॥२॥ शिलाटकोविलेपेट्टेशल्कोयौतुकदानयोः॥ श्वाविद्वृक्षौच
शल्लक्यौमणौखड्गेचसस्यकः॥३॥ शीधौचशीधुपानेचसर
कोन्यथजन्मनि॥ सूतकंपारदेप्यस्त्रीसूचकोखलकुक्कुरौ॥
॥४॥ युग्मेसंघाटिकाकुट्टिन्यांचगद्येपिहारकः॥ वाद्यभेदेहु
डुक्कुःस्याद्दात्यूहेचमदोत्कटे॥५॥ ॥इतिकांताः॥ ॥
इंदुलेखागुडूच्यांचपूःस्त्रखंस्वर्नभश्चखं॥ गोमुखंलेपनं-

वाद्यभांडेसर्पेपि दुर्मुखः॥६॥ त्रिशिखं स्यात्त्रिशूलेपि न्युंखःसा
म्निमनोरमे॥ नखं शक्तौ कररुहे कूर्मे पंचनखो गजे॥७॥ आदौप्र
धाने प्रमुखं वैशाखो मंथमासयोः॥ कांडेनाविशिखाख्याबि
शाखोभगुहेपुमान्॥८॥ लेखो देवेपि पंक्तौस्त्री शिक्षा चूडाग्र
योरपि॥ शाखावेदविभागेपि सखा मित्रसहाययोः॥९॥ सुमुख
स्तार्क्ष्यपुत्रे॥ ॥इति खांताः॥ ॥चापवर्गस्त्यागमोक्षयोः
शरीरोपायप्रधाने स्वर्गं पुंभूम्निनीवृति॥१०॥ संबोधनेऽगाव्ययंस्या
दयोगो विधुरेपि च॥ शफथेप्यभिषंगःस्यादनंगःखेस्मरेपुमान्॥
॥११॥ पूर्णत्वयत्ना वाभोगा वायोगो व्यापृतावपि॥ जंगमेंगिृत्वयो
रिंगो नाट्य ईहामृगो वृके॥१२॥ फलं पूगस्य चोद्वेग मुत्सर्गो न्या
यदानयोः॥ सामान्यप्सु पूरागस्तुग्रस्तार्केद्वोश्च दुर्नये॥१३॥ हस्त
च्छेदे तु सस्यानां कटभंगो नृपात्यये॥ कथाप्रसंगो वातूले वि
षवैद्येपि वाच्यवत्॥१४॥ देशे कलिंगो धूम्याटे कलिंगं कोटजे
फले॥ त्रिषु दक्षे विदग्धे च खड्गो निस्त्रिंशगंडकौ॥१५॥ स्वर्गे वज्रे
चरश्मौ च बलीवर्दे च गौः पुमान्॥ स्त्री बाणरोहिणी दृग्दिग्वाग्भू
मिषप्सु भूम्नि च॥१६॥ वैधव्ये नृपनाशे च छत्रभंगः प्रकीर्तितः
॥अश्वगंधापि तुरगी तुंगो पुन्नागसोच्छ्रयो॥१७॥ दीर्घाध्वगः
स्याद्दुष्टेपि निषंगः संगतूणयोः॥ नागः श्रेष्ठेभसर्पेषु क्लीबं सीस
करंगयोः॥१८॥ वृक्षेस्यात्पुंसि पुन्नागः पतंगः शलभे खौ॥ का
कोदुंबरिकायां स्त्री फल्गुस्त्रिषु निरर्थके॥१९॥ पालनेभ्यवहा
रे च निर्वेशः पण्ययोषिता॥ भोगः सुखे धने चाहेः शरीरफण
योरपि॥ २०॥ भगं वैराग्ययोनीच्छा ज्ञानैश्वर्येषु चेष्यते॥ तरं
गभेदयो भंगो भंगा सस्येशणाह्वये॥२१॥ एकदेशांशयो भा
गो भृंगो धूम्याटकेपि च॥ भुजंगो भुजगेषिड्गे जामदग्न्यतटो
भृगू॥२२॥ मृगोऽन्विष्टौ च मार्गस्तु मासान्वेषण वर्त्मसु॥ यो
गश्चारे पूर्वलाभे सूत्रे विश्रब्धघातिनि॥२३॥ उपाये संगतौ ध्यानो

बधसम्बाहयुक्तिषु॥ नृत्येरणेरवलेरागेरंगः क्लीबेत्रपुण्यपि॥ २४॥ रागः कुंकुमादिकेरक्ते मात्सर्येलोहितादिषु॥ चक्रेरथांगं कोकेनारक्तांगोमंगलेपिच॥२५॥ व्यक्तेसांख्योदितेलिंगंस्थाणौशेफसि लक्षणे॥ पुंस्त्वादौचवरांगंतुगुडत्वचिगजेपुमान् ॥२६॥ वल्गुश्चागेपिवेगस्तुमहाकालफलेपिच॥ जलोत्क्षेपे समुत्सर्गेशृंगमुत्कर्षचिन्हयोः॥२७॥ शार्ङ्गंधनुर्विष्णुधनुः संभोगोरतभोगयोः॥ ॥इतिगांताः॥ ॥ओघः स्याद्द्रुतनृत्येच कांचिघोकांचनोरु ॥२८॥ निदाघोस्वेदतापौच प्रतिघोरोषघातयोः॥ परिघोयोगभेदेपि मेघोवारिदमुस्तयोः॥ २९॥ महार्घस्तुमहामूल्येपुंसि लावकपक्षिणि॥ पृक्कायांस्त्री लघुः क्लीबंशीघ्रेकृष्णागुरुण्यपि॥ ३०॥ ॥इति घांताः॥ ॥प्रतिमापूजयोरर्चा क्रौंचः पक्ष्यद्रिभेदयोः ॥ कूर्चमस्त्रीभ्रुवोर्मध्येश्मश्रुकैतवयोरपि॥ ३१॥ इष्यांस्त्रीगुरुपुत्रेनाकेशेशस्त्रव्रणेकचः॥ देशभेदेपि कांचीस्याद्रथस्थासकतर्कयोः॥३२॥ चर्चिकायांचचर्चा स्यात्त्वक्स्त्रीचर्मगुडत्वचोः॥ ग्रामजेपामरेनीचो नमुचिर्दितिजेस्मरे॥ ३३॥ मरीचिर्मुनिभेदेपि चौरचन्द्रीमलिम्लुचौ॥ कक्कोलेपिचमारीचो मोचाशाल्मलिरंभयोः॥ ३४॥ कुकुरेरतनाराचः शीत्कारेवरयोषितासम्॥ केतुग्रहेतु विकचो वीचिःसुखतरंगयोः॥ ३५॥ स्वल्पेपिसारिकायांच वचाग्रीष्मानलौशुची॥ सूचीनृत्यप्रभेदेच व्यधनीशिखयोरपि॥३६॥ ॥ इतिचांताः॥ ॥धाराहीवीरिका कृच्छ्रा कृच्छ्रोऽनूपेद्रुमांतरे॥ पिच्छा स्त्रीभक्तमंडेपि लांगूलेपिच्छमस्त्रियां॥ ३७॥ ॥इतिछांताः॥ ॥पद्मधन्वंतरीचाब्जौ अंडजः खगमीनयोः॥ निचुलेप्यंबुजोऽजस्तु ब्रह्मविष्णुस्मरेष्वपि॥ ३८॥ स्यादग्रजः स्मरेकेशे पुत्रेरक्तेनपुंसकम्॥

उत्साहकार्तिका भूर्जो कंबोजो देशशंखयोः ॥३९॥ नखे करंजे करजः कुब्जोन्युब्जोद्रुमांतरे ॥ खनौ स्फरागृहे गंजा गुंजेपटह कृष्ण ले ॥४०॥ जघन्यजोऽनुजेशूद्रेज लजं शंख पद्मयोः ॥ चिन्हशेफः पताकास्फरखङ्गांगेपि ध्वजो स्त्रियां ॥४१॥ नीरजं कमलेकुष्ठे पिंजा हिंसा हरिद्रयोः ॥ भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्येच पक्षिणि ॥४२॥ बुधैः ख्यातो भरद्वाजो द्रोणाचार्ये मुनावपि ॥ भृंगराजः खगे षध्योर्लेघनेसुनिभेषजं ॥४३॥ अगस्त्ये च हरीतक्यां रुजा स्या द्रोगभंगयोः ॥ गुल्मेपि वनजो बीजरे तस्ले लार्थहे तुषु ॥ ४४॥ व्याजश्शाठ्येपदेशेच स्वेदरक्तात्मजाः स्वजाः ॥ निसर्गे सहजः पुंसि स होत्थे वाच्यलिंगकः ॥४५॥ सन्नद्ध संभृतो सज्जो हिमजा पार्वती शची ॥ ॥इतिजांताः॥ ॥अज्ञस्त्रिषुजडे मूर्खे कृतज्ञः कुक्कुरेपिच ॥४६॥ संज्ञा सूर्यप्रिया यांच सर्वज्ञः शंकरे जिने ॥ ॥इतिञांताः॥ ॥अरिष्टं सूतिकागारे तक्रेपिच पुमांस्त्वयं ॥४७॥ काके निंबेच लशुने गर्ते कूपे खले वटः ॥ अत्यर्थक्षोमयोरट्टः कृताविष्टं प्रियेत्रिषु ॥४८॥ केशटः शोणकेविष्णौ कूर्पासमुदरे जले ॥ पुंश्चले कुंडकीटः स्याज्जाराच्च ब्राह्मणी सुते ॥४९॥ सपथे चक्रिया कारे कलिंजशरयोः कटः ॥ कोटिः संख्यापि करटो वाद्यभांड कुविप्रयोः ॥५०॥ कुलीरे कर्कटो राशौ कृष्टिः कर्षेबुधेपुमान् ॥ अप्रियेऽपि कटुः कुंभे कुटो नाभवने द्वयोः ॥५१॥ स्फरायांस्त्री कीकट स्फनिःस्वे देशे मितंपचे ॥ खेटः सिंघाणके हाने गृष्टिः धेन्वौषधीभिदोः ॥५२॥ सूकरे पुंसि घृष्टिः स्यात्स्पर्द्धाघर्षणयोस्त्रियां ॥ घोटा तु बदरे पूगे देहांशे वर्णने चटुः ॥५३॥ निःश्वासो दशनोच्छिष्टं भुंबदं तच्छिदेपिच ॥ परिमाणमुदोर्दिष्टिर्दिष्टः कालोपदिष्टयोः ॥५४॥ धाराटो चातक हयौ कपाटेपिच निष्कुटः ॥ कोटरे प्यथ पट्टः स्यात्फलके नृपशासने ॥५५॥ प्रत्याख्याते प्रेषितेच प्रतिशिष्टं त्रिलिंगकं ॥ पर्क

टीप्लक्षवृक्षेच पूगादेश्चनवेफले॥५६॥ वटीत्रिषुगुणेपुंसिन्यग्रो
धेचकपर्दके॥ वर्वटुर्यो व्रीहिभिद्ध्योनटोभरतकार्मुको॥५७॥
मोरटंगोर्नवेक्षीरे ऽकोटपुष्पेक्षुमूलयोः॥ म्लिष्टंम्लानेकुवच
नेमर्कटीभूकशिंब्यपि॥५८॥ लाटौशुकेचदेशेच घुष्टंकल्पेभि
भूषिते॥ पथिवास्कनिवाटःस्याद्विकूटंविकृतंहृतम्॥५९॥ व
कैराटःकटाक्षेचस्त्रीणांस्तननखक्षते॥ भद्रमेखणयोर्विष्टिर्व
र्णाटोकामिगायनौ॥६०॥ विटो ऽद्रौलवणेविट्ठेमूषिकेखदिरेपि
च॥ भ्रांतलोहेश्रुतिकटः प्रायश्चित्तभुजंगयोः॥६१॥ स्फुटिःस्फो
टेचकर्कट्यांत्हृष्टःप्रतिहतेपिच॥ ॥इतिटांताः॥ ॥
वैश्याद्विजन्मजेबष्ठःपाठयूथिकयोःस्त्रियां॥६२॥ काष्ठाकाले
पिकोष्ठस्तस्वकीयेप्यथस्कूध्वनौ॥ ग्रीवादेशेपि कंठःस्यात्कुष्ठं
रोगौषधीभिदोः॥६३॥ दान्मूहेकारुकंठस्याच्छिषखंजनयोरपि॥
ज्येष्ठोमासिचवृद्धेचज्येष्ठाचगृहगोधिका॥६४॥ अम्ललोण्यां
दंतशठानाजंबीरकपित्थयोः॥ प्रकोष्ठो बाहुगेहांसौ वरिष्ठम
रिचेपिच॥६५॥ ताम्रेचारुतरेचाथमध्यस्थखलयोःशठः॥ शो
ठोऽलसेचमूर्खेच सूत्रकंठो द्विजन्मनि॥६६॥ कपोतविहगे-
पिस्यात्स्थ्यांचप्रसभेहठः॥ ॥इतिठांताः॥ ॥ प्रा-
ण्यंगकोशयोरंडं कूष्मांडौ फलभिद्गणौ॥६७॥ कुंडंस्यातोख
योर्जारजेना कुंडी कमंडलौ॥ सिंहोत्क्रोशस्त्रीविषेक्ष्वेडःपशो-
क्रोडोननोरसि॥६८॥ खंडो ऽस्त्रीशकलेनेक्षुविकारमणिदो
षयोः॥ गंडःकपालेपिटकेश्रेष्ठगंडकयोःपुमान्॥६९॥ चंडौ
षधिःखरश्चंडोदंडौसैन्यार्कपार्श्वगौ॥ व्यथाकृपाचपीडेद्वेपां
डुःकुंतीपतौसिते॥७०॥ पिंडःसांद्रेगृहांशेगे पंडःषंडमतोस्त्रि
याम्॥ स्तंबेशस्ते प्रकांडोस्त्री वरंडो वदनामये॥७१॥ समू
हेचांतरावेद्यांमंडःस्यात्सारपिच्छयोः॥ एरंडेमस्तकनिक्कीवेमा
र्तंडोखगदंष्ट्रिणौ॥७२॥ राहौदैत्यांतरेमुंडोमूर्ध्निस्त्रीमुंडितेत्रि

षु॥ रंडा स्याद्विधवोषध्योर्विंतंडा शाकभिद्यपि॥ ७३॥ शिखंडो तु शिखा बर्हौ शुंडा करिकरः सुरा॥ ॥ इति डांताः
आषाढो व्रतिनां दंडे मासे मलयपर्वते॥ ७४॥ विवेदवाडिशो- मूढो राढा स्याद्दीप्तिदेशयोः॥ षंडकंचुकिनौ षंढो समूढः पुंजि तेनवे॥ ७५॥ भुग्नेनुपप्लुते प्येष वाच्यलिंगे उदीर्यते॥ ॥ इति ढांताः॥ ॥ अरुणो भास्करे सूरो मंजिष्ठाऽतिविषाऽरुणा॥ ७६॥ त्रिधा रक्ते व्याकुलेऽथ सूक्ष्मे ग्रीत्यंतरेप्यणुः॥ कील प्राण्याश्रि सीमास्फ स्याद्राणि वद्राणि द्वयोः॥ ७७॥ अभीक्ष्णं तु भृशे नित्ये स्याद्दिग्ध्राणो द्वयोषिति॥ स्त्री बंधे सिंधुवारे च चक्ष दर्शनमीक्षणं॥ ७८॥ उन्मूलनेप्युद्धरणमुष्णो दक्षेपि वाऽत पे॥ स्यात्सादने गीतनृत्यभेदे क्वाथस्थकर्मणि॥ ७९॥ करणं तु सिसंकार्ये कल्याणं कांचनं शुभे॥ कृष्णो वर्णे हरौ व्यासे कृ ष्णं मरिचलोहयोः॥ ८०॥ पिप्पली द्रौपदी कृष्णा हस्तसूत्रेपि कंकणं॥ श्रुतिराधेययोः कर्णः पिप्पल्यां जीरके कणा॥ ८१॥ कोणोऽस्त्री वाद्यलगुडे वधे हेतौ च कारणं॥ ग्रहणं स्वीकृ तौ हस्ते गुणः स्याद्रज्जुसूदयोः॥ ८२॥ अंगुष्ठानामिकोन्माने- गोकर्णो ऽ हौ मृगेपि च॥ नासिकाऽघ्राणयो घ्राणं चूर्णं गंधयु तावपि॥ ८३॥ वेतांशे वक्रचारी च भ्रष्पादेपि चाऽस्त्रियाम्॥ चरणश्रीर्णपर्णो स्तरवज्रशपिचुमंदयोः॥ ८४॥ जेतरी द्रर्जुने जिष्णुर्घूणिः कठिन पूगयोः॥ तरुणः कुंजपुष्पेपि त्राणं र क्षितरक्षयोः॥ ८५॥ दुर्वर्णं रजतेपि स्यात्द्रोणोऽलिः कच्छ पी द्रुणी॥ द्युमणो तरणिः पुंसि कुमारी नौकयोः स्त्रियां॥ ८६ ॥ काष्ठागारे बुवाहिन्यां शैलसंधौ च योषिति॥ द्रोणी नस्त्री मानभेदे द्रोणः काके कृपापतौ॥ ८७॥ दक्षिणा दिशि दाने च दक्षिणः सरलेपि च॥ असती स्याद्धर्षणी च धर्षणा निकृ तौ रते॥ ८८॥ बुद्धगंत्रे नाडिकायां धारणं यथन मज्जने॥ निर्वा

णं निर्वृतौ मोक्षे प्रघणोऽस्त्रगृहांशयोः ॥८९॥ बोऽलेवाते बलेप्राणः पूर्णेपुंभूम्नि चाऽकृषु ॥ पर्णपक्षेच पत्रेच प्रोक्षणं सेचने वधे ॥९०॥ ग्रंथेकार्षापणेचास्त्री पुराणमनवेत्रिषु ॥ पार्ष्णिः पादव्यूहपृष्ठे वाणी श्रुतिश्चभारती ॥९१॥ मंत्राख्यवेदविप्रोयेक्लीबं ना ब्राह्मणोद्विजे ॥ लिंगाग्रेऽलिंजरे मौक्तिकादौस्त्री पुंसयोर्मणिः ॥९२॥ अजागलस्तनेचापि मसृणोमृदुकर्कशौ ॥ निश्मश्रुपुरुषोद्दंशौ मत्कुणावथरोहिणी ॥९३॥ नक्षत्रेरोहितायांच रणः क्वणनयुद्धयोः ॥ लक्ष्मणासारसीदाशरथिः श्रीमांश्चलक्ष्मणः ॥९४॥ छागेपिलंबकर्णः स्याद्वेणुर्वंशेनृपांतरे ॥ वाणाझिंट्यां शरे वाणे वृष्णिर्यादवमेषयोः ॥९५॥ कर्णेश्रुतौच श्रवणं शरणं मारणेपिच ॥ श्रेणिः पंक्तौसेकपात्रे नक्लीबं कारुसंहतौ ॥ ९६॥ कषेमापचतुष्केच शाणः शोणोनदेऽरुणे ॥ पक्वेश्राणं यवाग्वांस्त्री श्रीपर्णीगणिकारिका ॥९७॥ पद्मेच श्रमणाभिक्षुक्यां मुंडीर्यांच दृश्यते ॥ सुवर्णं मानभेदेपि स्थूणा भूमेचिदारुच ॥९८॥ स्थाणुःशंकुशिवौविष्णूः सूषेणः करमर्दके ॥ कपिवैद्येचाथ स्यूतो हरणं यौतकेपिच ॥९९॥ इतिणान्ताः ॥ ॥ मोक्षः सुधायज्ञशेषोऽयाचितं वारिचामृतं ॥ अमृता तुगुडूच्यां स्याद्धरीतक्यामलक्यपि ॥ २०० ॥ शेषेविष्णावनंतोनागुडूचीदूर्वयोस्त्रियां ॥ क्लीबंखेत्रिषु नत्वधावर्षमंतं मरणे शुभे ॥१॥ तुल्यांच पूर्णिमाभेदेऽनुमतिः संमतावपि ॥ स्वरूपेंतं विनाशेनान स्त्री शेषेऽतिकेत्रिषु ॥२॥ गतेशीलेप्यवसितमर्वताश्वकुत्सितौ ॥ अर्वतीकुंभदास्यांचार्थार्दितं भार्थितेहते ॥३॥ क्षिप्ताद्रिभेदयोरस्तः स्याल्लाजेष्वपिचाक्षतं ॥ कृपावसत्येप्यनृतमाकृतिर्जातिरूपयोः ॥४॥ आप्तोलब्धहितौ दैर्घ्येभाविकालेपिचायतिः ॥ आचिलः शाकटोन्मेप्यावर्तश्चिंतनेऽपिच ॥५॥ आयस्तस्तेजितेक्षिप्तेऽथाख्यातं तिङिभाषिते ॥ अंशो

तदालेचापातआहतंगुणितेहते॥ ६॥ मृषोक्तेचाथदग्धेस्यात्दु
षितंस्थितवत्यपि॥ अवसानार्तयोःपर्यक्तउदितंप्रोक्तउद्गते॥
७॥स्याद्धुस्तूरेपिचोन्मत्तःक्षिप्तेमृष्टेपिचोन्दृतं॥उत्तसंशःफक्मांसे
पिबन्धुत्यातेप्युपाहितः॥८॥उदास्थितश्चरेद्वास्थेस्याहृतिःस्मृ
तिरक्षयोः॥ऋतमुञ्छशिलेसत्येएतावागतकर्बुरो॥९॥ऐरावतो
नागरंगेप्यथकांतिर्द्युतीच्छयोः॥किरातोम्लेच्छभूनिंबोकांतृस्त
प्रियरम्ययोः॥१०॥केतुर्ग्रहोत्पातचिन्हेकलितंविदितात्मयोः॥
कपोतःपक्षिमात्रेपिगुप्तंरक्षितगूढयोः॥११॥गतिर्यात्रादिशो
पायाश्शंदःसूर्यश्चगोपतिः॥गृहीसत्रीगृहपतिर्गीतंशब्दित
गानयोः॥१२॥गर्जितंस्तनितेनेभेग्रस्तंवाग्भेदभुक्तयोः॥चर्मण्व
त्यांनदीरंभेजातंव्यक्तौघजन्मसु॥१३॥सूर्यावर्तेऽपिजामाता
नावातेपिष्टपेजगत्॥जातिश्छंदसिमालत्यांचुल्यांजातीफले-
कुले॥१४॥व्यासविस्तृतवाद्येषुततंतिक्तःसुगंध्यपि॥चापेतृण
लेत्तृणता तानःपित्रनुकंपयोः॥१५॥दुर्गतिर्नरकेनैःस्व्ये दुर्जा
तंव्यसनेपिच॥दिवाभीतउलूकेस्यात्कुभिलेकुसुदाकरे॥१६॥
विसृष्टेरक्षितेदत्तंद्रुतंशीघ्रविलीनयोः॥दशनेशैलशृंगेच दं
तःस्याद्दोषधौस्त्रियां॥१७॥दितीखंडनदैत्यांबेधृतिस्तुष्टोक्
तावपि॥राशौचधातुर्निर्वाणेस्तस्थितलेचनिर्वृतिः॥१८॥अस्वा
ध्यायेकुरूपेचभत्कत्कौस्त्रीनिराकृ भू॥जंघांस्त्रीनानदीकांतः
सिंधुवारेजलाऽब्धिषु॥१९॥निमित्तं [illegible] न्हागंतुदेवादेशपर्वसु
॥प्रसृतःकुञ्चितेपाणौजंघायांस्त्रीगे [illegible] त्रेषु॥२०॥प्रकृतिर्गुण
साम्येस्यात्स्वभावामात्ययोरपि॥प्रतीकारेप्रतिकृतिःप्रतिबिंबे
ऽथपद्धतिः॥२१॥पंक्तौमार्गेपिपूतंतुपवित्रेबहुलीकृते॥श्रेणि
दशचपंक्तिःस्यात्प्रसूतिर्जन्मतोकयोः॥२२॥प्रतिपत्तिश्चिस्प्रवृ
त्तिःप्राप्तिःप्रागल्भ्यगौरवे॥पारावतीगोपगीतिलवलीफलयो
रपि॥२३॥पलितंकर्दमेपिस्याद्वृद्धोभूपेप्रजापतिः॥शक्तेनि

वारणेत्रसोपर्यासंस्याद्यर्थेऽसिते॥२४॥ प्रेतोमृतेप्राणिभेदेपित्स
न्यातेच्छुपक्षिणोः॥ क्लीबंबिंदौपृषन्मेणेपृषतोप्यनयोर्नरि॥२५
॥ खातादौपूरितेपूर्तंपातोभ्रंशेचरक्षिते॥ प्रेषितेपिप्रतिक्षिप्तं
प्रतीतःसादरेपिच॥२६॥ प्लुतःस्वरेचाभियुक्तहेतोचप्रार्थितौ
समौ॥ द्विष्टेपिचप्रतिहतः पिंडितंगुणितेघने॥२७॥ प्रामेज्ञातेप
रिगतंप्रपातौभृगुनिर्झरौ॥ लोकायतेकच्छपेच पंचगुप्तःस्मृ
तोबुधैः॥२८॥ लब्धेसमंजसेप्राप्तंपंक्तिगौरवपाकयोः॥ पारि
जातौदेवतरोमंदारेपारिजातके॥२९॥ वृत्तिवार्त्ताप्रवाहेषुप्रवृ
त्तिरथघोटके॥ पानेचपीतिःसिक्तेतुप्रोक्षितंनिहतेपिच॥३०
॥ रामानुजेनाट्यशास्त्रेदोष्यतोभारतोनटे॥ जिनपूज्येचभगवा
न्भोगवान्नाट्यनागयोः॥३१॥ सेवाविभागयोर्भक्तिर्भवान्यु
ष्मत्सदर्थयोः॥ पक्षिण्यांवाचिवृत्तौचभारतीभारतंपुनः॥३२॥
जंबुद्वीपेव्यासकृतौभृतिर्भरणमूल्ययोः॥ कुड्यभेदनयोर्भित्ति
र्भास्वंतौसूर्यभास्वरौ॥३३॥ पृथिवीजननीगावोब्रह्माण्याद्याश्च-
मातरः॥ मूर्धाभिषिक्तोऽमात्येपिमुक्तोनिर्वृतमोचितौ॥३४॥ मू
र्तस्यात्त्रिषुमूर्च्छालेकठिनेमूर्तिमत्यपि॥ मतिरिच्छाऽव्यथयातिः
पाठछेदेमुनौपुमान्॥३५॥ न्याय्ययोजनयोर्युक्तिःपाश्यबध्वीयाद
सांपती॥ रेवतीहलिपत्न्यांभेस्मरपत्न्यांचरेवतिः॥३६॥ रिक्तंव
नेपिरीतिस्कलोहकिट्टा[illegible]कु[illegible]योः॥ रोहितमृजुशाक्रास्त्रेरक्तेनामृ
गमीनयोः॥३७॥ शोल[illegible]माभे[illegible]वर्णोलोशंकरेपिचरैवतः॥ स्वर्णोभ्य
क्तेपिरसितंकस्तूर[illegible]योर्लता॥३८॥ वर्तुलाधातयोर्वृत्तंवार्त्तं
कुशलनीरुजोः॥ वासेपिवसतिर्वृक्षमात्रेपिचवनस्पतिः॥३९॥ वृ
तेनेधिवृतौवृत्तिर्वर्तिर्दीपदशास्वपि॥ लाभसंबंधयोर्व्याप्तिर्वि
श्वस्ताविधवापिच॥४०॥ छेदेविनाशेविच्छित्तिर्विगतौवीतनिष्प्र
भौ॥ असाराश्वेभयोर्वीतंवीतमंकुशकर्मणि॥४१॥ अभ्युपते
विकसितेचेष्टितेचविजृंभितं॥ विकृतौरोगिबीभत्सौवित्तंख्या

तेधनेपिच॥४२॥ दृढेपि व्यायतंशुक्तिर्मुक्तास्फोटाश्वलक्ष्मणोः॥ अ
स्त्रभेदेपिशक्तिःस्याच्छांतिःस्यान्मंगलेशमे॥४३॥ वेतसेपिचशीतो
ना शुक्तं पूताम्लनिष्ठुरम्॥ शितिर्भूर्जेऽसिते कृष्णे श्रीमंतौति
लकेश्वरौ॥४४॥ ब्रह्मशाक्कोशातधूर्तौ वार्तायांश्रवणेश्रुतिः॥ दुर्ब
लेनिशितेस्यातांशितशातावथोवचः॥४५॥ सरस्वतीसरिद्वोश्च
सूतौबंदिनिपारदे॥ स्मृतिःस्याद्धर्मशास्त्रेपिप्रवाहेपिचसंसृ
तिः॥४६॥ रणेसभायांसमितिस्तिमितौक्लिन्ननिश्चलौ॥ स्थप
तिःकंचुकीकारुभेदेगीष्पतिजागकृत्॥४७॥ संबंधेपिचसंवि
त्तिर्मर्यादायामपिस्थितिः॥ सीतालांगलरेखास्याद्व्योमगंगाच
जानकी॥४८॥ सूनृतंकुशलेसत्येस्त्रदोहागोश्चसुव्रता॥ शर्करा
पिसिताथोर्धेसत्यलिज्ञेपिचस्थितः॥४९॥ सतीकात्यायनीसा
ध्व्योःसंघातौनरकेचयें॥ हरीतकीहैमवतीगौरीशक्रुवचाव
पि॥५०॥ स्त्रीहारिर्हरितवर्णेनादूर्वापिहरितामता॥ ॥इति
सांताः॥ ॥अतिथिःकुशपुत्रेपिहरीतक्यापिचाव्यथा॥५१॥
अपेक्षाऽऽलंबनंचास्थास्यादर्थोविषयेपिच॥ भटेपुंस्यप्रतिरथं
यात्रामंगलसाम्निच॥५२॥ उन्माथःकूटयंत्रेपिकुथःकंबलब
र्हिषोः॥ काशेकृतेचक्षवथुर्ग्रंथोद्वात्रिंशदक्षरी॥५३॥ धनंचग्रं
थनाचापितीर्थंतूपाययोगयोः॥ कटंशघोणयोःप्रोथोवीथी
पंक्तौगृहांशके॥५४॥ वानप्रस्थोमधूकेपिस्यात्तृतीयेपिचाश्रमे
॥काकोल्याऽमलकीब्राह्मीवयस्थातरुणेत्रिषु॥५५॥ सूर्यमंथा
नयोर्मंथःसांतरेप्यथमन्मथः॥ कपि[illegible]मदेवेपिरथःपौरु
षदेहयोः॥५६॥ पुंसिस्त्रियांचषड्ग्रंथ गुल्फे जवचयोःक्रमात्॥
सिद्धार्थःसर्षपेबुद्धेसंस्थास्थिति विनाशयोः॥५७॥ संस्थास
मासिकृत्युष्व वरूथोनिजरापृकः॥ सिक्थोभक्तपुलाकेनाम
धूच्छिष्टेनपुंसकं॥५८॥ ॥इतिथांताः॥ ॥अ
ष्टापदंशारिफलेस्रुवर्णेस्त्रीपशौपुमान्॥ वामनेभ्यांस्त्रियांक्लीं

बंकेयूरेनांगदः कपौ॥५९॥ अर्बुदोरुजिसंख्यायामामोदोगं धहर्षयोः॥रहस्येस्यादुपनिषत्समीपेसदनेपिच॥६०॥ कंदो स्त्रीभूरणेमूलेराजलिंगविषाणयोः॥स्त्री कंकुस्कंदुकंदस्तश्टं गवेररसोनयोः॥६१॥ स्त्रीगंभार्याक्लीबमब्देदिङ्नागेकुमुदःक पौ॥पुष्पेक्लीबंभ्रमोकुंदःक्षोदोरजसिपेषणे॥६२॥शिवजूटेव राटेपिकपर्दोथामयेगदः॥विष्णोर्भ्रातरिचास्त्रेस्त्री पलाशेग रुतिच्छदः॥६३॥देशेजनेजनपदोनिषादोश्वपचस्वरो॥वा क्येशब्देऽप्रदेशेपिपदंपादस्तनद्वयोः॥६४॥मूलेप्रत्यंतशैले चप्रसादस्त्वनुरोधने॥स्वच्छेकाव्यगुणेचाथप्रतिपत्तिथिसं- विदोः॥६५॥ विप्रुट्ज्ञाताचबिंदुःस्यान्मंदोस्वैरशनेश्वरो॥हस्ति भेदश्चाथमदःस्यात्कस्तूरीमदानयोः॥६६॥गर्वेशक्रेथमाकं द्या मलक्यांनाऽस्त्रपादपे॥मर्यादाधारणासीम्नोर्महानादो गर्जेपिच॥६७॥मेनादास्तत्रयश्छागमार्जारकशिखंडिनः॥वि शदःपांडरेव्यक्तेशारदोजलदेपिच॥६८॥स्त्रियांचशारदीतो यपिप्पलीसप्तपर्णयोः॥संवित्संकेतकेपिस्यात्समयोदोंतिके स्थिरे॥६९॥व्यंजनेसूपकारेचसूदःसूपवदिष्यति॥घर्मस्वेद नयोःस्वेदःसंपल्लक्ष्म्यांसमुच्चये॥७०॥ ॥इतिदांताः॥

॥ ॥खंडेनासमभागेऽर्धमवधिःसीमकालयोः॥आ विद्धंप्रहतंवक्रमानद्धंवाद्यबद्धयोः॥७१॥अलंकारोपिचा बद्धःप्रत्याशाप्याधिरुच्यते॥कुटुंबव्यापृतेधर्मचिंतायांचवि शेषणे॥७२॥उप[illegible]रुग्रगंधेतुभ्रचाक्षेत्रयमानिके॥उ पलब्धिमतिप्राप्त्योर्[illegible]द्धिःसंपदिच्चोषधे॥७३॥रांहोशिरःशू न्यकायेकबंधःक्लीबमंबुनि॥गोधातलेनिहाकायांगंधो गर्वेबलेपिच॥७४॥द्रोग्धागोपेकवौवत्सेदुग्धंक्षीरेप्रपूरि ते॥दिग्धंलिप्तेविषाक्तेचदुर्विधोखलुदुर्गतौ॥७५॥रोधो- निरोधेनाशेचबुद्धोज्ञातेजिनेबुधे॥निषेधवृद्धयोर्बाधो रोः

हिणेयकचौ बुधः ॥७६॥ दैत्यचैत्रवसंतेषु द्रुमभेदे च ना मधुः ॥
मिद्धं चित्ताभिसंक्षेपे निद्रायां चाथ मागधी ॥७७॥ पिप्पल्यां यू-
थिकायां नालग्ने मगधजे त्रिषु ॥ लशुनेऽतिविषायां च शुंठ्यामपि
महौषधं ॥७८॥ सीता योजनगंधा स्यात्कस्तूरी व्याससूरपि ॥ वि-
धिर्ब्रह्मणि काले च प्रकारे वेधने विधा ॥७९॥ पृक्कामहिला च वधू-
र्विश्वस्तो नुद्धतश्च विश्रब्धः ॥ विश्रब्धं बाढार्थे शुद्धं त्रिषु पूलकेव-
लयोः ॥८०॥ श्रान्द्धं निवापे श्रद्धालौ त्रिषु साधुर्धनिन्यपि ॥ स्कंधः
संघेपि सिद्धस्तु नित्यनिष्पंदनादिषु ॥८१॥ संधिः पुमान्सुरुंगा-
यां भेदे संघट्टने भगे ॥ ॥इति धांताः॥ ॥कुले ख्या-
ते चाभिजनः स्यादध्वा कालवर्त्मनोः ॥८२॥ इति वृत्तेऽवदानं स्या-
त्कर्म खंडनयोरपि ॥ अग्रजन्माऽग्रजे विप्रे स्यादन्नं भक्तभुक्तयोः
॥८३॥ विनीते विप्रभेदे चानूचानोऽर्थाविवाद्यपि ॥ अंतावसायी
चांडाले मुनिभेदे च नापिते ॥८४॥ अम्बकुत्सितयोर्गो वज्रे विद्यु-
ति चाशनिः ॥ वर्णमात्रे विसर्गे चाभिनिष्ठानोऽथ हे हये ॥८५॥ पार्थे
द्रुमे मयूरे ना अर्जुनस्त्रिषु पांडरे ॥ अर्जुनी गव्युषायां च भृंगशृंखि-
कयोः स्त्री ॥८६॥ आत्मा मनोप्याकलनं विबंधपरिसंख्ययोः ॥
आवेशनं शिल्पगेहे भूतावेशोऽथ गेंडुके ॥८७॥ विशेषे चोपधा-
नं स्याद्वृत्तुल्या मुद्धानमुद्गमे ॥ अगंभीरेपि चोत्तानः शराभ्यासे प्यु-
पासनं ॥८८॥ स्यात्कात्यायन्यर्धवृद्धा गौर्यो वैररुचौ नरि ॥ शि-
शीषाम्नातकाश्वत्थगर्दभांडे कपीतनः ॥८९॥ चीरेपि कौपीनम-
श्वे पुन्नागेपि च केसरी ॥ कुलीनत्वे च गुप्त्वेन कौलीनमथ कंचु-
की ॥९०॥ स्थापत्ये वर्मिते सर्पे कूसोच्छेदे च कल्पनं ॥ कामिनोस्त्रि-
णञ्च क्रौंच कृतिनौ योग्यपंडितौ ॥९१॥ कांचनं तु हेम्नि नागकेस-
रे कांचनी निशा ॥ धातुवादरते कांस्यकारे कारंधमी नरि ॥९२॥
चर्चिकाञ्चिल्लदयिते रवकामिन्यौ प्रकीर्त्यते ॥ विषदिग्धपशो
मांसे गृंजनं नारसोनके ॥९३॥ गहनं गह्वरे दुःखे वनेथांबुदसु

स्तयाः॥ घनःपुंसि घनं वाद्यं चर्मस्यात्फलकत्वचोः॥९४॥ ची
नो वस्त्रव्रीहिभेदे चिन्हं लक्ष्म पताकयोः॥ चक्रिणो विष्णुभुजग
कुलालग्रामयाजिनः॥९५॥ कंपेनाचलनं कंपे चलनी वस्त्रघर्घ
री॥ भूर्जे फलकपाणौ च चर्म्यथा लंबुषे पुमान्॥९६॥ निंबेपि छ
र्दनं वांते जवनो देशवेगिनोः॥ बुद्धे जिनो जित्वरे च जीवनं वर्त्त
नांभसोः॥९७॥ शूरे दातरि च त्यागी प्रतिशोच्यौ तपस्विनौ॥ त
पनो नरके भानौ विरलेऽल्पे कृशे तनुः॥९८॥ क्रीडादौ देवनं ना
क्षे द्विजन्मा दंतविप्रयोः॥ दानं गजमदे त्यागे खंडने रक्षणेपि च॥
९९॥ दर्शनं वर्णमुकुरचक्षुःशास्त्रोपलब्धिषु॥ स्त्री दीर्घकोष्यां दु
र्नामाऽर्शसि द्युम्नं बले धने॥३००॥ धन्वा मरौ धन्व चापे धावनं ग
तिशौचयोः॥ निर्भर्त्सनं खलीकारालक्तयोरथ नंदनं॥१॥ देवो
द्याने सुते पुंसि नग्नौ क्षपणवंदिनौ॥ श्रुतौ हृष्यां निशमनं खगं
गापि नलिन्यथ॥२॥ ग्रंथिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि॥ प्र
तिमानं प्रतिच्छायागजगंतांतरालयोः॥३॥ पाकस्थाने कुलाल
स्य घाते च पवनः पुमान्॥ हरीतकी राक्षसी च पूतनाऽथ वदा
न्ये॥४॥ पाठीनो गुग्गुलुद्रौ च रक्षो वृक्षौ पलाशिनौ॥ फाल्गु
नो मासि पार्थे च स्त्री विदग्धा च वाणिनी॥५॥ वर्धमानः प्रभभे
दशरावेरंडविष्णुषु॥ सेनानदी च वाहिन्यौ छेदे वृद्धौ च वर्धनं
॥६॥ भुवनं विष्टपे तोये भिन्नं दीर्णे विशेषिते॥ जन्माश्रयश्च भ
वनं भाजनं पात्रयोग्ययोः॥७॥ भूतिकांचनयोर्भर्म मलिनं
भूषितेऽसिते॥ मानं प्रमाणे तौल्ये च मीनो राश्यंतरे झषे॥८॥
मदनाः सिक्थधूस्तूर तरुभेदमनोभवाः॥ मुनिर्वाचंयमे बुद्धे
छंदस्यपा च मालिनी॥९॥ मातुलानी तु भंगायां मातृभ्रातृ
स्त्रियामपि॥ राशौ युग्मे च मिथुनं विष्वली मधुसूदनौ॥१०॥
यापनं स्यान्निरसने कालक्षेपे च वर्त्तने॥ चतुःक्रोश्यां च योगे
च योजनं स्यात्तु वाहने॥११॥ गतौ च यानं योनिस्तूत्पत्तिस्था

नेभगेऽपि च॥रसनं तु ध्वनौ स्वादे रसज्ञा रास्नयोः स्त्रियां॥१२॥यक्ष्मे
चंद्रे च राजा स्यात् रक्तः कामि च रागिणौ ॥गोपित्ते रोचना कूटशा
ल्मलौ रोचनः पुमान्॥१३॥निशा हरिद्रा रजनी छंदे भूर्जे च लेखने
॥राशीनामुदयो लग्नं सक्तलज्जितयोस्त्रिषु॥१४॥योषिज्जिह्वा
च ललना लक्षणं नामचिन्हयोः॥रिक्ते वितानमुल्लोचे विलग्नं
मध्यलग्नयोः॥१५॥दैवानिष्टफले सक्तौ व्यसनं निष्फलोद्यमे॥स्व
तंत्रता च व्युत्थानं वामनो विष्णुदिग्गजौ॥१६॥खर्वश्चाथऽफले
शफे यानं स्थूलेकटंगतौ॥वृषपर्वा शिवे दैत्ये वेष्टनं मुकुटे गतौ
॥१७॥वेशकारेपि विषयी कामिनि क्लीबमिंद्रिये॥वृक्षादनी स्या
द्वंदायां स्त्रियां कुठारक पुमान्॥१८॥समालब्धे विभक्ते च विच्छिन्नं
वाच्यलिंगकं॥लब्धे ज्ञाते स्थिते विन्नं वेदना ज्ञानपीडयोः॥१९॥
वर्तनी तर्कुपीठेपि स्त्रियां वर्तन वर्त्मनोः॥ वनश्वा जंबुके व्याघ्रे
विपन्नोऽहौ विपद्गतौ॥२०॥दैवशंसिनिमित्ते च शकुनं पुंसि पक्षि
णि॥चूडावान्कुक्कुटश्चापि शिखी भृंगारिणौ स्त्रियौ॥२१॥कमु
कश्च सुवेशश्च पार्थद्वोः श्वेतवाहनः॥मयूरे भीष्मशत्रौ च शि-
खंड्यथ विहेठनं॥२२॥विहिंसायां विडंबे च यमे नाशमनं वधे
श्येनः शकुपक्षिभेदे शकुनिः सौबले खगे॥२३॥धान्यभेदे पुमा
न् षष्टिहायनः कुंजरेपि च॥नासाधो मज्जनं कूर्मो साधनं सि
द्धमेढ्रयोः॥२४॥समानो देहवायौ च संस्थानं मृत्करूपयोः॥सं-
तानः संततौ देववृक्षे चापत्यगोत्रयोः॥२५॥क्रतौ स्नाने च सवनं
मरणेपि समापनं॥स्यंदनं स्रवणे ना तु रथे तिनिशपादपे॥२६
॥सुप्तज्ञाने च शयने स्वप्नोऽथ स्पर्शदानयोः॥स्पर्शनं स्पर्शनो
वातः सूनं पुष्पे फलेपि च॥२७॥सेवनं सीवनोपास्त्योः शाश्वता
औ सदातनौ॥पुत्रे रवौ च सूनुः स्यात् भ्रातर्यपि कनीयसि॥२८
सीमा वाटे स्थितौ क्षेत्रे स्वामी भर्तरि षण्मुखे॥धूमवंशश्च राम
त्याः स्कपर्वाणः प्रकीर्तिताः॥२९॥हनुर्हट्टविलासिन्यां कपोला

वयवेपिच॥ ॥इतिनांताः॥ ॥सजलेमहिषेऽनूपो
ऽवलेपःसंगगर्वयोः॥३०॥आक्षेपोभर्त्सनाकृष्ट्योराकल्पोवे
शकल्पने॥तृणभिद्गुल्मिन्युलुपंचंद्रेनाम्न्युडुपःप्लवे॥३१॥क
ल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने॥धान्येकुशेष्टमांशान्हः
कुतपःश्छागकंबले॥३२॥गुणवृक्षेपिकूपोविदूसार्योस्त्री।कुण
पःशवे॥जिह्वापःश्वनिमार्जारेत्रपुसीसकरंगयोः॥३३॥पादुका
यांस्त्रियांवृक्षेपादपीठेचपादपः॥पिंडपुष्पोजवाशोकोपुष्पंकु
सुमआर्तवे॥३४॥ग्रंथावृत्तौपशौशब्देस्वभावेनाटकादिषु॥रूप
माकारसौंदर्यमानकेष्वपिदृश्यते॥३५॥शररोपणयोरोपोलेपो
लेपनजेमने॥विटपःपल्लवेस्तंबेषिड्गेमेदोविलंवपा॥३६॥आक्रो
शेशपथेशापःस्वापःशयननिद्रयोः॥ ॥इतिपांताः॥ ॥
त्रिषुस्यात्कुत्सितेरेफोरवर्णेतुपुमानयं॥३७॥ इतिफांताः
॥ ॥गजेग्रीवाविलेकंबुःकलंबःशरनालयोः॥वृंदेकदंबो
नीपेनाकादंबोशरपक्षिणोः॥३८॥प्लीहविप्लवयोर्डिंबःप्रलंबो
दैत्यशाखयोः॥बिंबोबिंबफलेरूपेसंबस्कमुसलानने॥३९॥क
ल्याणवतिवज्रेचहेरंबोमहिषेऽपिच॥ ॥इतिबांताः
॥ ॥स्वर्णारंभावष्टंभोवाणीछंदोप्यनुष्टुभो॥४०॥आ
रंभउद्यमेदर्पेकामेब्रह्मणिचात्मभूः॥ऋषभोश्रेष्ठवृषभोकर
भोऽधःकरोष्ट्रयोः॥४१॥कुंभोवारस्त्रियाःकांतेरक्षोराशिप्रभेद
योः॥वीणाप्रसेवेककुभोनगभेदेऽर्जुनद्रुमे॥४२॥गर्दभःशु
क्लकुमुदेखरेपुंस्यथदानवे॥जंबारेव्यवहारेचजंभोदंतेपिचे
ष्यते॥४३॥दुंदुभिर्दैत्यभेदेपिदंभःकैतवकल्कयोः॥दुर्लभः
कच्छुरेकाम्येसदृशव्याजयोर्निभः॥४४॥सुरव्यराट्क्षत्रयोःपुं
सिनाभिःप्राण्यंगकेद्वयोः॥चक्रमध्येप्रधानेचस्त्रियांकस्तूरिका
मदे॥४५॥भूर्भूमौस्थानमात्रेचभमृक्षेभृगुजेपुमान्॥रंभाक
दल्यप्सरसोर्विभुःस्यात्स्वामिभृत्ययोः॥४६॥पुनर्नवायांवर्षाभूः

स्त्री नाकिंचुलुके प्लवे॥ विस्रंभः केलिकलहे विश्वासे प्रणयेपिच ॥४७॥ सुरभिः स्याद्वसंतेपि सभा द्यूतालयेपिच॥ ॥इति भांताः॥ ॥अभ्यागमो विरोधेच शास्त्रमायातमागमः॥४८॥ मठादौ ब्रह्मचर्यादिचतुष्के चाश्रमो स्त्रियां॥ अंगीकृताबुपगमः समीपगमनेपिच॥४९॥ उमा दुर्गातसीचाथ पीडायां वीचिवेगयोः॥ वस्त्रसूक्ष्मेच रेखायां चोर्मिः स्त्रीपुंसयोर्मलः॥५०॥ कुसुमं स्त्रीरजःपुष्पं क्षेमं कल्याणरक्षयोः॥ क्षेमा चंडाऽथ कल्मा लेखनी चौरशालयः॥५१॥ रेतोनि कामका म्येषु कामं पुंसि स्मरेच्छयोः॥ क्षौमं पट्टे दुकूलेच ग्रामः संवसथे स्वरे॥५२॥ गुल्मः स्तंबे यट्टभेदे घर्मः स्वेदातमोघस्र॥ जिह्मः स्यात्कुटिले मंदे तलिमं तल्पकुट्टिमे॥५३॥ तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे॥ द्रुमो यक्षेश्वरे वृक्षे दमोदमथुदंडयोः॥५४॥ धर्मोऽहिंसोपमायोगो पनिषत्सु धनुष्यपि॥ कटेलुंठ्यांच निगमो नियमो निश्चये व्रते॥५५॥ यंत्राणा बंधयोश्चाथ पंचमः स्वरसंख्ययोः॥ पद्मो स्त्री बिंदुजालेऽब्जे व्यूहे संख्यांतरे निधौ॥५६॥ गजानां दंतबंधेपि प्रतिमाऽनुकृतावपि॥ भूमिः स्थानेपि कुंदाबुनिर्गमभ्रांतिषु भ्रमः॥५७॥ गांगेयभीषणौ भीष्मो भीमः शंभौच पांडवे॥ नरके मंगले भौमः स्वरे मध्येच मध्यमः॥५८॥ यमः संयमकीनाशयुग्मजेष्वथ राघवे॥ रामः पर्शौ भार्गवेच रुक्मं लोहसुवर्णयोः॥५९॥ संपत्कमलयो र्लक्ष्मीर्विभ्रमो भ्रमहावयोः॥ श्यामा गुंद्रा कोकिलाच श्यामो मेंडपकालयोः॥६०॥ सार्वभौमो गजे राज्ञि संभ्रमौ साध्वसादरौ॥ ॥इतिमांताः॥ ॥भिन्नासमानयो रन्यः स्याद्दभिख्या यशस्यपि॥६१॥ आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च नासुनौ॥ आश्रयः स्कंध आधारे आदित्यो भास्करे सुरे॥६२॥ वेदोपदेशा वम्नायो ह्यधाकेरेनसीद्रियं॥ इज्या स्यात्संगमे दाने यागेर्चायां गुरौ पुमान्॥६३॥ उदयोऽद्रावुन्नतौच कषायः सुरभौ रसे॥ कायः स्वभावे लक्षे च संघे-

मूर्तोकदेवने॥ ६४॥ कौकृत्यमनुतापेस्यादयुक्तकरणेपिच॥ कश्यं कशार्हेमद्येच काद्रवेयौ हिरंगयोः॥ ६५॥ काव्यंप्रबंधेशुक्रेना कुलायः स्थाननीडयोः॥ गव्यंगोहितदुग्धादौज्यायांगव्यातु गोकुले॥ ६६॥ गांगेयं गोप्यौ गोमव्यचेदकौ॥ गातव्यगायनोगेयौगृह्यमस्वैरिपक्षयोः॥ ६७॥ चैत्यमायतनेबुद्धविप्रोद्देशकवृक्षयोः॥ चक्षुष्यस्कभगेचक्षुर्हितेस्त्रोतकेतकेपिच॥ ६८॥ युद्धेहद्वेचजन्यंस्याज्जास्यान्मोव्यक्षितावपि॥ कूटायुर्गुग्गुलुद्रोणत्रिवेदाग्नित्रयेत्रयी॥ ६९॥ निंद्येवस्त्रगृहेदूष्यंदस्यूतस्करवैरिणौ॥ भेषजेद्रुविकारेचद्रव्यंभव्येचपित्तले॥ ७०॥ द्वितीयातिथिभित्सल्योः पार्थंनोच धनंजयः॥ निकायोसंघनिलयौनित्यंसततशाश्वते॥ ७१॥ पर्यायःस्यात्प्रकारेपिप्रायोनाभूमतुल्ययोः॥ पथ्यंहितेभयापथ्यापानीयंपेयनीरयोः॥ ७२॥ पौलस्त्यौरावणश्रीदौस्वर्गलाभौफलोदयौ॥ ब्राह्मण्यंब्रह्मसंघेपिबालेयौमृदुगर्दभौ॥ ७३॥ वीर्यंप्रधानधातौच भीयंभीकुअपुष्पयोः॥ अनर्थानेसहायेचभुजिष्योहस्तसूत्रयोः॥ ७४॥ स्यान्मायाशांबरीबुद्धौदैत्यशिल्पुक्त्योर्मयः॥ मयुरश्वेकतुहयेरूप्यंत्रिषुसरूपके॥ ७५॥ आहतःस्वर्णरजतेरजतेचनपुंसकं॥ वत्सेबलेबुधेरौहिणेयोथश्लेषवाद्ययोः॥ ७६॥ लयोयुक्तेचर्लभ्यंस्याद्विषयोदेशगोचरौ॥ वर्गप्रस्थानयोर्व्रज्यावदान्यस्त्यागवान्स्रवाक्॥ ७७॥ स्त्रीमल्यांनिर्जनेशून्यंशौर्यंचारभटीबलं॥ शांडिल्योमुनिमाद्भरौसौरभ्यंचारुतापिच॥ ७८॥ साध्यादेवाःफलंसाध्यंस्थैर्यौनेत्रपुरोहितौ॥ नाशेलेसत्वमारोग्येसामर्थ्येशक्तियोग्यते॥ ७९॥ एकत्वादौविचारेचसंख्याक्लीबेचसंयुगे॥ हिरण्यंरेतसिस्वर्णेमानभेदवराटयोः॥ ८०॥ उरस्यपिचवुक्कायोरहृदयंमानसेपिच॥

॥ ॥ इतियांताः॥ ॥अंकुरोरोम्णिरुधिरेवारिण्यभिनवोद्भिदि॥ ८१॥ अमराभाभिन्नालायांगुडूच्यामप्यथांबरं॥

नागभिद्गंधद्रव्यंचस्यादस्रंरुधिराश्रुणोः॥ ८२॥ प्रस्तावेवसरोवर्षे
श्रेष्ठेनीचेपिचाधरः॥ श्रेष्ठेप्यऽग्रोवतारस्तुतीर्थेवतरणेपिच॥ ८३
॥गलहस्तेप्यर्धचंद्रोऽकूपारःकमठेंबुधौ॥ अंगारोऽस्त्रीकुजेंगा
रःश्रेष्ठावाच्यावनुत्तरौ॥ ८४॥ नक्रेचौरेचावहारःस्यादभ्रंव्योम
मेघयोः॥ हविर्वन्हौचाग्निहोत्रोवृक्षेलघुनिचागुरुः॥ ८५॥ शक्तो
पिषंडश्चांडीरोवंघ्रिःस्यात्पादमूलयोः॥ आसारःप्रसरणेस्या
द्वेगवृष्टौसुहृद्बले॥ ८६॥ आरःशनैश्चरेमंदेइंद्रआत्मनिवासवे
॥गौरीश्वरीशिवस्वामिकंदर्पेपीश्वरःपुमान्॥ ८७॥ उदारोद
क्षिणस्थूलोद्रुमभेदेस्युदुंबरः॥ उग्रोत्यजेशिवेस्युग्रेउस्रोदीप्तौ
गविस्त्रियां॥ ८८॥ सिंहसटासुपुन्नागेबकुलेनागकेसरे॥ केस
रःपुंसिकिंजल्केनस्त्रीहिंगुनिनद्योः॥ ८९॥ मक्षिकायामपिक्षौ
द्रं क्षुद्रःस्यात्कृपणेत्रिषु॥ कद्रुस्त्रिषुकडारेस्यात्कद्रुःस्त्रीनाग
मातरि॥ ९०॥ नापितस्योपकरणेकोकिलाक्षेपिचक्षुरः॥ भस्म
काचरसाःक्षाराः कारुःकारकशिल्पिनोः॥ ९१॥ कर्बुरोराक्षसे
पापेकर्बुरंशबलेजने॥ कारापीडाबंधशाले क्रूरोकठिनभीष
णौ॥ ९२॥ जंबुद्वीपसहाकन्याःकुमार्योथाश्ववारके॥ बालके
कार्तिकेयेच कुमारो भर्तृदारके॥ ९३॥ कलिकारस्तुभूम्याटे
करंजेपीतमस्तके॥ सिन्दूरस्थानेपिच क्षेत्रं कर्करौ दृढदर्पणौ
॥ ९४॥ शिंशपायांकृष्णसारास्नुह्यांचाथोत्पलेपिच॥ कर्णपूरः
कुबेरस्तुनंदीवृक्षेकपिंगयोः॥ ९५॥ कुशरीरेचशब्दांच कु
कुरापामरेत्रिषु॥ कंदरःस्याद्गुहासृण्योःकोटारो कूपतागरो
॥ ९६॥ कपोलेचकटाहेचशस्त्रभेदेचकर्परः॥ भिक्षापात्रेकपा
लेचखर्परस्तस्करेपिच॥ ९७॥ देवताडेखरास्त्रीस्यात्खरोग
र्दभतीक्ष्णयोः॥ भद्रमुस्तेगुवाकेचखपुराथद्रुमेपुमान्॥ ९८॥
रूप्येखलेचखर्जूरंखुरःकोलदलेशफे॥ खरुरश्वेहरेदर्पे
दंतेश्वेतेतुवाच्यवत्॥ ९९॥ गुरुस्त्रिलिंग्यांमहतिदुर्जरालघुनो

रपि॥ गायत्रीखदिरेस्त्रीस्याच्छंदस्यपिषडक्षरे॥ ८०॥ गुंद्रस्तेजनकेगुंद्रा
विलिंग्यांभद्रमुस्तके॥ गह्वरं दंभगुहागुंजेपूर्द्वारिद्वारिगोपुरं॥ १॥ नग्नक
न्यामयोर्गौरीगौरःस्यादुज्ज्वलेपिच॥ गोत्रंनाम्निकुलेपुंसिशैलेभूगव्य
योस्त्रियां॥ २॥ स्वरेरणेचगांधारोगृध्रःस्याल्लोभिपक्षिणोः॥ कर्बुरंति
लकेचित्रेस्रुभल्लातारयोःस्त्रियां॥ ३॥ चंद्रःशशिनिकर्पूरेचारोबंधाप
सर्पयोः॥ मृतेदेवकुलेचैत्यंनाभूभृन्मासभेदयोः॥ ४॥ सर्पेविष्णौ
चक्रधरश्चिकुरौ वृक्षभितकचौ॥ चक्रःकोकेव्रजेपुंसि-
क्लीबेसैन्यरथांगयोः॥ ५॥ ग्रामजालेकुंभकारभांडेराष्ट्रेचदृश्यते
॥ नदप्रभेदेवाद्येचझर्झरोथगुणध्वनौ॥ ६॥ प्रसिद्धावपि टंका
र स्तारोत्युच्चस्वरेत्रिषु॥ तारिण्यंगदमात्रोःस्त्रीन नाक्षत्राक्षिम
ध्ययोः॥ ६॥ ताम्रेर्थेतिमिरं ध्वांतेतोत्रेप्राजनवेणुके॥ धन्याकेतु
बुरीशून्यांताम्रंशुल्वेरुणेत्रिषु॥ ७॥ पेटकेनाविचतरीतुषारः
शीकरेहिमे॥ इतिकर्तव्यतातंत्रमुपायश्चाहिसाधकः॥ ८॥ तीव्रं
कटुनितांतंच दर्दरःशैलभुग्नयोः॥ उपायेनिर्गमेद्वारं दारुस्या
द्देवदारुच॥ ९॥ दासीसुतोष्ट्रौ दासेरौ देहयात्राशनेमृतौ॥ दि
गंबरोंधकारेच वाद्यमेघोच दर्दुरौ॥ १०॥ धात्रीभूव्यामलक्यांच
हरिशैलौधराधरौ॥ धाराहरिद्राश्वगतिनिशांबुसृतिराजिषु॥
११॥ धराधरोखड्गमेघौ धीरःपंडितमंदयोः॥ धीरंचकुंकुम
मथोधरापृथ्वीधरोगिरिः॥ १२॥ नेत्रोनेतरिनेत्रंचगुणेमूलेविलो
चने॥ नारंकंदस्यांनरौघेच नरोजेमानवेर्जुने॥ १३॥ नरेंद्रोराजि
केराज्ञिविषवैद्येपिदृश्यते॥ धान्योत्क्षेपेनिकारःस्यात्कुडूच्यामपि-
निर्जरा॥ १४॥ नभश्चरौपक्षिदेवौपांशुलाचनिशाचरी॥
बलीकबलयोर्नीध्रंपूरःस्याद्येपयश्चये॥ १५॥ सद्वारंभोपरिक
रौखड्गफलेपिपुष्करम्॥ नयंतरालेपात्रंस्याद्भांडेचाथनिशा
पतौ॥ १६॥ पृथक्चरौगजेयूथभ्रष्टेपक्षचरःस्मृतः॥ स्थाल्यांमं
थेपिपिठरंपवित्रंकुशमेध्ययोः॥ १७॥ देहोपाटलिपुत्रेचपुरं
स्यात्गुग्गुलौपुरः॥ वरोजामातरिवृतेकुंकुमेचनपुंसकं॥ १८॥

वक्रः शनैश्चरे क्रूरे पुटभेदे तथानृजौ ॥ कुब्जवृक्षे हरे वारो बंधुरं रम्यनम्रयोः ॥२०॥ भ्रमरः कामुके भृंगे भरोतिशयभारयोः ॥ विषे स्वादौ च मधुरं मल्लिकायांच माधुरं ॥२१॥ मखाग्नौच महावीरो मक्षिकायांच मत्सरः ॥ महेंद्रो भूधरे शक्रे दधिचक्रे च मंथरः ॥२२॥ विघ्नमन्मथयो मारो मकरो राशियादसोः ॥ गमनोत्सवयोर्यात्रा रुधिरं कुंकुमेपि च ॥२३॥ हृस्वभित्पापयोरोध्रो दैत्यभेदे मृगे रुरुः ॥ लंबोदरः स्यादुन्दाने गणानामधिपेपि च ॥२४॥ लक्ष्मीपुत्रौ स्मरहयौ विस्तारोस्तंभविस्तृती ॥ विप्रस्तानेस्त्रियां क्षेत्रे च येरेणौच रोधसि ॥२५॥ स्यादुश्वरे च नक्षत्रे वल्लूरं गहनेपि च ॥ वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः ॥२६॥ वैकल्पेपि च विश्लेषे विधुरं विकले त्रिषु ॥ विकारो विकृते रोगे विश्वकद्रुश्वभितखलौ ॥२७॥ वरांगे कुंकुमे वेरं वटरः शठमंदयोः ॥ अथ व्यतिकरः पुंसि व्यसनव्यतिषंगयोः ॥२८॥ पर्याणेऽक्षोपकरणे शारिः शकुनिकांतरे ॥ श्रीर्लक्ष्मी वेशसंपत्सु भारतीशोभयोरपि ॥२९॥ शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु ॥ पक्वदाडिमबीजाभमाणिक्यशकलेपि च ॥३०॥ शक्करे तोक्षिरुकुशक्कोनाकाव्यज्येष्ठवन्हिषु ॥ गजभूषाच शृंगारः शुषिरं गर्तवाद्ययोः ॥३१॥ कुटजे वासवे शक्रो वरीशाच्योः शतावरी ॥ शंकरी मेरवल्कुंदः शंबरः सलिले शिवे ॥३२॥ स्थिरा महाशालपर्ण्योः शंबरं संयमे जले ॥ शंबरो दैत्यहरिणौ शभ्रं स्यात्केतवे बले ॥३३॥ स्रोतोंजने च सौवीरं कांजिके बदरेपि च ॥ हलतिग्मकरौ सीरौ सांद्रं मृदौ घने वने ॥३४॥ तंत्राद्यग्रंथयोः सूत्रं कारणेपि च दृश्यते ॥३५॥ ॥इति रांताः॥ ॥ शैलेऽचलोऽचला भूमा वरालः सर्जवक्रयोः ॥३६॥ अलिः सुरापुष्पलिहोः कल्लोलेप्याकुलं त्रिषु ॥ आलुर्गलंतिकायां स्त्री क्लीबं मूले च भेलके ॥३७॥ आलिः सेतुः सखी यज्वा शौंडिकश्चाऽऽसुतीबलः ॥ आभीलं भाषणे कृच्छ्रे इलाभूवाग्बुधांगनाः ॥३८॥ आर्द्रस्

रणयोरोलः कालः स्यान्मृत्कक्रुष्णयोः॥ अंशे वृद्धावपि कलाकद
लीध्वजरंभयोः॥ ३९॥ कफोणिघातेज्वालेच कीलावत्कील इष्यते
॥ शिरसोस्थ्निकपालोस्त्रीघटादेःशकलेव्रजे॥ ४०॥ काकोविषंचका
कोलोसाम्नायामपिकंबलः॥ धूनकेपि कलकलः कामलः का
मुकेमधौ॥ ४१॥ कुलंगोत्रेगणेदेहेननाज्ञानेचकेवलं॥ कपिलाशिं
शपाकोंत्योः कपिलोग्नौमुनेश्रुनि॥ ४२॥ कोलोकपालावुत्संगेवरा
हेभेलकेपिच॥ पिप्पल्यपिचकोलास्या त्कोलंचबदरीफले॥ ४३
मृगेजलेचकमलं कुवलेबदरोत्पले॥ कल्लोलोशात्रवोल्लोलोपर्क
ल्यांचकमंडलुः॥ ४४॥ कर्मरंगतरौ कर्मफलंदुःखेसुखेपिच॥ कु
दालो धूर्णतेलेपिदेशे केशेच कुतलः॥ ४५॥ कौतूहलं प्रशस्तेपिख
लुश्चर्मणिचातके॥ वस्त्रेनिम्नेचाथखलं शस्यस्थानेशठेत्रिषु॥ ४६
॥ मंडलेमणिकेगोलंगोलागोदावरीसख्यौ॥ गोपोभूपश्चगोपालो
चपलःपारदेपिच॥ ४७॥ चपलाःपिप्पलीलक्ष्मीपुंश्चलीविद्युतः
स्मृताः॥ छलंछद्मस्खलितयोर्जंबालोपंकशैवलौ॥ ४८॥ जंगलो
निर्जनेदेशेत्रिलिंगःपिशितेस्त्रियां॥ जालंदंभेपिजंबीरे देवभेदेपि
जंभलः॥ ४९॥ झलाऽऽतपोर्मिर्दुहिता तलंमूलचपेटयोः॥ तालो
गीतक्रियामानेहरितालेद्रुमांतरे॥ ५०॥ लोहे हारमणौपुंसियः
वाग्वांतरलास्त्रियां॥ ब्रह्मदारोपिचोतूलं तूलासादृश्ययोस्तुला
॥ ५१॥ तमालोवरुणेखड्गे नापिछ्छेतिलकेपिच॥ गुवाकेपिचतां
बूलंविडंगेपिचतंडुलः॥ ५२॥ दुकूलंश्लक्ष्णवस्त्रेपिचाधेपत्रेच्छदे
दलं॥ धवलागविनाशंदेशुक्लसुंदरयोस्त्रिषु॥ ५३॥ परमाणोन्च
पीलुःस्याद्देहेचात्मनिपुद्गलः॥ शस्ताकारोप्यथतरौपिप्पलःपि
प्पलंजले॥ ५४॥ शाल्मलीशिंशपाचैवपोतिकाचापिपिच्छिला
॥ सभ्यश्चयुवतीपालिःपंक्तिःकर्णलतापिच॥ ५५॥ वीणादंडे
प्रवालोस्त्रीविद्रुमेनवपल्लवे॥ नलेकाशेपोटगलःपित्तयुक्ते
चपित्तलः॥ ५६॥ पिंगलःस्यात्कपावग्नावाशुव्रीहिश्चपाटलः

फलंजातीफलेलाभेबाणाग्रेफलकेपिच॥५७॥फेनिलंबदरेऽरिष्टेबालोह्रीबेरकेशयोः॥बलिर्जराश्लथत्वक्स्त्रीगृहदार्वसुरेबली॥५८॥बलंगंधरसेरूपेक्लीबंवास्याल्लिकेस्त्रियां॥बहुलःकृष्णपक्षेपिमेलानंदापिवार्दलः॥५९॥दुर्दिनेप्यथवेलास्यात्सिंधोःकूलेचभोजने॥ऋषिभेदेप्लवेपुंसिभेलंभीरुह्रदिस्त्रिषु॥६०॥मेखलाऽद्रिनितंबेपिग्रहेनामंगलशुभे॥निकटेपिचमूलंस्याद्धूस्तूरेपिचमातुलः॥६१॥मौलिःकंकेल्लिवृक्षेपिमल्लःपात्रेकपालिनि॥बलीयसिचमत्स्येचमंडलंपरिधौगणे॥६२॥बिंबेदेशेनाचशक्तिनिरसालस्त्विक्षुचूतयोः॥जिव्हाकमलयोर्लोलाशालास्याद्गृहशाखयोः॥६३॥तरुजातोमत्स्यभेदेशालोहालेनृपेपिच॥निगडेपुंस्कटीबंधवस्त्रेचशृंखलंत्रिषु॥६४॥शालिर्गंधमृगेधान्येशयालुःकुक्कुरेलसे॥शकलंवल्कलेखंडेशीतलःशिशिरेनिले॥६५॥षंडालीतैलमानंस्यात्सारसीस्त्रीचकामुकी॥सिध्मलाशुष्कमीनेस्त्रीत्रिलिंग्यांतुकिलासिनि॥६६॥ऋजौवृक्षेचसरलःसालोवरणसर्जयोः॥हस्तिमल्लोगजास्येचहेलावज्ञाविलासयोः॥६७॥

॥इतिलांताः॥

॥यागेचमद्यसंधानेस्नानेचाभिषवःपुमान्॥मृतावसत्वेचाभावःस्याद्रजःपुष्पमार्तवं॥६८॥आश्रवोंगीकृतेवश्येआहवोयागसंगरौ॥उपप्लवोराहूत्पातौकितवौमत्तवंचकौ॥६९॥खलीनेस्त्रीकविःपुंसिकाव्यकृच्छुक्रसूरिषु॥कैतवं तुछलेद्यूतेराजिकायांक्षुतिक्षवः॥७०॥केशवःकेशवान्विष्णुर्गालवोमुनिलोध्रयोः॥जीवोस्त्रीजीवितेपुंसिगुरुजंत्वोःस्त्रियांगुणे॥७१॥तत्त्वंविलंबितेनृत्येस्वरूपेपरमात्मनि॥मेघेराज्ञिसुरेदेवोद्विजिव्होव्याडसूचकौ॥७२॥ध्रुवोवटेस्मरारौचगीतिस्रुग्भेदयोर्ध्रुवा॥धवोधूर्तेप्यथनवोनूतनेवायसेस्तुतौ॥७३॥प्लवोनिषादेमर्कट्यांभेकेभेलेगतौकपौ॥पल्लवोविस्तरेषिंगेकिसलेविटपेवने॥७४॥घटादौ-

पार्थिवो राज्ञि बल्लवः सूदगोपयोः॥ गजे धन्विनि शक्रे च पर्शुरा-
मे च भार्गवः॥७५॥ दूर्वागौरीच भार्गव्यौ सत्तासंसारयोर्भवः॥ भा
वो गौरवितेजंतौ पदार्थेभिनयांतरे॥७६॥ माधवो हरिवैशाखो
राजीवो मृगमीनयोः॥ रौरवो घोरनरके लवश्छेदनलेशयोः॥
७७॥ करंजभित्फले लट्वाऽवधपक्षिप्रभेदयोः॥ विश्वं शक्त्यांस
मस्ते च निर्वाणे विभवो धने॥७८॥ अम्भोधौ वाडवं नस्त्री पाताले
नाद्विजौर्वयोः॥ वडवाऽश्वाकुंभदास्योर्योगे कीले हरे शिवः॥७९
॥ स्रुवं क्षेमं शिवं श्यामाऽऽमलकीचाभयाशिवा॥ षाडवस्तु रसे
रागे सैंधवो लवणाश्वयोः॥८०॥ स्वो स्त्रियां ज्ञातिधनयोः स्वमात्म
नि नपुंसकं॥ आधेयधारणे सत्ते मेलके पि च संभवः॥८१॥ ॥
इति वांताः॥ ॥ अपभ्रंशो दुष्पतने भाषाभेदापशब्दयोः
॥ टीकादर्पणावादर्शौ वाशातृष्णादिशोः स्त्रियाम्॥८२॥ प्रभुशं
करयोरीशः स्त्रियां लांगलदंडके॥ दिगंबरे कपौ कीशः केशो-
वालभचेतसोः॥८३॥ जीवितेशो यमे नाथे दंशः संहनने पि च॥
सर्पक्षते थ ज्ञाने च लोचने दर्शने च दृक्॥८४॥ नाशः पलायने-
मृत्यौ निस्त्रिंशो खड्गनिर्दयौ॥ निशा रात्रिर्हरिद्राच मृगादौ प्रथ
मे पशुः॥८५॥ पुरोडाशो हविर्भेदे चमस्यांपिष्टकस्य च॥ रसे सो
मलतायाश्च हुतशेषे च कीर्त्यते॥८६॥ पाशः कचार्थे संघार्थः
कर्णान्ते शोभनार्थकः॥ छत्राद्यन्ते च निंदार्थः पाशः पक्ष्यादिबंधने
॥८७॥ धाता हरे पुरोगे च सहाये च प्रतिस्पशः॥ लोमशो मेड्र
के पि स्याद्दवशो वशाविह्वलौ॥८८॥ वंशो वर्गे च पृष्ठांशे वेशो वे
श्यागृहे पि च॥ आयत्तत्ताप्रभुत्वेच्छे वशः परवशे त्रिषु॥८९॥ दा
ने रोगे पि च स्पर्शः सदृशं तूचिते समे॥ ॥ इति शांताः
॥ ॥ भ्राष्ट्रे पुंस्यंबरीषं ना किशोर हरिशंभुषु॥९०॥ अ
भिलाषेऽनुतर्षः स्यात्पानेच्चाचाप्यथामिषम्॥ संभोगोत्को-
च मांसेषु उषा बाणात्मजा निशा॥९१॥ भल्लूके शोणके चर्क्षो

नक्षत्रे पुंनपुंसकम्॥ ऋषिर्वेदेपि कक्षस्तु दोर्मूले शुष्ककानने
॥९२॥ कक्षा परग्राम कोष्ठस्पर्द्धो दूहणिकासु च॥ कुल्माषं कां
जिकेना तु यवके स्यादथाविले॥९३॥ पापेच कलुषं घोषः शब्दा
भीरनिवासयोः॥ शुचौ दक्षेच नोक्षस्यात्तर्षो लिप्सापिपासयोः॥
९४॥ दक्षः प्रजापतौ ताम्रचूडे हर वृषे पटौ॥ पौरुषं मानभेदेच पु
न्नागे पुरुषो नरे॥९५॥ पक्षो मासार्द्ध पार्श्वेच महिषी राजपत्न्य
पि॥ मूर्खे मानेफले माषो मेषो राश्यंतरोरणौ॥९६॥ संख्यायां तु न
ना लक्षं क्लीबं व्याजशरव्ययोः॥ हरतार्क्ष्यौ विशालाक्षौ शेषो ना
नंतसीरणोः॥९७॥ उपयुक्तेतरे त्वस्त्री शैलूषो नटबिल्वयोः॥ शु
श्रूषा परिचर्याच सहर्षः स्पर्धने मुदि॥९८॥ ॥इति षांताः
॥ ॥योग्यायामंतिकेऽभ्यासोऽधिवासो स्थानसंस्क्रिये
॥आख्यायिकापरिच्छेदे चाश्वासो निर्वृतावपि॥९९॥ उदश्विरु
त्सभे वन्हावेनः पापापराधयोः॥ कनीयाननुजेऽल्पेच कंसो माने
ऽसुरांतरे॥५००॥ तैजसे तस्यपात्रेच कुत्सः स्तबककह्लारयोः॥ छं
दः पद्यश्रुतीच्छासु तरो वेगेबलेपिच॥१॥ तमः शोकेप्यथहिम
तौ ना धर्मे व्रते तपः॥ पद्मे स्वर्णे तामरसं निशा दुर्गाच तामसी
॥२॥ मणिदोषेदरे त्रासो दासी वित्तार्थचेटयोः॥ झिंट्यांच दा
सी दीर्घायु ऋषिः काकश्च शाल्मलिः॥३॥ योक्त्रेच वस्करारव्याने-
स्वांते सरसि मानसं॥ माश्चंद्रमासयोः पुंसि खर्जूरे क्ष्वो महार
सः॥४॥ राजहंसो नृपाग्र्येच जिह्वाभूः शल्लुकी रसा॥ जलेश
रीरधातौच पारदस्वादयोरसः॥५॥ भाषाभृंखलके रासः
क्रीडायामपि गोदुहाम्॥ रहो रतेच गुह्येच रभसो हर्षवेग
योः॥ ६॥ विहायाः शकुने पुंसि विहायः स्वेनपुंसकम्॥ पु
त्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि॥७॥ रसे क्रूरेच विकु
तौ वीभत्सस्त्रिषु नार्जुने॥ व्यासो मुनौच विस्तारो बर्हिर्ना-
कुशशुष्मणोः॥ ८॥ अग्रे प्रधानेच शिरः श्रीवासो विष्णुधूप

योः॥ सुमनाः पुष्पमालत्योः स्त्रियां नां देवधीरयोः॥ ९ ॥ वी-
णाभेदे सर्जरसो धूणकेप्यथ सारसम्॥ पद्मेनापक्षिणीं दौ
च सरो नीर तडागयोः॥ १० ॥ हविः सर्पिषि हव्ये च हंसस्तु-
रवगसूर्ययोः॥ निर्लोभे नृपतौ विष्णावंतरात्मनि चेष्यते॥ ११
॥ ॥ ॥ इति सांताः॥ ॥ ॥ अवग्रहः स्यात्प्रकृ
तिभाव वृष्टि विबंधयोः॥ अवरोहो वलरणेऽपि दिवे च लतोद्ग
मे॥ १२॥ आरोहस्तु नितंबे स्याद्दीर्घत्वे च समुच्छ्रये ॥ शक्तोऽस्ने
हे चाग्रहः स्याद्दीहा तृष्णा भवांछयोः॥ १३॥ सूपे च पाकपात्रे च
कटाहो महिषीशिशौ ॥ खड्गकोषे च कलहो दात्यूहश्चा
तकेपि च॥ १४ ॥ समारंभेपि पटहो ब्रह्मण्यपि पितामहः
॥ प्रवाहो व्यवहारे च बहुर्विपुलसंख्ययोः॥ १५॥ वराहः
सूकरे मेघे मुस्तकेप्यथ मूर्छने॥ अविद्यायां च मोहः स्याद्वृष
स्कंधेऽनिले वहः॥ १६॥ देहनिर्माणसैन्येषु व्यूहः स्यादथ
विग्रहः॥ संग्रामे प्रविभागे च देहविस्तारयोरपि॥ १७ ॥ वै
देही पिप्पलीसीता वणिक्स्त्रीरोचनास्वपि॥ संक्षेपेपि संग्रहः
स्यात् सिंह्यौ वार्ताकुवासवौ॥ १८॥ राशिभेदे हरौ सिंहः श्रेष्ठा
र्थे चोत्तरे स्थितः॥ सौहृदे घृततैलादौ स्यात्स्नेहोऽप्यव्ययाः
परे॥ १९ ॥ ॥ ॥ इति हांताः॥ ॥ ॥ अथाव्य
याः परे वाच्या नञ्भावेनिगद्यते॥ तद्विरुद्धे तदन्ये च निषेधे
पि च दृश्यते॥ २० ॥ सादृश्ये चेप दर्थे च हिरुग्मध्यविलास
योः॥ पुनरर्थे गभोऽर्थे च स्वस्त्यर्थे प्रशंसयोः॥ २१॥ च पादपू
रणे पक्षांतरे हेतौ विनिश्चये॥ हा विस्मये प्रमोदे च ओमेवं प्र
णवार्थयोः॥ २२ ॥ युक्तार्थे साधनार्थे च सांप्रतं तद्विदो विदुः॥
हुं वितर्के चानुमतौ वार्तायाम रुचौ किल॥ २३॥ प्रातर्दिने च

---

अथाव्ययानि श्रीपद्मानंदार्थस्य द्वे अद्भुतार्थस्य त्रिभुवनस्यैकम्

पूर्वत्रेत्यर्थे पूर्वेद्युरिष्यते॥ ॥ इतिनानार्थवर्गः
॥ ॥आनंदेऽस्तुश्रसंदिग्धांकदवेकदचाद्भुतं॥भूर्भु
वःस्वस्त्रिभुवनमनागर्थेदरंस्मृतम्॥२४॥आमंडमभ्युपगमे
नवरंकेवलार्थकम्॥प्रातरर्थेऽनपयतिक्षणमात्रेक्षणंक्षणा
म्॥२५॥क्षेमपुण्येस्वस्तिनास्याउच्चैरर्थेऽद्रुकीर्तितम्॥वारं
वारंशश्वदर्थेवारंवारेणचेष्यते॥२६॥उताहोयदिवायद्वा
किंवानेतिसमाइमे॥किंत्वर्थेपितुयद्यर्थेसचेद्योक्तादिवाचक
म्॥२७॥अस्त्याहकालसामान्येतिङंतमतिरूपकम्॥स
ज्जःसहार्थेनेत्याहनिषेधेयदिशोभ्रगीः॥२८॥विभाषाऽन्यतर
स्यांवाविकल्पार्थाःप्रकीर्तिताः॥तेइतिस्यात्त्वयेत्यर्थेमयेत्य
र्थेचमेइति॥५२९॥ ॥इत्यव्ययवर्गः॥ ॥ ॥

---

ईषदर्थस्यैकं २४ अभ्युपगमार्थस्यैकं केवलार्थस्यैकं प्रातरर्थस्यैकं
क्षणमात्रस्यैकं २५ द्वेपुण्यार्थस्य द्वेउच्चैरर्थस्य द्वेशश्वदर्थस्य २६
षट्विकल्पार्थस्य द्वेकिंत्वर्थस्य द्वेयद्यर्थस्य २७ कालसामान्यस्यैकं
सहार्थस्यैकं निषेधार्थस्यैकं २८ त्रीणिविकल्पार्थस्य त्वयेत्यर्थ
स्यैकं मयेत्यर्थस्यैकम् २९

लिंगादिसंग्रहेऽनुक्तममरेणाभिदध्महे॥ स्त्रियामाजिर्दरज्जा
तिपुरुड्भाषाः समाः शरत्॥३०॥ सिकताद्या बहुत्वेपि विंशत्याद्ये
कवाग्यपि॥ पुंस्त्वेहाहाहुहूर्ग्रंथिः पाणिः कलिर्दृतिर्मौलिः॥३१॥ अं
जलिरंघ्रिः कुक्षिर्मारकलोकोन्तरासंगाः॥ यवकवातसंकेतपो
तकर्त्तगरुच्छदाः॥३२॥ श्लेष्मोष्मपापयक्ष्मास्यान्मोनो वातायन
स्तनः॥ फेनाभिजनकलापनिकाय्याहारोद्गारोपलकल्लोलाः॥
३३॥ फालचषालकीनंडुलशैवलरवलविभवप्रसवाः॥ आनाऽ
पजननाडीभ्योयुगमंगंपदंप्रणं॥३४॥ आनंदेदुंदुभिरथबहुत्वे
प्यसवोगृहाः॥ सक्तवो वल्लुजालाजा दाराःप्राणादशाइति॥३५॥
क्लीबेकलत्रविषवीजकटस्वरलतल्पोक्तकुंकुमप्रवीडतृणाक्षराणि
॥श्रृंगारपीठगुदभेषजपृष्ठकिण्वदैवाशफमाश्रुचिबुकोडुपसाह-
सानि॥३६॥ यक्रुत्कुहकलिध्मानितीरंकालश्वजानुच॥ धर्मार्थसा
रभिन्नाण्यंगदनन्याय्यबंधुषु॥३७॥ पुंनपुंसकयोर्दारुजीवातुस्था
णुसीधवः॥ स्याद्यस्कहिंगुतितउसानुकंबुकमंडलु॥३८॥ गोमय-
कुमुदबिंबकुबिंबशंखाश्रमस्तूणस्कवर्णतोरणाः॥ नूपुरशिख
रतूर्याशगृहांकुशबर्हिपल्लवाः॥३९॥ व्रतदिनमासवर्षादलव
ल्कलकोटरखंडवासवाः॥ चंदनपद्मधर्मकोलाहलकिसलय
देहदोहदाः॥४०॥ कुलिशध्वजकार्षापणनिधानमुस्ताककोरुश्रृं
गवलयाः॥ पटलप्रवालचषकोपवासकासारकटकसंतानाः
॥४१॥ आकाशकुंजकुतपौदनवारवाणमुस्तावतंसनखमं
डपकच्छपुच्छाः॥ कांतारकंकणतडागकिरीटराष्ट्रतीर्थव्रण
स्तबकसंक्रमपीठकानि॥४२॥ समरसरकरणघटपांगना
गौरिकदैवतकूटागाराः॥ प्रोथमुहूर्तदिवसफलानिमासनिदा
घमुसलनिलकानि॥४३॥ वल्मीकबाल्हीकवृषणद्रोणगांडी
वनिगडानिच॥ मुकुलादिचविज्ञेयंशिष्टसंदर्भतोपरम्॥४४॥
अथस्त्रीनपुंसकयोः केलिर्मणियोनिर्मसिर्मुनिः॥ मरीचिःशाल्म

लिः स्वातिः श्रेणिर्मुष्टिस्तिथिः सृणिः॥ ४५॥ ऊर्मिर्गभस्तिरशनिर्वेपा
र्ष्णीषुधिराशयः॥ वस्तिश्चकिष्कुः कंडुश्च वेश्वतन्निंबवाहवः॥४६॥
गंडूषगर्ज्जजागरभुजकीलज्वालवर्तकव्रीडाः॥उत्कंठसटवराटक
रभसाः स्त्रीत्वेतुदाबंताः॥ ४७॥ शङ्खको वृश्चिकः कीटः शारस्तूणोघ
टः कटः॥ शफरोवंतसश्चामी स्त्रियाङ्यंताः प्रकीर्तिताः॥ ४८॥ स्त्री
क्लीबयोरुडु दोर्माच्छर्दिर्ज्योतिः सदोर्विषः॥ क्षुरवं लक्षं वणिज्यंच
बडिशक्रोडपाटलं॥ ४९॥ तारकंरसनंनीत मेतेटाबंतकाः स्त्रिया
म्॥ ङ्यंतास्तु नगरास्थानस्थलानिपुरपाटलं॥५०॥ त्रिलिंग्यांतुप्र
तिसरस्फुलिंगनखरार्गलाः॥ कंदरंशृंखलंनालं बल्लूरफलमुस्त
काः॥५१॥ जंभश्चटाबंताएते स्त्रियामथबिभीतकः॥ हरीतकाटक
तटकवाटाश्चगुणेवटः॥५२॥ मंडलंशलभंभल्लातकं कलशकं
दलौ॥ मृणालामलकौ दाडिमश्चंङ्यंताः स्त्रियामिमे॥५३॥ करणे
ल्युट्त्रिषु यथा तस्यव्याख्यानमित्यदः॥ सूत्रकृद्भाष्यकृच्चानुमा
नइतीच्छति॥५४॥ ॥ इतिलिंगादिसंग्रहवर्गः॥ ॥
दृष्टप्रयोगायेशब्दाः प्रायस्तइहकीर्तिताः॥ अप्रयुक्तास्तुपाणिन्या
दिषुदृष्ट्वाप्युपेक्षिताः॥५५॥ ॥इतितृतीयकांडःसमाप्तः॥
इतिश्रीपुरुषोत्तमदेवरचितत्रिकांडशेषाभिधानकोषःसमाप्तः॥ ॥

---

समाप्त.

---

मुंबईंतचंद्रप्रकाशछापखान्यांतछापिलें.
शके१७८८ क्षयनामसंवत्सरे.
श्रावणशुद्ध ८

श्रीगणेशाय नमः॥ ॥वृषांकाय नमस्तस्मै यस्य मौलिविलंबि
नी॥जटावेष्टनजां शोभां विभावयति जान्हवी॥१॥पूर्वाचार्यकृती
र्वीक्ष्य शब्दशास्त्रं निरूप्य च॥नानार्थशब्दकोशोयं लिंगभेदेन कथ्य
ते॥२॥प्रायशो रूपभेदेन विशेषणवशात्क्वचित्॥स्त्रीपुंनपुंसकं
ज्ञेयं विशेषोक्तेश्च कुत्रचित्॥ ३॥त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्व
योरिति॥निषिद्धलिंगं शेषार्थं त्वंताथादि न पूर्वभाक्॥४॥रूपाद्युक्तं
लिङ्गमुक्तं लिपिभ्रांतिच्छिदे क्वचित्॥विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वा
च्यलिंगता॥५॥गुणे शुक्लादिकद्वाद्याः पुंसि स्युस्तद्वति त्रिषु॥तीक्ष्णाद्या
श्च गुणे क्लीबं गुणिलिंगास्तु तद्वति॥६॥क्लीबपुंसोरनिस्त्रीत्वं क्वाप्यल्प
त्वविवक्षया॥जातिवाचकशब्दानामपि तत्स्त्रीविवक्षया॥७॥उद्भि
दः प्रसवे क्लीबे हरीतक्यादयः स्त्रियां॥पु[illegible]जातीप्रभृतयः स्वलिंगा
व्रीह्यः फले॥८॥प्राङ्नानार्थान्न तल्लिंगं द्वयोर्द्वन्द्वेन चैकता॥शब्दा
वृत्तिर्न लिङ्गैक्ये समानविशेषणे॥९॥क्लीबे नपुंसके पुंसि स्त्रियां यो
षिति च द्वयोः॥त्रिषु चेत्यादि यद्रूपं तल्लिंगस्यैव वाचकम्॥१०॥नाना
र्थः प्रथमांतोत्र सर्वत्रादौ प्रदर्शितः॥सप्तम्यंताभिधेयेषु वर्त्तमानो
विनिश्चितः॥११॥एकद्वित्रिचतुःपंचषड्वर्णानुक्रमात्कृतः॥स्वर
काद्यादिकाद्यांत वर्गैर्नानार्थसंग्रहः॥१२॥नानार्थकोशपुस्तक
भारार्जनदुःखहानये कृतिनः॥मेदिनिकरकृतकोशो विशुद्ध
लिंगोऽभिलिख्यतामेकः॥१३॥ ॥केकम्॥ ॥को ब्रह्मणि
समीरात्मयमदक्षेषु भास्करे॥कामग्रंथौ च क्रिणि च पतत्रिपा
र्थिवे तथा॥१४॥मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्
॥ कद्वि अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ॥१५॥
अंको रूपकभेदागचिन्हरेखाजिभूषणे॥रूपकांशेऽतिको
ऽङ्गस्थानेऽकं पापदुःखयोः॥१६॥एकं संख्यांतरे श्रेष्ठे केवले
तरयोस्त्रिषु॥ कर्कः कर्केतिले वन्हौ शुक्लाश्वे दर्पणे घटे॥१७॥
कंकश्छद्मद्विजे ख्यातो लोहपृष्ठकृतांतयोः॥कल्कोऽस्त्री

घृततैलादिशेषे दंभे बिभीतके ॥१८॥ बिङ्किर्हृयोश्च पापे च त्रिशुपा
पाशये पुनः ॥ कंकः स्याद्धायसे वृक्षप्रभेदे पीठसर्पिणि ॥१९॥ शि
रोऽवक्षालने मानप्रभेदद्वीपभेदयोः ॥ काका स्यात्काकनासायां
काकोलीकाकजंघयोः ॥ २०॥ रक्तिकायां मलूपां च काकमाच्यां
च योषिति ॥ काकं सुरतबंधे स्यात्काकानामपि संहतौ ॥२१॥
किष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेपि करेऽपि च ॥ कोकश्चक्रे वृके ज्ये
ष्ठ्यां खर्जूरीद्रुमदर्दुरे ॥ २२॥ छेको गृहाश्रितमृगपक्षिणोर्नागरे
त्रिषु ॥ टंको नीलकपित्थे च खनित्रे टंकने स्त्रियाम् ॥ २३॥ जंघा
यां स्त्री पुमान्कोपे कोशासिग्रावदारणे ॥ तर्कः कांक्षावितर्को
हहेतुशास्त्रेषु कथ्यते ॥२४॥ त्रिका कूपस्य नेमौ स्यात्त्रिकं पृ
ष्ठाधरे त्रये ॥ तोकं पुत्रे स्फतायां च द्विकः स्यात्काककोकयोः ॥
२५॥ न्यंकुर्मुनौ मृगे पुंसि नाकस्त्रिदिवे वरे ॥२५॥ नाकुर्मुन्यं
तरे पृथ्वीधरवल्मीकयोः पुमान् ॥ निष्कमस्त्री साष्टहेमशते दी
नारकर्षयोः ॥२६॥ घस्तोलं करणे हेमपात्रे हेमपलेऽपि च ॥
२७॥ पंकोऽस्त्री कर्दमे पापे पाकः परिणतौ शिशौ ॥ केशस्य जरसा
शौक्ल्ये स्थाल्यादौ पचनेऽपि च ॥२८॥ बकस्तु बकपुष्पे स्यात्क
ह्वे श्रीदे च रक्षसि ॥ भूकं छिद्रे च काले च भेको मंडूकमेघयोः
॥२९॥ मुष्को मोक्षकवृक्षे स्यात्संहते वृषणेऽपि च ॥ मूकस्तु
वाग्विना दैन्ये रंकः कृपणमंदयोः ॥३०॥ राका नद्यंतरे कन्यां न
वजातरजःस्त्रियाम् ॥ संपूर्णेंदुतिथौ रेकः शंकानीचविरेचने
॥३१॥ रोकस्तु क्रयभिद्दीस्यो रोकं नाविचलेबिले ॥ लंका रक्षः
पुरी शाखा शाकिनी कुलटासु च ॥३२॥ लोको जनोऽपि भुवनं व
ल्कं वल्कलशल्कयोः ॥ वंकः पर्याणभागे न नदीपात्रे च भंगु
रे ॥ ३३॥ शल्कं तु शकले वल्के शको जात्यंतरे नृपे ॥ शंकुः सं
ख्याऽस्त्रयादोभित् कीलांशकलुषेस्फना ॥३४॥ शंका त्रासवि
तर्के च शाको द्वीपांतरेऽपि च ॥ शक्कोद्रुमविशेषे च पुमान्हरि

तकेऽस्त्रियां॥३५॥शुकोव्याससुतेकीरेरावणस्यचमंत्रिणि॥शि
रीषपादपेपुंसिग्रंथिपर्णेनपुंसकम्॥३६॥शुल्कंघट्टादिदेयेस्या
द्रादर्थग्रहेस्त्रियां॥शूकोस्त्रीशृंगदलयोः श्लोकःपद्ययशस्यपि
॥३७॥शौकंशुकगणेस्त्रीणांकरणेसूक इत्यपि॥बाणवातोत्प
ठेस्तोकस्त्रिबल्पेचातकेपुमान्॥३८॥ कत्रिः अशो
कस्त्रिषुनिःकोशेपुंसिकंकेल्लिपादपे॥स्त्रियांतुकटुरोहिण्यांपार
देस्यान्नपुंसकम्॥३९॥अलकाकुबेरपुर्यामस्त्रियांचूर्णकुंतले
अभीकःकामुकेक्रूरेनिर्भयेत्रिषुनाकवौ॥४०॥अनीकोऽस्त्रीर
णेसैन्येप्यणुकोनिपुणाऽल्पयोः॥अलीकमप्रियेऽपिस्याद्दिव्य
सत्येनपुंसकम्॥४१॥अनूकंतुकुलेशीलेपुंसिस्याद्भूतजन्मनि॥
अंशुकंश्लक्ष्णवस्त्रेस्याद्रस्वमात्रोत्तरीययोः॥४२॥अंतिकंनि
कटेवाच्यलिंगंस्त्रीशातलौषधौ॥चुल्यांज्येष्ठेभगिन्यांचनाट्यो-
क्त्याकथ्यतेऽतिका॥४३॥अलर्कोधवलाऽर्केस्याद्योगोन्मादित-
कुक्कुरे॥अंबिकापार्वतीमात्रोर्धृतराष्ट्रस्यमातरि॥४४॥अंधि
काद्यूतभेदेचरजन्यामपियोषिति॥आम्लिकातिंतिडीचाम्लो-
द्गारचांगेरिकासुच॥४५॥अर्भकःकथितोबालेमूर्खेपिचकृशे-
पिच॥आनकःपटहेभेर्यांमृदंगेध्वनदंबुदे॥४६॥आटकीतु
तुवर्यांस्त्रीपरिमाणांतरेत्रिषु॥आलोकस्तुपुमान्द्योतेदर्शने
वंदिभाषणे॥४७॥आन्हिकंदिननिर्वर्त्येत्रिलिंगमथनद्वयोः
॥नित्यक्रियाभोजनयोर्वृंदेप्रकरणस्यच॥४८॥आतंकोरो
गसंतापशंकासुमुरजध्वनौ॥इक्ष्वाकुःकटुतुंब्यांस्त्रीसूर्यवंश
नृपेपुमान्॥४९॥उलूकःपुंसिकाकारातिंद्रेभारतयोधिनि॥उ
दर्कएष्यत्कालीनफलेमदनकंटके॥५०॥उष्णाकस्तुनिदाघेस्या
दातुरेक्षिप्रकारिणि॥उष्ट्रिकामृत्तिकाभांडभेदेपिकरभस्त्रिया
म्॥५१॥ऊर्मिकाचांगुलीयेस्याद्दस्त्रभंगतरंगयोः॥कनकंहेम्नि
पुंसिस्यात्किंशुकेनागकेसरे॥५२॥धुस्तूरेकांचनारेचकालीये

चंपकेऽपिच॥ करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपिच॥ ५३॥ द्वयो र्मेघोपलेनस्त्री करंकेच कमंडलौ॥ क्रमुकस्तु पुमान्भद्रमुस्तके ब्रह्मदारुणि॥ ५४॥ फलेकार्पासिकायाश्च पट्टिकाख्योध्रपूगयोः॥ क टकोस्त्रीनितंबेद्रेः दंतिनादंतमंडने॥ ५५॥ सामुद्रलवणेराजधा नीवलययोरपि॥ कटुका कटुरोहिण्यांस्त्रियांव्योषे नपुंसकं॥ ५६ ॥ कंटकोनस्त्रियांक्षुद्रशत्रौमत्स्यादिकीकसे॥ नैयोगिकादिदो षोक्तौस्याद्रोमांचद्रुमांगयोः॥ ५७॥ करंको मस्तकेऽशस्यनालिकेर फलास्थनि॥ कलंकोऽकेऽपवादेच कालायसमलेऽपिच॥ ५८॥ क र्णिका करिहस्ताग्रे करमध्यांगुलावपि॥ क्रमुका छदंशेऽब्जवराटेक र्णभूषणे॥ ५९॥ कणिका कथ्यतेऽत्यंतसूक्ष्मवस्त्वग्निमंथयोः॥ कत्वाकुस्तु दुराधर्षे दुःशीलेच बिलेशये॥ ६०॥ कंचुको वारबाणे स्यान्निर्मोकेकरभेऽपिच॥ वर्धापकगृहीतांगस्थितवस्त्रेच चोलके॥ ६१॥ कंचुस्त्वोषधिभेदेऽथ कारिका नटयोषिति॥ कृतौविवरण श्लोकेशिल्पयातनयोरपि॥ ६२॥ नपुंसकंतु कर्मादौ कारकं कर्त्त रित्रिषु॥ कामुकः कमनेशोकपादपेचाऽतिमुक्तके॥ ६३॥ कामुकं धनुषिस्यान्नावेणौकर्णश्चवेत्रवत्॥ कञ्चूकः कुकवाकौस्यात्पीत मस्तककोकयोः॥ ६४॥ क्षारकः पक्षिमत्स्यादिपिटकेजालकेऽपि च॥ कालिका चंडिकाभेदेकात्स्न्र्ये वृश्चिकपत्रयोः॥ ६५॥ क्रमदेय वस्तुमूल्येधूसरीनवमेघयोः॥ पटोलशाखारोमाल्यांमांसीकाकी शिवासुच॥ ६६॥ मेघावलौंच किंपाको महाकालफलाज्ञयोः॥ की चको दैत्यभिद्वातहतसस्वनवंशयोः॥ ६७॥ कीटकः क्रिमिजा तौनानिष्ठुरेपुनरन्यवत्॥ कुलकं तु पटोलेस्यात्संबद्धश्लोकसंह तौ॥ ६८॥ पुंसिवल्मीककाकेंदु कुलश्रेष्ठेषु कथ्यते॥ क्षुल्लकस्त्रीषु नीचेल्पे कुशिकोमुनिसर्जयोः॥ ६९॥ कुषाकुः कपिवन्ध्यर्केनाप रोत्तापिनित्रिषु॥ कुलिको नागभेदेस्यात्कुभेदेकुलसत्तमे॥ ७०॥ क्षुरकः कोकिलाक्षेस्याद्गोक्षुरेतिलकद्रुमे॥ कूपको गुणवृक्षे

स्यात्तैलपात्रेकर्कुंदरे ॥७१॥ उदपानेऽच्युतायांतु कूपिकाऽभोग
तोपले॥ कूलकं नस्त्रियांस्तूपेपुंसिस्यात्कृमिपर्वते ॥७२॥ कूर्चि
कासूचिकायांचतूलिकायांचकुड्मले॥ कूपाद्यांकुडके क्षीरविकृ
तावपियोषिति॥७३॥ कृषकः पुंसिफालेस्यात्तर्षकेत्वभिधेयव
त्॥ कोरकोऽस्त्री कुड्मलेस्यात्कक्कोलकमृणालयोः॥७४॥ कौतु
कंत्वभिलाषेस्यादुत्सवेनर्महर्षयोः॥ तथापरंपरायाथमंगलेच
कुतूहले॥७५॥ विवाहसूत्रगीतादिभोगयोरपिनद्वयोः॥ कौशि
कोनकुलेव्यालग्राहेगुग्गुलुशक्रयोः॥७६॥ कोषज्ञोलूकयोश्च
स्याद्विश्वामित्रमुनावपि॥ कौशिकीचंडिकायांचनदीभेदेचयो
षिति॥७७॥ खनकोनोंदुरोसंधिचौरेभिषवदारके॥ खड्गिको
महिषीक्षीरफेनशौनिकयोरपि॥७८॥ स्यात्खोलकस्तूपाकेशि
रस्त्रवल्मीकपूगकोशेषु॥ गणिकायूथीवेश्येभीतर्कारीषुनातु
दैवज्ञे॥७९॥ ग्रंथिकंपिप्पलीमूलेगुग्गुलुग्रंथिपर्णयोः॥ कारिरेपुं
सिदैवज्ञेसहदेवाख्यपांडवे॥८०॥ गंडकःपुंसिखड्गेस्यात्संख्या
विद्याप्रभेदयोः॥ अवच्छेदेंऽतरायेच गंडकीसरिदंतरे॥८१॥ ग्रा
हकोघातिविहगेधान्यानांचगृहीतरि॥ गांधिकोलेखकेऽपि
स्यात्स्कगंधिव्यवहारिणि॥८२॥ गुंडकोमलनेधूलौकलोक्तिस्ने
हपात्रयोः॥ गृत्यकोनिग्नकेच्छेकेगैरिकंधातुरुक्मयोः॥८३॥
गोलकोविधवापुत्रेजारात्स्यान्मालिकेगुडे॥ गोरकुःस्यात्सुमा
न्याक्षिभेदेलग्नकबंदिनोः॥८४॥ चषकोऽस्त्रीसुरापात्रेमधुमद्य
प्रभेदयोः॥ चुलकःप्रसृतौभांडभेदेचुलुकवत्पुमान्॥८५॥ च
तुष्कीमसकहर्यांपुष्करिण्यंतरेपिच॥ चारकःपालकेऽश्वादेः
स्यात्संचालकबंधयोः॥८६॥ चित्रकंतिलकेनातुव्याघ्रभिन्नंतु
पाठिषु॥ चुंबकश्चुंबनपरेधूर्तायस्कांतयोरपि॥८७॥ बहुग्रंथै
कदेशज्ञेथटस्यात्र्यीवलंबने॥ चुल्लकीशिशुमारेऽपिकुंडीभेदे
कुलांतरे॥८८॥ चूलिकानाटकस्यांगेकर्णमूलेचहस्तिनाम्॥

कूलकः कूपके प्याञ्जनकः पितृभूभुजोः॥८९॥जंबूकः फेरवे नीचे पश्चिमाशापताववपि॥जतुका जिनपत्रायां जतुकं हिंगुलाक्षयोः॥९०॥जाहको योषमार्जाररवट्टांकारूंडिकास्कन्च॥जालकं क्षोरकेदंभे कुलायानायोरपि॥९१॥नपुंसि मोचकफले स्त्रियां तु वसनांतरे॥गिरिसारजलौकायामपि स्याद्विधवास्त्रियां॥९२॥भद्रानामश्मरचितांऽगरक्षिण्यांच जालिका॥जालिको वाच्यवद्ग्राम जालिजालोपजीविनोः॥९३॥जीवकः प्राणके पीतशालकृपणयोरपि॥कूर्चशीर्षेपि पुंसि स्याद्राजीवे जीविकामता॥९४॥त्रिषु सेविनि वृत्त्याशिजीविनो राहितुंडिके॥झिल्लिका द्दर्तनपरे स्त्रियां द्योते च झिल्लिका॥९५॥आतपस्य रुचौ झिल्ल्यां टुंटुकः शोणकाल्पयोः॥डिंबिका जलबिंबे स्यान्मोणके कामुकस्त्रियाम्॥९६॥तंडकः खंजने फेने समासप्रायवाचि च॥गृहदारु तरुस्कंधमायाबहुलकेष्वपि॥९७॥तक्षकस्तु पुमान्नागराजभेदे च वर्धके॥तारको दैत्यभित्कर्णधारयोर्नद्दयोर्दृशि॥९८॥कनीनिकायामृक्षे च नपुमांस्त्वांतरिन्त्रिषु॥तिलको द्रुमरोगाश्वभेदे च तिलकालके॥९९॥क्लीबं सौवर्चकक्लोम्नोर्नस्त्रियां तु विशेषके॥त्रिशंकुर्नाराजभेदे शलभे वृषदंशके॥१००॥तुरुष्कः सिल्हके म्लेच्छजातौ देशांतरेऽपि च॥तूलिका कूर्चिकायां च शय्योपकरणेऽपि च॥१॥दर्शकः स्यात्प्रतीहारे दर्शयितृप्रवीणयोः॥दारको बालकेऽपि स्यान्द्भेदके त्वभिधेयवत्॥२॥द्रावको ग्रावभेदे स्याद्विदग्धे मोषकेऽपि च॥दीपकं त्वागलंकारे वाच्यवद्दीप्तिकारके॥३॥दीप्यकश्चाऽजमोदायां यवानी बर्हिचूडयोः॥दुन्दुको गंधकुट्यां स्याद्द्विहाराद्यवकाशके॥४॥दूषिका तूलिकायां च मले स्याल्लोचनान्स्यच॥धनिका साधुनार्यां धान्याके त्रिषु साधुधनिनोश्च॥५॥स्याद्धेनुका करिण्यां धेनावपि ना तु दानवविशेषे॥धेनुकं करणे स्त्रीणां धेनूनामपि संहतौ॥६॥नर्तकः केवले पोदगलचारणयोर्नटे॥

नर्तकी लासिकायांच करेणवामपि योषिति ॥७॥ नग्निकापिकुमा
र्यांस्यात्पुमान्क्षपणबंदिनोः ॥ नरकः पुंसि निरय देवारातिप्रभेद
योः ॥८॥ नंदको हरिखड्गे च हर्षके कुलपालके ॥ नालीकः शरश
ल्यांगेष्वब्जखंडे नपुंसकं ॥९॥ नायको नेतरि श्रेष्ठे हारमध्यमणाव
पि ॥ निर्मोको मोचने व्योम्नि सन्नाहे सर्पकंचुके ॥१०॥ नीलिकानी
लिनी क्षुद्ररोगशेफालिकासु च ॥ पराकस्तु व्रतेखड्गे प्रसेकः
सेचने श्च्युतौ ॥११॥ प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः
॥ पद्मकं स्यात्पद्मकाष्ठबिंदुजालकयोरपि ॥१२॥ पक्षकस्तु पुमा
न्पार्श्वद्वारे च पार्श्वमात्रके ॥ पल्यंको मंचपर्यंकवृषीपर्यस्ति
कासु च ॥१३॥ पताका वैजयंत्यां च सौभाग्यनाटकांकयोः ॥ पा
तुकः पतयालौ स्यात्प्रपातजलहस्तिनोः ॥१४॥ प्राणकः सत्व
जातीये जीवकद्रुमचोलयोः ॥ पाटकः स्यान्महाकिष्कौ कटकां
तरवाद्ययोः ॥१५॥ अक्षादिचोलने मूलद्रव्यापचयरोधसोः ॥
पालंकः शल्लकीशाकभेदयोःबाजिपक्षिणि ॥१६॥ पावकोऽग्नौ
सदाचारे वन्हिमंथे च चित्रके ॥ भल्लातके विडंगेऽथ प्रियकः पीत
शालके ॥१७॥ नीपे चित्रमृगे चालौ प्रियंगौ कुंकुमेऽपि च ॥ पि
ण्याकोऽस्त्री तिलकल्के हिंगुबाल्हीकसिल्हके ॥१८॥ पिनाकोऽस्त्री
रुद्रचापे पांशुवर्षत्रिशूलयोः ॥ पिटकस्त्रिषु विस्फोटे मंजूषायां
पुनः पुमान् ॥१९॥ पिष्टको घृतपूपादौ नेत्ररोगांतरेऽपि च ॥ पुलकः
कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे ॥२०॥ रोमांचे हरिताले गजान्न
पिंडे च गंधर्वे ॥ पुलाकस्तुच्छधान्ये स्यात्संक्षेपे भक्तसिक्थके ॥
२१॥ पुष्पकं रीतिपुष्पे च विमाने धनदस्य च ॥ नेत्ररोगे तथा
रत्नकंकणे च रसांजने ॥२२॥ लोहकांस्यमृदंगारशकट्यां च
नपुंसकम् ॥ स्यात्पुत्रिका पुत्तलिका दुहित्रोर्यावतूलके ॥२३
॥ ना पुत्रे सरभे धूर्ते शैलवृक्षप्रभेदयोः ॥ पूर्णकः स्वर्णचूडे
स्यान्नासाच्छिन्न्यां तु पूर्णिका ॥२४॥ पृदाकुर्वृश्चिके व्याघ्रे

सर्पचित्रकयोः पुमान्॥ पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयव
त्॥२५॥ पेचको गजलांगूलमूले घाते च कौशिके॥ पेटकं पुस्त
कादीनां मंजूषायां कदंबके॥२६॥ वल्मीको रोगभेदे च नाकौ च
पुन्नपुंसकम्॥ बंधूकं बंधुजीवे स्याद्बंधूकः पीतशालके॥२७॥
बंधकः स्याद्विनिमये पुंश्चल्यां स्याच्च बंधकी॥ बाहुलः कर्कटेऽप्या
के दात्यूहे जलरवातके॥२८॥ बराकः शंकरे पुंसि शोचनीयेऽभि
धेयवत्॥ बालकस्तु शिशौ वज्रे वालधौ हयहस्तिनोः॥२९॥ अंगुली
यकऽन्ही वरवलये पुंसि बालिका॥ बालायां वालुका पत्रकाहुलाक
र्णभूषणे॥३०॥ बारकोऽश्वगतौ पुंसि वाच्यवत्स्यान्निषेधके॥ बा
लुका सिकतास्त्रस्याद्वालुकं त्वेलबालुके॥३१॥ भर्मकं रोगभेदे
स्याद्धिडंककलधौतयोः॥ भ्रामको जंबुके धूर्ते सूर्यावर्तेऽश्मभे
दयोः॥३२॥ भालांकः करपत्रे स्याच्छाकभेदे च रोहिते॥ महालक्षण
संपन्नपुरुषे कच्छपे हरे॥३३॥ भूमिका रचनायां स्याद्वेशांतरपरि
ग्रहे॥ भूतीकमपि भूनिंबे दीप्यकर्पूरके तृणे॥३४॥ मधुका मधु
पर्ण्यां स्यान्मधुकं क्लीतके रवगे॥ वल्यं लरो नाम शाको रोगकीटप्र
भेदयोः॥३५॥ मंडुकः शोणके पुन्यंतरे स्याद्भूदवर्चसि॥ मंडूकपर्ण्यां
मंडूकी मल्लिको हंसभिद्यपि॥३६॥ मल्लिका तृणभून्येपि मीनमृ
त्पात्रभेदयोः॥ मामकं स्यान्मदीयार्थे त्रिषु पुंसि तु मातुले॥३७॥
मातृका धातृकामात्रोर्देवीभिद्वर्णमालयोः॥ मालिका सप्तला
पुत्राग्रीवालंकरणेषु च॥३८॥ पुष्पमाल्येनदीभेदे पक्षिभेदे तु मा
लिकः॥ मेचकस्तु मयूरस्य चंद्रके श्यामले पुमान्॥३९॥ तद्य
क्ते वाच्यलिंगः क्लीबं स्रोतोंजनांधकारयोः॥ मोचकः कदले शिग्रुनि
र्मोचकविरागिषु॥४०॥ मोदकः खाद्यभेदेऽस्त्री हर्षके पुनरन्य
वत्॥ यमकं यमजे शब्दालंकारे पुंसि संयमे॥४१॥ याजकस्तु
गजे राज्ञो याज्ञिकेऽप्यथ याज्ञिकः॥ याजके च कुशे चाथ युतकं सं
शये युगे॥४२॥ नारीवस्त्रांचले युक्ते चलनाग्रेऽपि यौतके॥ यू-

थिकाम्लानकेपुष्पविशेषेपिचयोषिति ॥ ४३ ॥ रसिकास्त्रीरसाले
क्षुरसयोःसरसेत्रिषु ॥ रक्तकोऽम्लानबंधूकरक्तवस्त्रानुरागि-
षु ॥ ४४ ॥ राजिकापिचकेदारेराजसर्षपरेखयोः ॥ रात्रकंपंचरा
त्रेनावेश्यावेश्माब्दवासिनि ॥ ४५ ॥ रुचकोबीजपूरेचनिष्केदंतक
पोतयोः ॥ नद्वयोःसर्जिकाक्षारेप्यश्वाभरणमाल्ययोः ॥ ४६ ॥ सौव
र्चलेपिमांगल्यद्रव्येचाप्युत्कटेपिच ॥ रुंडिकाद्वारपिंड्यांचदूति-
कायांरणक्षितौ ॥ ४७ ॥ रूपकंनाटकेमूर्तेकाव्यालंकरणेपिच ॥
रेणुकापिहरेणौचजामदग्न्यस्यमातरि ॥ ४८ ॥ रोहकःप्रेतभेदे
नारोढरित्रिषुविश्रुतः ॥ लंपाकोलंपटेदेशेलासकोलास्यकारि
णि ॥ ४९ ॥ मयूरेलसकेचाथलूनकोभेदितेपशौ ॥ लोचकोमांस
पिंडेक्षिलारकायांचकज्जले ॥ ५० ॥ ललाटेभरणेस्त्रीणांकदलीनी
लवस्त्रयोः ॥ निर्बुद्धौकर्णपूरेचमूर्व्याभूस्त्रत्थचर्मणि ॥ ५१ ॥ वसुकं
रोमकेपुंसिशिवमल्यर्कपर्णयोः ॥ वर्णकश्चारणेस्त्रीतुचंदनेच
विलेपने ॥ ५२ ॥ द्वयोर्नील्यादिषुस्त्रीस्यादुत्कर्षेकथनस्यच ॥ वर्तक
स्तुखुरेऽश्वस्यविहगेवर्तकीद्वयोः ॥ ५३ ॥ वंचकस्तुखलेधूर्तेगृ
हबभ्रौचजंबुके ॥ व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपिपीडने ॥ ५४ ॥
नानागरेऽथबाल्हीकंबाल्हीकंधीरहिंगुनोः ॥ द्वावेतौपुंसिदेश
स्यप्रभेदेतुरगांतरे ॥ ५५ ॥ वार्द्धकंवृद्धसंघातेवृद्धस्याभावकर्मणोः
॥ वार्षिकंत्रायमाणायांक्लीबंवर्षाभवेत्रिषु ॥ ५६ ॥ वालकोऽस्त्री
पारिहार्येत्रिषुस्यादंगुरीयके ॥ वितर्कस्तुपुमानूहेसंशयेचनि
गद्यते ॥ ५७ ॥ विपाकःपचनेस्वादेकर्मणांविसदृक्फले ॥ विवे
कःस्याज्जलद्रोण्यांपृथग्भावविचारयोः ॥ ५८ ॥ वृश्चिकश्चद्रुणेरा
शौशूककीटौषधीभिदोः ॥ वृषांकःशंकरेसाधौभल्लातकमहल
योः ॥ ५९ ॥ वैजिकंशिग्रुतैलेस्यादूतौसद्योऽकुरेतुना ॥ शलाका
शल्यमदनशारिकाशल्लकीषुच ॥ ६० ॥ छत्रादिकाष्ठशरयोःश
लुकापरुद्रक्षयोः ॥ शंबूकोराजकुंभांतेघोंगेचशूद्रतापसे ॥ ६१ ॥

जलजंतुविशेषे च शंकूकाननपुंसकम्॥ शंखकं वलये कंबावस्त्री पुंसि शिरोरुजि॥ ६२॥ शार्ककः स्याद्दुग्धफेनशर्करापिंडयोः पुमान्॥ शिशुकः शिशुमारे स्याद्बालकोलूपिनोरपि॥ ६३॥ शीतकः शीतकाले च स्वस्थिने दीर्घसूत्रिणि॥ श्लूलकः मावटेपि स्याद्ध्रस्वेऽपि परिकीर्तितः॥ ६४॥ सस्यको मणिभेदे सौसं पर्को मेलके रतौ॥ संपाकस्तर्कके धृष्टेऽत्रिषु नाच तुरंगुले॥ ६५॥ स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः॥ स्वस्तिको मंगलद्रव्ये च तुष्कगृहभेदयोः॥ ६६॥ सरकोऽस्त्री सीधुपाने शीधुपात्रेक्षुसीधुनोः॥ अच्छिन्नोध्वगपंक्तौ च सायकः शरखड्गयोः॥ ६७॥ स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे॥ सूचकः सीवनद्रव्ये बोधके पिशुने श्वनि॥ ६८॥ ओतौ काके सूतकोऽस्त्री पारदे नष्टयोर्जनौ॥ सूदाकुर्नाऽनिले षज्जेज्वलने मतिसूर्यके॥ ६९॥ सेवकस्तु प्रसेवेना वाच्यलिंगोऽनुजीविनि॥ सेचकः स्यात्पुमान्मेघे वाच्यलिंगस्तु सेक्तरि॥ ७०॥ सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके॥ हारकः कितवे चौरे गद्यविज्ञानभेदयोः॥ ७१॥ हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि॥ हेरुको बुद्धभेदे स्यान्महाकालगणेषु च॥ ७२॥ ॥ कचतुः॥ ॥ भवेद्दलिमको भेके पिकेऽलोपद्मकेसरे॥ मधूकेऽप्यथालिपको भृंगकोकिलकुक्कुरे॥ ७३॥ अंगारकः कुजेऽपि स्यात् दुन्मुकांशे कुरुंटके॥ भवेदंगारिका चेक्षुकांडे किंशुककोरके॥ ७४॥ स्याद्श्मंतकमुद्धाने मल्लिकाच्छदनेऽपि च॥ आकल्पकस्तमोमोहग्रंथावत्कलिकामुदोः॥ ७५॥ आक्षेपकोऽनिलव्याधौ व्याधे निंदाकरेऽपि च॥ भवेदाखनिकश्चौरे शूकरे मूषकेऽपि च॥ ७६॥ कथितोत्कलिकोत्कंठा हेलासलिलवीचिषु॥ एडमूकोऽन्यलिंगः स्याच्छठे वाक्श्रुतिवर्जिते॥ ७७॥ कठिल्लुकस्तु पर्णाशे वर्षाभूकारविल्लयोः॥ कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः॥ ७८॥ कर्कोटकः स्यान्मालूरका द्रवेयप्रभेदयोः॥ कलविंकः पुमान्ग्रामचटके पि कलिंगके॥ ७९॥ कनीनि

कातारकेक्ष्णःस्यात्कनिष्ठांगुल्यावपि॥कार्पटिकोऽन्यमर्मज्ञेच्छा
त्रेपुंसिशठेत्रिषु॥८०॥काकरुकोनग्नदंभस्त्रीजितोलूकभीरु
षु॥निंबेकुरुबकःशोणाऽम्लानझिंटीप्रभेदयोः॥८१॥कुरंटकः
पीतपुष्पाम्लानझिंटिकयोःपुमान्॥कृकवाकुर्मयूरेऽपिसरठेच
रणायुधे॥८२॥कोशातकःकठेपुंसिपटोल्याघोषकेस्त्रियाम्॥अ
थकौक्कुटिकोऽदूरप्रेरिताक्षेचदांभिके॥८३॥कौलेयकःसारमेयेकु
लीनेऽथखरालिकः॥ग्रामणीभंडिनाराचेप्युपधानेचपुंस्ययम्॥
८४॥भवेद्गुणनिकानृत्येशून्यांकेपाठनिश्चितौ॥गोकंटकोगोक्षुर
केखपुटेचगवांखुरे॥८५॥गोमेदकंपीतमणौकाकोलेपत्रकेऽपि-
च॥स्याद्गोकुलिकोवलिरेपंकस्थगव्यपक्षके॥८६॥अथघर्घरिका
क्षुद्रघंटावादित्रदंडयोः॥चर्चरीकोमहाकालेकेशविन्यासशाक
योः॥८७॥चंडालिकाकिंनरायामुमायामोषधीभिदि॥अथचातु
रकश्चक्रगंडेपुंस्यभिधेयवत्॥८८॥गोचरेलोचस्यापिचाटुकारे
नियंतरि॥जर्जरीकंबहुच्छिद्रेजरातुरेऽपिवाच्यवत्॥८९॥जीवं-
तिकागुडूच्यांचजीवाख्यशाकवंदयोः॥जैवातृकःपुमान्सोमे-
दीर्घायुःकृशयोस्त्रिषु॥९०॥तर्तरीकंवहित्रेस्यान्नद्योःपारगेत्रिषु
॥तिक्तशाकस्तुखदिरेवरुणेपत्रसुंदरे॥९१॥त्रिवर्णकंगोक्षुर
केत्रिफलायांकटुत्रिके॥दलाढकःस्वयंयाततिलेपृश्न्यांचगैरि
के॥९२॥फेनखातकयोर्नागकेसरेचमहत्तरे॥दंदशूकस्तुपुंल्लिं
गोराक्षसेचसरीसृपे॥९३॥दासेरकस्तुकरभेदासीपुत्रेचधीवरे
॥नियामकःकर्णधारेपोतवाहेनियंतरि॥९४॥निश्वारकःपुरी
षस्यक्षयेस्वैरेसमीरणे॥निर्ग्रंथकःस्यात्क्षपणेनिष्फलेप्यपरिच्छ
दे॥९५॥प्रचलाकःशराघातेशिखंडेचभुजंगमे॥प्रकीर्णकं-
चामरेस्याद्विस्तारेनातुरंगमे॥९६॥पंचालिकास्त्रियांवस्त्रपु-
त्रिकागीतिभेदयोः॥स्यात्पिप्पलकंवक्षोजवृंतेसीवनसूत्रके॥
९७॥पिंडीतकःस्यात्तगरेमदनाख्यमहीरुहे॥अथपुष्कलको

गंधमृगेक्षपणकालयोः॥९८॥पुंडरीकंसितांभोजेसितच्छत्रेच भेषजे॥पुंसिव्याघ्रेऽग्निदिङ्नागेकोशकारांतरेपिच॥९९॥भवेत्पूर्णानकं वर्द्धापनेचपटहेपिच॥ फर्फरीकश्चपेटेस्यात्फर्फरीकं तुमार्दवे॥२००॥ वलाहको गिरौमेघेदैत्यनागविशेषयोः॥ वराटकः पद्मबीजकोशेरज्जौकपर्दके॥१॥ बकेरुका बलाकाभिद्दुतावर्जितशाखयोः॥ वरंडकस्तु मातंगवेद्यांयोवनकंटके॥२॥ वर्तुलेऽथो वाणिजको वाडवाग्नौवणिज्यपि॥ वृंदारकः सुरेपुंसि मनोज्ञश्रेष्ठयोस्त्रिषु॥ ३॥ अथभ्रमरको भृंगेगिरिकेचालकांतरे ॥भट्टारकोनृपेनाट्य वाचा देवेतपोधने॥४॥ भयानकः स्मृतो व्याघ्रे रसेराहौभयंकरे॥ भार्याटिकः पुमान्भार्यानिर्जिते हरिणांतरे॥५॥भवेन्मरुबकः पुष्पविशेषेमदनद्रुमे॥ मंडोदकं चित्तरागे क्लीबमातर्पणेपिच॥६॥भवेन्मंडलकं बिंबेकुष्ठभेदेचदर्पणे॥ अथमर्कटकः सस्यभेदेवानरलूतयोः॥७॥ मयूरकोप्यपामार्गेक्लीबंतुत्थांजनेपुनः॥ माणवको हारभेदेबालेकुपुरुषे पिच॥८॥ मृष्टेरुको वदान्येपिमिष्टाशिन्यतिथिद्विषि॥रतहिंडकं स्याद्दिवसेमुखस्नानेष्टमंगले॥९॥ राधरंकः पुमान्सीरेसीरकेचघनोपले॥ लालाटिकः प्रभोर्भाव दर्शिन्याश्लेषणांतरे॥१० ॥कार्याक्षमे लेखनिकः कथितोलेखहारके॥ लखेषुपरहस्तेन स्वहस्तस्यचलेखके॥११॥ वर्त्तरूको नदीभेदे काकनीडेजलावटे ॥ विनायकस्तुहेरंबे तार्क्ष्येविघ्नेजिनेगुरौ॥१२॥ वितुन्नकस्तु धान्याके झाटामलमयूरके॥विशेषकोऽस्त्रीतिलकेविशेषयितरित्रिषु॥१३॥ विदूषकश्चाटुवटौपरनिंदाकरेऽपिच॥ वैनाशिकः स्यात्क्षणिकेपरतंत्रोर्णनाभयोः॥१४॥ वैदेहको वाणिजके शूद्राद्वैश्यासुतेपिच॥ वैतालिकः पुमान्स्वबोद्धृ तालेबोधकरेत्रिषु॥१५॥ शतानीकस्तु वृद्धेस्यान्मणिराजप्रभेदयोः॥ शालावृकः शृगालेस्यात्सारमेयेबलीमुखे॥१६॥शिलाटकः पु-

मानद्रे विलेपे परिकीर्तितः॥ शृगालिका शिवायां स्यात्त्रासादपि पलायने॥१७॥ शृंगाटकं भवेद्वारि कंटके च चतुष्पथे॥ संतानिकापि क्षीरादिसारे मर्कटजालके॥१८॥ सदंशिकापि स्वच्छुटीलोहयंत्रविशेषयोः॥ संचारिका तु युगले कुट्टन्यां घ्राणयोरपि॥१९॥ संघाटिका स्त्रियां युग्मे कुट्टिन्यां जलकंटके॥ सुप्रतीकः शोभनांगे भवेदीशानदिग्गजे॥२०॥ अथ सैकतिकं मातृयात्रामंगलसूत्रके॥ नासन्यस्ते क्षपणके भिक्षुसंदेहजीविनि॥२१॥ सोमवल्कस्तु धवले खदिरे कट्फलेपि च॥ सौगंधिकं तु कल्हारे पद्मरागे पिकतृणे॥२२॥ पुल्लिंगो गंधपाषाणे सुगंधव्यवहारिणि॥ ॥

॥ ॥ कपंच॥ ॥ अनेडमूकमुद्दिष्टः शठे वाक्श्रुतिवर्जिते॥२३॥ स्यादास्फुरितकं हासनखरराघातभेदयोः॥ उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये॥२४॥ कक्ष्यावेक्षक इत्येष शुद्धांतोद्यानपालयोः॥ रंगाजीवे कुणे खड्गे द्वाःस्थेऽथ कटखादकः॥२५॥ खादके काचकलशे बलिपुष्टे च जंबुके॥ कृमिकंटकं तु चित्रांगविडंगोदुंबरेषु च॥२६॥ गोजागरिकं मंगले पुंसि स्यात्कंटकारके॥ चिलमीलिका तु कंठीभेदे खद्योतविद्युतोः॥२७॥ अथो जलकरंकः स्यान्नालिकेरफलेऽम्बुजे॥ शंखे जललतायां तु वारिवाहे च कीर्तितः॥२८॥ जलतापिक इत्यस्त्री सकाकेचीझषयोश्च पुंसि स्यात्॥ नवफलिका स्त्री नव्येन च जातरजोऽंगनायां च॥२९॥ नागवारिक उद्दिष्टो राजकुंजरहस्तिपे॥ गणस्थराजगरुडे चित्रमेखलकेपि च॥३०॥ स्याद्ब्रीहिराजिकः कंगुधान्यचीनकधान्ययोः॥ व्यवहारिका स्याल्लोकयात्रासंमार्जनीगुदे॥३१॥ शतपर्विका तु दूर्वायां वचायामपि योषिति॥ शीतपंचक इत्येष स्यात्तातर्पणदीपयोः॥३२॥ सुवसंतक उद्दिष्टो वासंत्यां मदनोत्सवे॥ स्याद्धेमपुष्पिका यूथ्यां चंपके हेमपुष्पकः॥३३॥ क

षट् ग्रामम‍ड्डुरिका ग्रामयुद्धे भृंगाक्षे च स्त्रियाम्॥ मदनश

लाकामोद्दीपकभेषज्यसारिकयोः॥३४॥मातुलपुत्रक इत्य
पिमामकतनये फलेच धूर्तस्य॥ वर्णाविलोडकएवश्लोकस्तेनेच
संधिचौरेच॥३५॥सिंदूरतिलकउक्तोमतंगजेस्त्रीतुकामिन्याम्॥
॥ ॥इतिकांतवर्गः॥ ॥खैकंखमिंद्रियेपुरेक्षेत्रेशून्येवि
दोविहायसि॥संवेदनेदेवलोकेकर्मण्यपिनपुंसकम्॥१॥ ॥
खद्वि॥ ॥नखास्त्रीक्लीबयोःशंक्तोनखरेपुन्नपुंसकम्॥न्युंखः
सम्यङ्मनोज्ञेचसाम्नःषट्प्रणवेषुच॥२॥प्रेंखापर्यटणेप्यश्वग-
तौसंवेशनांतरे॥मुखंनिःसरणेवक्त्रेप्रारंभोपाययोरपि॥३॥संध्यं
तरेनाटकादेःशब्देपिचनपुंसके॥लेखोलेख्येस्मरेलेखालिपिरा
जिकयोर्मता॥४॥रिंखाश्वगतिभेदेपिशूकशिंब्यांचनर्तने॥शंखः
कंबौनयोषिन्नाभालास्थिनिधिभिन्नखे॥५॥शाखापक्षांतरेबाहौ
वेदभागद्रुमांगयोः॥शिखाशाखाबर्हिचूडालांगलिक्यग्रमात्रके
॥६॥चूडामात्रेशिखायांचज्वालायांप्रपदेपिच॥सखामित्रेस-
हायेनावयस्यायांसखीमता॥७॥सुखंशर्मणिनाकेचसुखा
पुर्यांप्रचेतसः॥ ॥खत्रि॥ ॥गोमुखंकुटिलागारेवाद्यभां
डेचलेपने॥८॥पुंसिमातलिपुत्रेचमहादेवगणांतरे॥त्रिशिखो
राक्षसेक्लीबंत्रिशूलेमंडलांतरे॥९॥दुर्मुखःकपिभिन्नागभिदोर्ना
मुखरेत्रिषु॥प्रमुखःप्रथमेश्रेष्ठेमयूखःकिरणेपिच॥१०॥ज्वाला
यामपिशोभायांविशिखस्तोमरेशरे॥विशिखातुखनित्र्यांच
रथ्यानलिकयोरपि॥११॥विशाखस्तर्केकेस्कंदेस्त्रियामृक्षेकठि
ल्लके॥वैशाखोमासभेदेपिमंथानेचप्रकीर्तितः॥१२॥सुमुख-
स्तार्क्ष्यतनयेशाकुनामप्रभेदयोः॥ ॥खचतुः॥ ॥भवेद
ग्निमुखोदेवविप्रेभल्लातकेस्त्रियां॥१३॥अथाऽग्निशिखमुद्दि
ष्टंकुसुंभेकुंकुमेपिच॥लांगलिक्याख्योषधौचविशल्यायांचयो
षिति॥१४॥इंदुलेखाऽमृतासोमलताशशिकलासुच॥अथवन्ह
शिखास्त्रीस्याद्रुचटायांशिशौत्रिषु॥१५॥महाशंखोमानुषास्थि

संख्याभेदालिकेषु च॥ भवेद्घ्राणं नखं कंदगंधद्रव्यविशेषयोः॥
१६॥ नखक्षतांतु रेक्लीबंशिलीमुखो ऽलिकांडयोः॥ शशिलेखा
कलाभागे गुडूचीवृत्तभेदयोः॥१७॥ भवेत्स्वस्तिमुखो लेखेब्राह्म
णेवंदिनि त्रिषु॥ ॥खपंच॥ ॥मलिनमुखो ऽग्नौ गोलांगूले
पुंसि त्रिषु क्रूरे॥१८॥ शीतमयूखश्चंद्रे घनसारे चापि पुल्लिंगः॥
सर्वतोमुखउग्रे च क्षेत्रज्ञब्रह्मणोः पुमान्॥१९॥ नपुंसकं तु पानीये
सुरवर्त्मन्यपि स्मृतम्॥ ॥इति खांतवर्गः॥ ॥गेकं॥ ॥
गोः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्॥ स्त्री सौरभेयी दृग्बाण
दिग्वाग्भूष्वप्सु भूम्नि च॥१॥ ॥गद्वि॥ ॥अगः स्यान्नगवत्सूर्ये वो
धरपादपयोः पुमान्॥ अंगं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति
॥२॥ क्लीबे कले त्वप्रधाने त्रिषंगवतिचांतिके॥ इंगः स्यादद्भुते ज्ञा
ने जंगमेंगितयोरपि॥३॥ खगः सूर्यग्रहे देवे मार्गणे च विहंगमे॥
खड्गो गंडकशृंगासि बुद्धभेदेषु गंडके॥४॥ गांगस्तु गंगासंभूते त्रि
षु भीष्मे ग्रहे पुमान्॥ चंगस्तु शोभने दक्षे टंगो ऽस्त्री स्यात्खनित्रके
॥५॥ खड्गभेदे च जंघायां त्यागो दाने च वर्जने॥ तुंगी निशावर्वरयोः
पुन्नागनगयोः पुमान्॥६॥ उन्नते त्रिषु दुर्गो मानी स्योः स्त्री दुर्गमे
त्रिषु॥ नागं नपुंसकं रंगे सीसके करणांतरे॥७॥ नागः पन्नगमा
तंगक्रूराचारिषु तोयदे॥ नागकेसरपुन्नागनागदंतकमुस्तके॥
८॥ देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः॥ पिंगा गोरोचना हिंगु
नालिका चंडिकासु च॥९॥ पिंगी शम्यां पिशंगे ना बालके तु नपुंस
कम्॥ पूगस्तु क्रमुके वृंदे फलसारेऽभिधेयवत्॥१०॥ नदीभेदे
मल्लयां स्त्री भंगो जयविपर्यये॥ भेदरोगतरंगेषु भंगा सस्योतरे
स्त्रियाम्॥११॥ भगः श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु॥ माहा
त्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ॥१२॥ भागो रूपार्द्धके भाग्ये कदे
शयोर्भृगुः पुमान्॥ मुनौ हरे तटे शृंगे भृंगो धूम्याटपिङ्गयोः॥१३॥
मधुव्रते भृंगराजे पुंसि भृंगे गुडत्वचि॥ भोगः सुखे धने चाहेः श

रीवफणयोरपि॥१४॥पालनेव्यवहारेचयोषिदादिभृतावपि॥मा
र्गो मृगमदेमासप्रभेदेऽन्वेषणाध्वनोः॥१५॥मृगः पशौकुरंगेचक
रिनक्षत्रभेदयोः॥अन्वेषणेचयाच्ञायांमृगीतुवनितांतरे॥१६॥यु
गोरथहलाद्यंगेनद्वयोस्तकृतादिषु॥युग्मेहस्तेचतुष्केपिवृद्धिनाम्नौ
षधेऽपिच॥१७॥योगोऽपूर्वार्थसंप्राप्तौसंगतिध्यानयुक्तिषु॥वपुःस्थै
र्येप्रयोगेचविष्कंभादिषुभेषजे॥१८॥विश्रब्धघातकेद्रव्योपायसन्न
ह्नेष्वपि॥कार्मणेपिच रंगोनारागेनृत्येरणक्षितौ॥१९॥अस्त्रीप्रपु-
णिरागस्तुमात्सर्येलोहितादिषु॥क्लेशादावनुरागेचगांधारादौनृपे
पिच॥२०॥रोगः कुष्ठौषधेव्याधौलंगस्तुसंगपिङ्गयोः॥लिंगंचिन्हे
ऽनुमानेचसांख्योक्तप्रकृतावपि॥२१॥शिवमूर्तिविशेषेपिमेहनेपि
नपुंसकं॥व्यंगोभेकेचहीनांगे वंगंसीसकरंगयोः॥२२॥वार्ताकेपि
चकार्पासेपुंभूम्निनीवृदंतरे॥ वल्गुः स्याच्छगलेपुंसिसुंदरेचाभिधे
यवत्॥२३॥वेगोजवेप्रवाहेचमहाकालफलेपिच॥शार्ङ्गः कार्मुक
मात्रेपिविष्णोरपिशरासने॥२४॥शृंगोवटाऽम्रातकयोःपर्कट्याम
पिचास्त्रियाम्॥शृंगंप्रभुत्वेशिखरेचिन्हेक्रीडांबुयंत्रके॥२५॥विषा
णोत्कर्षयोश्चाथशृंगःस्यात्कूर्चशीर्षके॥स्त्रीविषायांस्वर्णमीनभेद
योर्ऋषभौषधौ॥२६॥सर्गस्तुनिश्चयाध्यायमोहोत्साहात्मसृष्टिषु॥
॥ ॥गत्रि॥ ॥अयोगोविधुरेकूटेविश्लेषेकठिणोद्यमे॥२७
॥अनंगोमदनेनंगमाकाशमनसोरपि॥अपांगस्त्वंगहीनेस्यान्ने
त्रांतेतिलकेपिच॥२८॥आभोगोवरुणच्छत्रेपूर्णतायत्नयोरपि॥
अयोगोऽव्यापृतौगंधमाल्योपहारबोधयोः॥२९॥आशुगोमारुते
बाणेप्युद्वेगंक्रमुकीफले॥उद्वेगोप्युद्वाहुलकोद्वेजनोद्भ्रमनेषुच॥
३०॥उत्सर्गःपुंसिसामान्येन्यायेचत्यागदानयोः॥ कलिंगःपूतिक
रजेधूम्याटेभूम्निनीवृति॥३१॥नद्वयोःकौटजफलेमहिलायांतुयो
षिति॥कालिंगोभूमिककोरेदंतावलभुजंगयोः॥३२॥कालिंगी
राजककर्कट्यांचक्रांगोमानसौकसि॥चक्रांगीकटुरोहिण्यांजिह्म

गोऽह्रीचमंदगे॥३३॥ तडागोऽस्त्रीजलाधारविशेषेयंत्रकूटके॥ ता
तगुः क्षुद्रतातेनाजनकस्यहितेत्रिषु॥३४॥ त्रिवर्गोधर्मकामार्थै
स्त्रिफलायांकटुत्रिके॥ वृद्धिस्थानक्षयेसत्वरजस्तमसिचेष्यते॥
३५॥ तुरगीचाश्वगंधायांतुरगश्चित्तवाजिनोः॥ धारांगोऽसौच-
तीर्थेचनरांगस्तुवरंडके॥३६॥ मेहनेनद्वयोश्चाथनारंगः पिप्प
लीरसे॥ यमजप्राणिनिविटेनागरंगद्रुमेपिच॥३७॥ निषंगःसंग
तेतूणेनिसर्गोरूपसर्गयोः॥ नीलंगुःस्यात्कृमौपुंसिभस्मराल्यांतु
योषिति॥३८॥ पत्रांगंनद्वयोर्भूर्जेपद्मकेरक्तचंदने॥ पन्नगश्चौष
धीभेदेतथैवपवनाशने॥३९॥ प्लवगोवानरेभेकेसारथौचोष्णदी
धितेः॥ परागःस्त्रमनोरेणौधूलिस्नानीययोरपि॥४०॥ गिरिभेदे
विख्यातावुपरागेचचंदने॥ प्रयाग स्तीर्थभेदेस्याद्यज्ञेशतमखाश्व
योः॥४१॥ प्रयोगःकर्मणेपिस्यात्प्रयुक्तौचनिदर्शने॥ पतंगःशलभे
शालीप्रभेदेपक्षिसूर्ययोः॥४२॥ क्लीबंस्तेप्रियंगुःस्त्रीराजिकाकण
योरपि॥ फलिन्यांकंगुसस्येचपुन्नागस्तुसितोत्पले॥४३॥ जातीफ
लेनरश्रेष्ठेपांडुनागेद्रुमांतरे॥ वरांगंयोनिमातंगमस्तकेषुगुडत्व
चि॥४४॥ भुजंगोह्रीचषिङ्गेचमातंगःश्वपचेगजे॥ मृदंगःपटहे
घोषेरक्तांगस्तुमहीसुते॥४५॥ कंपिल्लेस्त्रीतुजीवंत्यांक्लीबंविद्रुम
धीरयोः॥ रथांगंनद्वयोश्चक्रेनाचक्रांगविहंगमे॥४६॥ वातिगः
पुंसिभंटाक्यांधातुवादिनिचान्यवत्॥ विडगस्त्रिषुभिज्ञेस्यात्कृ
मिघ्नेपुन्नपुंसकं॥४७॥ विसर्गस्तुपुमान्दानेत्यागेचमलनिर्गमे
॥ विसर्जनीयेप्ययनभेदेपिचविभावसोः॥४८॥ विहंगस्तुत्रिलिं
गःस्यादाशुगेचविहंगमे॥ सर्वगंसलिलेक्लीबंसर्वगःशंकरेविभौ॥
४९॥ संभोगस्तुपुमान्भोगेसुरतेजिनशासने॥ सारंगःपुंसिह
रिणेचातकेचमतंगजे॥५०॥ शबलेत्रिषुहेमांगोगरुडेपरमेष्ठि
नि॥ ॥गचतुः॥ ॥स्यादपवर्गस्त्यागेमोक्षेकार्यावसानक
साफल्ये॥५१॥ अभिषंगोनपुंल्लिंगःपराभवाक्रोशशपथेषु॥

ईहामृगस्तु पुंसि स्यात्कोक रूपकभेदयोः ॥५२॥ उपरागस्तु पुंसि स्या
द्राहुग्रस्ताऽर्कचंद्रयोः ॥ दुर्नये ग्रहकल्लोले व्यसनेपि निगद्यते ॥५३॥
उपसर्गः पुमान्रोगभेदोपप्लवयोरपि ॥ कटभंगस्तु शस्यानां हस्त
च्छेदे नृपात्यते ॥५४॥ छत्रभंगोऽपि वैधव्ये स्वातंत्र्ये नृपनाशयोः ॥
दीर्घाध्वगः पुमानुष्ट्रे लेखहारे तु भेद्यवत् ॥५५॥ मल्लनागोऽभ्रमा
तंगे वात्स्यायनमुनावपि ॥ समायोगस्तु संयोगे समवाये प्रयोजने
॥५६॥ संप्रयोगो रतेपि स्यादन्वितौ कार्मणेपि च ॥ ॥गपंच॥
॥ ॥कथाप्रसंगो वातूले विषवैद्ये च वाच्यवत् ॥५७॥ नाडीतर
गः काकोले हिंडके तरहिंडके ॥ ॥इति गांतवर्गः॥ ॥
घेकं ॥ ॥घो घंटायां घर्घरे ना स्त्रियां तु कांचिघातयोः ॥ ॥
॥ ॥घद्वि॥ ॥अघं तु व्यसने दुःखे दुरिते च नपुंसकम् ॥१॥ अ
र्घः पूजाविधौ मूल्येप्युद्घः स्याद्देहजानिले ॥ अंघो हस्तपुटे श्रस्तेप्योघो
घो वेगे जलस्य च ॥२॥ वृंदे परंपरायां च द्रुतनृत्योपदेशयोः ॥ म
घा मघी च नक्षत्रे धान्यभेदे यथाक्रमं ॥३॥ मघो द्वीपांतरे मेघो
मुस्ताजलदयोः पुमान् ॥ मोघा स्त्री पाटलायां स्याद्धीननिष्फलयो
स्त्रिषु ॥४॥ लघुः स्याद्गुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबं ॥ शीघ्रे च कृष्णा
गुरुणि पृक्कानामौषधौ तु स्त्री ॥५॥ श्लाघा स्त्रियां प्रशंसायां परिचर्या
भिलाषयोः ॥ ॥घत्रि॥ ॥अनघो निर्मलापापमनोज्ञेष्वभि
धेयवत् ॥६॥ अमोघं सफले वाच्यवत्स्त्री पथ्याविडंगयोः ॥ उल्ला
घोपि शस्तो कृष्णे दक्षनीरोगयोस्त्रिषु ॥७॥ कांचिघः कांचनेपि
स्यात्क्षेमंडे मूषकेपि च ॥ निदाघो ग्रीष्मकाले स्यादुष्णस्वेदांबुनोर
पि ॥८॥ पलिघः काचकलशे घटे प्राकारगोपुरे ॥ परिघो योगभे
देऽस्त्रविशेषे र्गलघातयोः ॥९॥ प्रतिघः प्रतिघाते स्यात्क्रोधेपि प
रिकीर्तितः ॥ महार्घस्तु महामूल्ये त्रिषु स्याल्लावके पुमान् ॥१०॥
सर्वौघो गुरुभेदे च सर्वसन्नहने पुमान् ॥ ॥इति घांत
वर्गः॥ ॥ङैकम्॥ ॥ङः पुमान्विषये ख्यातः

स्पृहायांविषयस्यच॥ ॥इतिङांतवर्गः॥ ॥चैकं॥ ॥
चश्चंडेशेपुमानुक्तःकच्छपेचंद्रचोरयोः॥ ॥चद्वि॥ अर्च्चापू
जाप्रतिमयोःकचःकेशेगुरोःसुते॥१॥बंधेशुष्कव्रणेपुंसिकरिण्यां
तुकचास्त्रियाम्॥काचःशिक्यमणौनेत्ररोगभेदेमृदंतरे॥२॥कां
चीस्यान्मेखलादाम्निप्रभेदेनगरस्यच॥कूर्चमस्त्रीभ्रुवोर्मध्येकठि
नश्मश्रुकेतवे॥३॥क्रौंचोद्वीपविशेषेस्यात्पक्षिपर्वतभेदयोः॥च
र्चाचिंतास्थासकयोश्चर्चिकायांतुयोषिति॥४॥चंचातुनलनिर्मा
णेतृणनिर्मितपूरुषे॥चंचूस्त्रोट्यांस्त्रियांपुंसिगोनाडीकेव्यडंबके
॥५॥त्वक्स्त्रीचर्मणिवल्केचगुडत्वचिविशेषतः॥न्यङ्नीचनिम्नयो
र्नीचःपामरेवामनेपिच॥६॥प्राक्पूर्वादिशिदेशेचकालेचवाच्यलिं
गकः॥पिचुर्नाकुष्ठभेदेचकर्षेतूलेसुरांतरे॥७॥मोचःशोभांजने
पुंसिमोचाशाल्मलिरंभयोः॥रुचिःस्त्रीदीप्तौशोभायामभिषंगाभि
लाषयोः॥८॥रुक्स्त्रीशोभाद्युतीच्छासुवचःकीरेवचौषधौ॥
शारिकायांचवाग्वाचेभारत्यांवचनेस्त्रियौ॥९॥वीचिःस्वल्पतरंगे
स्यादवकाशेसुखेद्वयोः॥शचीद्रप्यांशतावर्यांतथास्त्रीकरणां
तरे॥१०॥शुचिर्ग्रीष्माग्निशृंगारेषाषाढेशुद्धमंत्रिणि॥ज्येष्ठेचपुं
सिधवलेशुद्धेनुपहतेत्रिषु॥११॥सूचीतुसीवनद्रव्येप्यांगिकाभि
नयांतरे॥ ॥चत्रि॥ ॥उदग्दिग्देशकालेषुवाच्यवत्रितये
ऽव्ययं॥१२॥कुणांचीपुष्पितलतागुंजयोःशकटेस्त्रियाम्॥कव
चोगर्दभांडेचसन्नाहेपटहेपिच॥१३॥क्रकचःकरपत्रेऽस्त्रीग्रंथि
लाख्यतरौपुमान्॥नमुचिस्तुपुमान्दैत्यभेदेकुसुमकार्मुके॥
१४॥नाराचेषणिकायांनालोहबाणांबुहस्तिनोः॥प्रपंचःसंच
येपिस्याद्विस्तारेचप्रतारणे॥१५॥प्रत्यग्दिग्देशकालेषुवाच्यव-
त्रितयेऽव्ययम्॥मरीचिर्मुनिभेदेनागभस्तावनपुंसकम्॥१६॥
मारीचोरक्षसोभेदेकक्कोलेयाजकद्विजे॥मारीचीदेवताभेदेवि
पंचीकेलिवीणयोः॥१७॥विकचःक्षपणकेतोनाऽकेशेस्फुटिते

ऽन्यवत्॥ विरिंचिर्ना विरिंचश्च वैकुंठे परमेष्ठिनि॥१८॥ संकोचो मीनभेदे स्याद्बंधे क्लीबं तु कुंकुमे॥ सम्यक्कुस्याद्वाच्यलिंगं तु मनोज्ञे संगतेपि च॥१९॥ ॥चचतुः॥ ॥जलसूचिः कंकत्रोटि मत्स्यशृंगाटयोरपि॥ शिशुमारे च पुल्लिंगो जलौकायां तु योषिति॥२० मलिम्लुचो मांसभेदे चौरज्वलनयोः पुमान्॥ ॥चपंच॥ ॥ रतनारीचो नारीणां सीत्कारे च शुनि स्मरे॥२१॥ ॥इति चांतवर्गः॥ ॥छैकं॥ ॥छाच्छादने स्त्रियां ख्याताति निर्मलेन्यवदिष्यते॥ ॥छद्वि॥ ॥अच्छः स्फटिकभल्लूकनिर्मले प्वच्छमव्ययम्॥१॥ आभिमुख्ये ऽथ कच्छः स्यादनूपे तुन्नकद्रुमे ॥नौकांगे पुंसि वाराह्यां चीरिकायां च योषिति॥२॥ स्याद्गुच्छः स्तबके स्तंबे हारभेदकलापयोः॥ पिच्छा पूगच्छटाकोशमोचाशाल्मलिवेष्टके॥३॥ भक्तसंभूतमंडे च पंक्तावश्वपदामये॥ स्त्रियां पुंसि तु लांगूले नद्योर्बर्हे च चूडयोः॥४॥ पुच्छः पश्चात्प्रदेशे स्याल्लांगूले पुच्छमिष्यते॥ म्लेंछः पामरभेदे च पापरक्तेऽपभाषणे॥५॥ ॥ छचतुः॥ ॥महाकच्छस्तु पुंसि स्यात्समुद्रे च प्रचेतसि॥ ॥ ॥इति छांतवर्गः॥ ॥जैकं॥ ॥जो नामृत्युंजये जन्यां तात मात्रे जनार्दने॥ जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम्॥१॥ जूराकाशसरस्वत्यां पिशाच्यां जवने स्त्रियां॥ ॥ जद्वि॥ ॥अजश्छागे हरिब्रह्मविधुस्मरनृपे हरे॥२॥ अब्जोस्त्री शंखे नानिचुले धन्वंतरौ च हिमकिरणे॥ क्लीबं पद्मे ऽथाजिः स्त्री समभूमौ च संग्रामे॥३॥ ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेपि च॥ कंजः केशे विरिंचे च कंजं पीयूषपद्मयोः॥४॥ कुजा कात्यायनीदेव्यां कुजो नरकभौमयोः॥ कुब्जो वृक्षप्रभेदे नान्युब्जे स्याद्वाच्यलिंगकः॥५॥ कुंजोऽस्त्रियां निकुंजेपि हनौ दंतेपि हस्तिनां॥ खंजाछंदःप्रभेदे स्त्री कुटिलांघ्रौ तु वाच्यवत्॥६॥ खजा मंथे महस्तेऽथ खर्जुः कीटांतरे स्मृता॥ खर्जूरी पादपे कंड्वां गजो माने मतंगजे

॥७॥ वास्तनःस्थानभेदेपि गंजाखनौसुरागृहे॥ गंजःस्यात्पुंसिरी
दायांभांडागारेतुनस्त्रियां॥८॥ गुंजातुकाकचिंचायां पटहे च कल
ध्वनौ॥ द्विजःस्याद्ब्राह्मणक्षत्रवैश्यदंतांडजेषुना॥९॥ द्विजाभार्ङ्गी
हरेणौच ध्वजःस्याच्छौंडिकेपुमान्॥ नस्त्रियांतुपताकायांखट्वां
गेमेढ्रचिन्हयोः॥१०॥ निजंस्वीयेचनित्येच न्युब्जोदर्भमयस्रुचि
॥ कर्मरंगफलेक्लीबं पु. ब्जाधोमुखयोस्त्रिषु॥११॥ प्रजालोकेचसं
तानेपिंजा तूलहरिद्रयोः॥ बलेक्लीबं वधेपुंसि व्याकुलेत्रिष्वथोभु
जा॥१२॥ द्वयोर्बाहौकरे मर्जूःस्त्रीशुद्धौधावकेपिच॥ रजोरेणौप
रागेस्यादार्त्तवेचगुणांतरे॥१३॥ रज्जुर्वेण्यांगुणेयोषि व्राजिः
स्त्रीपंक्तिलेखयोः॥ रुजारोगेचभंगेथ लाजःस्यादार्द्रतंडुले॥१४
॥ नपुंसकमुशीरेथस्त्रियांपुंभूम्निचाक्षते॥ व्रजोगोष्ठाध्ववृंदेषु
वाजोनिःस्वनपक्षयोः॥१५॥ वेगेपुमानथक्लीबे घृतयज्ञान्नवारि
षु॥ व्याजःशाठ्येऽपदेशेऽथ बीजमंकुरकारणे॥१६॥ हेतुतत्वाधा
नशुक्रे सर्जुर्वणिजि विद्युति॥ स्त्रियांस्वंजोधिधीरुद्रे स्वजःप्रस्वेद
पुत्रयोः॥१७॥ क्लीबरक्तेऽथसंजःस्यात्सन्नद्धेसंभृतेत्रिषु॥ ॥
जत्रि॥ ॥अंडजामृगनाभौस्यात्सरटेऽहौखगेझषे॥१८॥ अं
गजंरुधिरेनंगकेशपुत्रगदेषुना॥ अंबुजोनिचुलेपुंसि कमलेतु
नपुंसकम्॥१९॥ असृक्स्याद्योगभेदेनारक्तेपिस्यान्नपुंसकम्
॥ कंबोजो हस्तिभेदेपिशंखदेशविशेषयोः॥२०॥ करजंस्याद्व्या
घ्रनखेकरजंनखयोःपुमान्॥ कारुजःशिल्पिनांचित्रे वामलूरे
गजार्भके॥२१॥ कांबोजोऽश्वांतरेसोमवल्केपुन्नागपादपे॥ कां
बोजीमाषपर्ण्यांच बलक्षखदिरेऽस्त्रियाम्॥२२॥ कुटजो वृक्षभे
देस्यादगस्त्यद्रोणयोरपि॥ गिरिजंत्वभ्रकेऽपिस्याच्छिलाजतु
निशैलजे॥२३॥ लोहेपिगिरिजागौरीमातुलुंग्योश्चयोषिति॥
जलजंकमलेशंखेनीरजंकुष्ठपद्मयोः॥२४॥ परंजस्तैलयंत्रे
स्याच्छुरिकाफलफेनयोः॥ बलजंगोपुरक्षेत्रेशस्यसंगरयोरपि

॥२५॥ बलजा वरयोषायां यूथ्यामथ वणिक्स्त्रियां॥ वणिज्यायां
पुमान्वाणिज्यके च करणांतरे॥२६॥ बाहुजः क्षत्रिये कीरे स्वयजा
ततिलेपि च॥ भूमिजो नरकेऽगारे सीता देव्यां तु भूमिजा॥२७॥ व
नजा मुद्गपर्ण्यां ना मुस्तके क्लीबमंबुजे॥ सहजस्तु निसर्गे ना सहो
त्थे पुनरन्यवत्॥२८॥ समजः पशुवृंदे ना विपिने तु नपुंसकम्॥
सामाजस्तु गजे पुंसि सामोत्थे पुनरन्यवत्॥२९॥ हिमजा तु श
च्यां गौर्योः पुंसि मैनाकपर्वते॥ ॥जचतुः॥ ॥अहिभुग्बर्हि
णो तार्क्ष्ये पुंसि काश्मीरजं पुनः॥३०॥ कुष्ठकुंकुमयोः क्लीबे तिविषा
यां तु योषिति॥ क्षीराब्धिजं तु सामुद्रलवणे मौक्तिकेपि च॥३१॥
पुमांस्तुषारकिरणे कमलायां तु योषिति॥ ग्रहराजो रवौ चंद्रे
जघन्यजः कनीयसि॥३२॥ वृषले द्विजराजस्तु चंद्रेऽनंते गरुत्मति
॥ धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्॥३३॥ भरद्वाजो गुरोः
पुत्रे व्याघ्राटाख्यविहंगमे॥ भारद्वाजा वनकार्पास्यां ना द्रोणऋ
षिभेदयोः॥३४॥ अथ भृंगराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे
॥ यक्षराट् पुंसि धनदे मल्लानां रंगचत्वरे॥३५॥ राजराजः कुबेरेपि
सार्वभौमे सुधाकरे॥ ॥जपंच॥ ॥ऋषभध्वज एषो
पि शंकरे चार्हदंतरे॥३६॥ मुनिभेषजमागस्त्यहरीतक्यां च लंघने
॥ ॥इति जांतवर्गः॥ ॥झैकं॥ ॥झो झंझाशे
सुरगुरौ दैत्यराजे ध्वनावपि॥ ॥झद्वि॥ ॥झंझावातेतार
वायोनष्टेपि कीर्त्यते बुधैः॥ झंझाध्वनिविशेषे च स्यादंबुकणवर्ष-
णे॥ ॥इति झांतवर्गः॥ ॥ञैकं॥ ॥ञः पुमान्
स्याद्बलीवर्दे शुक्रे चामसतावपि॥ ज्ञो ब्रह्मबुधविद्वत्सु स्यादज्ञोज
डमूर्खयोः॥१॥ प्रज्ञस्तु पंडिते वाच्येलिंगे बुद्धौ च योषिति॥ राज्ञी रा
जप्रियायां च भार्यायां भास्करस्य च॥२॥ संज्ञा नामनि गायत्र्यां चे
तनारवियोषितोः॥ अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति॥३॥
॥ ॥ञत्रि॥ ॥कृतज्ञः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत्

क्षेत्रज्ञ आत्मनिच्छेदे दैवज्ञो गुणके पुमान्॥४॥ दैवज्ञे क्षणिका ग्रांस्त्री सर्वज्ञः शिवबुद्धयोः॥ ॥इतिञांतवर्गः॥ ॥टैकं॥ ॥टः पुमान्वामने पादे निःस्वनेपि क्वचिन्मतः॥ ॥टद्वि॥ ॥अट्टं भक्ते च शुष्के नाक्षौमेऽत्यर्थे गृहांतरे॥१॥ इष्टमाशंसितेपि स्यात्पूजिते प्रेयसि त्रिषु॥ समतंतो पुमान्क्लीबे संस्कारे क्रतुकर्मणि॥२॥ इष्टिर्मताऽभिलाषेपि संग्रहश्लोक यागयोः॥ कटः श्रोणौ द्वयोः पुंसि किलिंजेऽतिशये शरे॥३॥ समये गजगंडे च पिप्पल्यां तु कटी मता॥ कटु स्त्री कटुरोहिण्यां लताराजिकयोरपि॥४॥ नपुंसकमकार्ये स्यात्पुल्लिंगे रसमात्रके॥ त्रिषु तद्वत्कगंध्योश्च मत्सरे पि खरे पि च॥५॥ कष्टं तु गहने कृच्छ्रे कुष्टं रोदनरावयोः॥ कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे॥६॥ कुटी स्यात्कुंभदास्यां च सुरायां चित्रगुच्छके॥ कूटोऽस्त्री निश्चले राशौ लोहमुद्गरदंभयोः॥७॥ मायाद्रिशृंगयोस्तुच्छे सीरावयवयंत्रयोः॥ अनृते चाथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान्॥८॥ कोटिः स्त्री धनुषोऽग्रेऽश्री संख्याभेदप्रकर्षयोः॥ खटो ऽधकूपकफयोः प्रहारांतरटंकयोः॥९॥ खाटिस्त्वसद्गृहेपि स्यात्किणे शवरथे स्त्रियाम्॥ खेटः कफे ग्रामभेदे चर्मण्यस्त्र्यधमे त्रिषु॥१०॥ अथ गृष्टिः सकृत्सूतगवीबदरयोस्त्रियाम्॥ घटः समाधिभेदे भशिरः कूटकुटेषु च॥११॥ घटा घटनगोष्ठीभघटनासु च योषिति॥ घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुक्रांतासु नाकिरी॥१२॥ घोंटा तु बदरीपूगवृक्षयोरपि योषिति॥ चटुश्चाटोपि पिंडे च व्रतिनामासने पुमान्॥१३॥ जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी॥ जुष्टं तु क्लीबमुच्छिष्टे सेविते वाच्यलिंगकं॥१४॥ झाटो निकुंजे कांतारे व्रणादीनां च मार्जने॥ तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु॥१५॥ त्वष्टा पुमान्देवशिल्पि तक्ष्णोरादित्यभिद्यपि॥ त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मेला कालमानयोः॥१६॥ त्रोटिः स्त्री कट्फले चंच्वां खगमीनांतरेऽपि च॥ दृष्ट

देवेपुमान् काले दिष्टिर्मुत्परिमाणयोः॥ १७॥ स्त्रियां दृष्टिः स्त्रियांकुट्टी
लोचनेदर्शनेपिच॥ घटोदिव्यतुलायांस्याद्धटीचीरेचवाससः॥१८
॥ नटीनल्योषधेस्त्रीस्यात् शैलूषाशोकयोःपुमान्॥ पटश्चित्रपटे
वस्त्रेऽस्त्री प्रियालद्रुमेपुमान्॥१९॥ पटुर्दक्षेचनीरोगे चतुरेप्यभिधे
यवत्॥ पटोलेतुपुमान्क्लीबे छत्रालवणयोरपि॥२०॥ पट्टःपेषणा
पाषाणे व्रणादीनांचबंधने॥ चतुष्पथेचराजादिशासनांतरपीठ
योः॥ २१॥ पटिः स्त्रीपटभेदेस्याद्धारगुल्डोकुंभिकाद्रुमे॥ पुष्टिः स्त्री
पोषणेवृन्दोफदातुफणदंतयोः॥२२॥ वटीत्रिषुगुणेपुंसिस्यान्न्य
ग्रोधकपर्दयोः॥ भटः स्यात्पुंसिवीरेचविशेषेपामरस्यच॥२३॥ भृ
ष्टिः स्याद्भर्जनेभून्यतादिकायांचयोषिति॥ म्लिष्टंत्रिषव्यक्तवाचि
म्लानेमुष्टिर्द्वयोःफले॥२४॥ बद्धपाणोत्सरोयष्टिःपुंसिस्याद्भुज
दंडके॥ द्वयोर्हारलताभांग्योर्मधुकाशस्त्रभेदयोः॥२५॥ रिष्टंक्षेमा
शुभाभावेपुंसिखड्गेचफेनिले॥ रिष्टिःखड्गेनाशुभेस्त्री लाटोदे
शांतरेऽशुके॥२६॥ वाटोमार्गेवृतिस्थानेस्यात्कुटीवास्तुनोःस्त्रियां
॥ विटोऽद्रौलवणेषिड्गेमूषिकेखदिरेपिच॥२७॥ विष्टिः स्त्रियुक
र्मकरेस्याज्जूवेतनकर्मसु॥ व्युष्टिःफलेसमृद्धौस्त्री व्युष्टंकल्ये-
त्रिषूपिते॥२८॥ सटाजटाकेसरयोस्फुटोव्यक्तप्रफुल्लयोः॥ व्याप्ते
त्रिषुस्फुटिर्योषित्पादस्फोटामयेपिच॥२९॥ निर्भिन्नकर्कटीशस्ये
ऽपिस्यात्सृष्टंतुनिर्मिते॥ युक्तनिश्चितयोःप्राज्येत्रिषुसृष्टिस्तुनि
र्मितौ॥३०॥स्वभावेचापिकथिताहृष्टोरोमांचितेपिच॥जातह
र्षेप्रहसितेविस्मितेप्यभिधेयवत्॥३१॥ ॥टत्रि॥ ॥
अवटःस्यात्खिलेगर्तेकूपेकुहकजीविनि॥ अरिष्टो लशुनेनिंबे
फेनिलेकाककंकयोः॥३२॥ अरिष्टमशुभेतक्रेसूतिकागारआ
सवे॥ शुभेमरणचिन्हेचाऽदिष्टमादेशितेत्रिषु॥३३॥ आज्ञप्तोच्छि
ष्टयोःक्लीबमुत्कटस्तीव्रमत्तयोः॥ उद्भटःकच्छपेभूपे कर्कटोपिह
गांतरे॥३४॥ राशिभेदेकुलीरेच वास्त्रक्यांशाल्मलीफले॥ कर्कटः

करहाटेस्यात्संकपंकारयोरपि॥ ३५॥ करटोगजगंडे स्यात्कुसुम्भेनिं द्यजीवने॥ एकादशाहादिश्राद्धे दुर्दुरूढेपिवायसे॥ ३६॥ करटो वाद्यभेदेथकार्पटोजंतुकार्पिणोः॥ कीकटः कृपणेनिःस्वेत्रिषु पुंभूम्निनीवृति॥ ३७॥ कुरुंटोदारुपुत्र्यांनाझिंटीम्लानप्रभेदयोः ॥ कुक्कुटस्तृणोल्कायांचकुक्कुभे॥ कुनटीमनःशिलायांनेपाल्यामपि योषिति॥ ३९॥ कूपीटस्तुदरेतोयेकेशटोहर्यजोल्कटे॥ चर्पटःस्फा रविपुलेचपेटेपर्पटेपिच॥ ४०॥ चक्राटोविषवैद्येपिधूर्तदीनार योरपि॥ चिपिटःस्याद्यभेदेनात्रिषुपिट्टितविस्तृते॥ ४१॥ चिरिंटी तुसुवासिन्यांस्याद्दितीयवयःस्त्रियां॥ जकुटंवार्त्ताकुपुष्पेजकु टोमलयेशुनि॥ ४२॥ त्र्यंकटंशिक्यभेदेपिधौतांजन्यांचनह्योः॥ त्रिकुटंसिंधुलवणेत्रिकूटःपर्वतांतरे॥ ४३॥ त्रिपुटामल्लिका- यांचसूक्ष्मैलात्रिवृतोःस्त्रियाम्॥ सतीनकेचतीरेचत्रिपुटःसमु दाहृतः॥ ४४॥ द्रोहाटःकथितोगाथाप्रभेदेमृगलुब्धके॥ वैडाल व्रतिकेचाऽथधाराटश्चातकाश्वयोः॥ ४५॥ निर्दटस्तुदयाशून्येक थितोनिष्प्रयोजने॥ परापवादरक्तेचवाच्यलिंगोयमिष्यते॥ ४६॥ निष्कुटस्तुगृहोद्यानेस्यात्केदारकपाटयोः॥ पर्कटीनूतनफलेपू गादेःप्लक्षपादपे॥ ४७॥ परीष्टिःपरिचर्यायांप्राकाम्येऽन्वेषणेस्त्रिया म्॥ पर्पटंपिष्टभेदेस्यात्पर्पटोभेषजांतरे॥ ४८॥ पात्रटःकर्परेपुं सिदेशेस्यादभिधेयवत्॥ पिच्चटोनेत्ररोगेस्यात्क्लीबंसीसकरंग योः॥ ४९॥ वरटाहूयोर्वरट्यांस्त्रीहंस्यांचतस्यतेपुमान्॥ वर्वटी- पण्ययोषायांव्रीहिभेदेचयोषिति॥ ५०॥ वेकटःस्याद्देकटिकेम- त्स्यभेदेचयूनिच॥ भावाटोभावकेसाधुनिवेशेकामुकेनटे॥ ५१ ॥ भाकूटःशैलझषयोर्भेदेस्यादथमर्कटी॥ करंजभिच्छूकशिं ब्योःपुंसिवानरलूतयोः॥ ५२॥ मोचाटःकृष्णजीरेचरंभास्थिम- लयोद्भवे॥ मोरटंतुभवेदिक्षुमूलांकोटप्रसूनयोः॥ ५३॥ समरा

आत्परक्षीरेमूर्विकायांतुमोरटा ॥ वर्णाटोगायनेचित्रकरेस्त्रीकृत
जीवने॥५४॥ विकटा वज्रवाराह्यांत्रिषूरुविकरालयोः॥ शाकटं-
शाकटस्येदमित्यर्थेतस्यवोदरि॥५५॥ शैलाटोदेवलेसिंहेशुक्ककाचकिरातयोः॥ संसृष्टंत्रिषुसंसर्गेसंशुद्धेवसनादिना॥५६॥ ॥
॥ ॥टचतुः॥ ॥उच्चिंगटस्तृणगडमत्स्येकोपनपूरुषे॥
करहाटःशिफाकंदेपद्मस्यमदनद्रुमे॥५७॥स्यात्कार्पटःक्र
पणोन्मत्तानर्थकरेषुच॥कामकूटस्तुवेश्यायाःप्रियविभ्रमयोः
पुमान्॥५८॥ कुटन्नटंतुकैवर्त्तीमुस्तकेपुंसिशोणके॥ कुंडकी
टस्तुचार्वाकवचनाऽभिज्ञपूरुषे॥५९॥ पतितब्राह्मणीपुत्रदासी
कामुकयोरपि॥खड्गारीटस्तुफलकासिधाराग्रतधारिणोः॥
६०॥ गाढमुष्टिःकृपाणेनाकृपणेत्वभिधेयवत्॥चक्रवाटःक्रि
यारोहेपर्य्यंतेचशिखातरौ॥६१॥ चतुःषष्टिःकलासंख्याभेदयोर्ब
हृचित्स्त्रियां॥नारकीटोऽश्मकीटेस्यात्स्वदत्ताशाविहंतरि॥६२॥
परपुष्टःपरभृतेवारनार्यांतुयोषिति॥प्रतिकृष्टंमतंगुह्येद्विरा
वृत्याचकर्षिते॥६३॥प्रतिसृष्टःप्रेषितेस्यात्प्रत्याख्यातेचवाच्य
वत्॥वर्करांटःकटाक्षेस्यात्तरुणादित्यरोचिषि॥६४॥ नारीपयो
धरोत्संगकांतदंतनखक्षते॥शिपिविष्टस्तुखल्वतौशिवेदुश्च
र्मणिस्मृतः॥६५॥अथश्रुतिकटःप्रांचल्लोहेऽहौपापशोधने॥
॥ ॥टपंच॥ ॥दशनोच्छिष्टःपुंसिस्यान्निश्वासाध
रचुंबयोः॥६६॥ ॥इतिटांतवर्गः॥ ॥ठेकं॥ ॥
ठोमंडलेचद्रबिंबेशून्येचलोकगोचरे॥ ॥ठद्वि॥ ॥
ठकोमुनौतदाख्यातवेदाध्येतृज्ञयोःस्वरे॥१॥ कंठोगलेसन्नि
धानेध्वनौमदनपादपे॥काष्ठादारुहरिद्रायांकालमानप्रक
र्षयोः॥२॥स्थानमात्रेदिशिचस्त्रीदारुणिस्यान्नपुंसकम्॥कुष्ठं
रोगेपुष्करेस्त्रीकुंठोकर्मण्यमूर्खयोः॥३॥कोष्ठःकुसूलेचात्मीयेम
ध्येकुक्षौगृहस्यच॥गोष्ठंगोस्थानकेगोष्ठीसभासंलापयोःस्त्रि

याम्॥४॥ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासांतरे पुमान्॥ ज्येष्ठा तु गृहगोधारव्यजंतुनक्षत्रभेदयोः॥५॥ निष्ठा निष्पत्तिनाशांतयाञ्चानिर्वहणेषु च॥ प्रष्ठस्त्रिषु अग्रगे श्रेष्ठे पुंसि चांडालकोषधौ॥६॥ पाठश्च पठने रव्यातो विद्धपर्ण्यां तु योषिति॥ पृष्ठं चरममात्रेऽपि देहस्यावयवांतरे॥७॥ वंठः स्यादकृतोद्वाहे खर्वेऽकुंतायुधेऽपि च॥ शठो मध्यस्थपुरुषे धूर्तधूस्तूरयोरपि॥८॥ श्रेष्ठो वरे कुबेरे च शोठो मूर्खेऽलसेऽपि च॥ षष्ठी कात्यायनीतिथ्योस्त्रिषु षण्णां च पूरणे॥९॥ हठः स्यात्प्रसभे पृश्न्यां हठो बाधाविहेठयोः॥ ॥ ठत्रि॥ ॥अपष्ठु पुंसि काले च वामे स्यादन्यलिंगकः॥१०॥ अंबष्ठो देशभेदेऽपि विप्राद्वैश्यासुते पि ते पि च॥ अंबष्ठा चाम्ललोण्यां स्यात्पाठायूथिकयोरपि॥११॥ कमठः कच्छपे पुंसि भांडभेदे नपुंसकम्॥ कनिष्ठोऽतियुवाल्पानुजे स्त्री दुर्बलांगुलौ॥१२॥ जरठः कर्कशे पांडौ कठिणोऽप्यभिधेयवत्॥ नर्मठश्चिबुके षिङ्गे प्रतिष्ठा गौरवे क्षितौ॥१३॥ स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः॥ प्रकोष्ठो मणिबंधस्य कूर्परस्यांतरेऽपि च॥१४॥ भूपकक्ष्यांतरेऽपि स्याद्वरिष्ठं मरिचेऽपि च॥ ताम्रे क्लीबं तित्तिरौ ना वरोरुत्तमयोस्त्रिषु॥१५॥ मकुष्ठो व्रीहिभेदे ना मंथरे पुनरन्यवत्॥ लघिष्ठोऽत्यल्पके भेल्ले वैकुंठः कृष्णशक्रयोः॥१६॥ श्रीकंठो देशभिद्धर्गे साधिष्ठोऽतिदृढार्थयोः॥ ॥ठचतुः॥ ॥ कलकंठः कलध्वाने हंसे पारावते पिके॥१७॥ कालकंठश्च दात्यूहे कलविंके च खंजने॥ मयूरे पीतशाले च स्यात्खंडपरशौ पुमान्॥१८॥ कालपृष्ठं कर्णचापे पुंसि कंकविहंगमे॥ स्याद्दंतशाठो जंबीरे कपित्थे कर्मरंगके॥१९॥ नागरंगेऽपि च पुमान्स्योच्चांगेर्यां तु योषिति॥ पूतिकाष्ठं च सरलदेवदारुमहीरुहोः॥२०॥ सूत्रकंठः पुमान्विप्रे खंजरीटकपोतयोः॥ हारिकंठः पिके पुंसि हारान्वितगलेऽत्रिषु॥२१॥ ॥ ॥ इति ठांतवर्गः॥ ॥ ॥

डैकम्॥ ॥डः पुमान् वाडवाग्नौ स्याड्डा किन्यां स्त्री निगद्यते॥
॥ ॥डद्वि॥ ॥अंडं मुष्केऽपि पेश्यां स्यादिडा तु बुधयोषिति॥
१॥ सौरभेय्यां च वचने व स्क्रमस्त्वामपि स्त्रियाम्॥ कांडः स्तंबे तरुस्कं
धे बाणेऽवसरनीरयोः॥२॥ कुत्सिते वृक्षभिन्नाडी वृंदे रहसि न स्त्रि
याम्॥ क्रीडा केलिप्रकारे स्यात्सखलावज्ञानयोरपि॥३॥ कुंडमग्न्या
लये मानभेदे देवजलाशये॥ कुंडी कमंडलौ जारात्सति पत्नीसुते पु
मान्॥४॥ पिठरे तु न नाक्ष्वेडो ध्वनौ कर्णामये विषे॥ क्ष्वेडा वंशशला
कायां सिंहनादे च योषिति॥५॥ लोहिताकें पर्णफले घोषपुष्पे न
पुंसकम्॥ दुरासदे च कुटिले वाच्यलिंगः प्रकीर्तितः॥६॥ क्रोडः श
नौ सूकरे ना न पुमानंकरक्षसोः॥ खंडोऽस्त्री शकले नेक्षुविकारमणि
दोषयोः॥७॥ खंडः पानांतरे भेदे गंडः स्यात्पुंसि खड्गिनि॥ ग्रहयोग
प्रभेदे च वीथ्यंगेऽपि टकेऽपि च॥८॥ चिन्हवीरकपोलेषु हयभूषणबु
द्बुदे॥ गडुः पृष्ठगुडे कुब्जे गडो मीनांतरायोः॥९॥ गुडः स्याद्गोलके
हस्तिसन्नाहे क्षुविकारयोः॥ गुडा स्नुह्यां च कथिता गुडिकायां च
योषिति॥१०॥ गोंडः पामरजातौ च वृद्धनाभौ च तद्वति॥ चंडो नाति
न्तिडी वृक्षे यमकिंकरदैत्ययोः॥११॥ चंडा धनहरी शंखपुष्प्योः स्त्रि ष्व
ति कोपने॥ चंडी कात्यायनी देव्यां हिंस्त्रकोपनयोषितोः॥१२॥ ती
व्रेऽपि चूडा वडभौ शिखायां बाहुभूषणे॥ चोडः प्रावरणे भूम्नि देश
भेदे जडा स्त्रियाम्॥१३॥ शूकशिंब्यां हिमग्रस्त मूकाप्रज्ञेषु तु त्रिषु॥
ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु॥१४॥ ताडी पत्रद्रुमे चाथ
दंडोऽस्त्री लगुडे पुमान्॥ व्यूहभेदे प्रकांडेऽश्वे कोणमंथानयोर
पि॥१५॥ सैन्ये काले मानभेदे चंडांशोः पारिपार्श्विके॥ दमयमेऽभि
माने च नाडी नाले व्रणांतरे॥१६॥ शिरायां गंडदूर्वायां चर्यायां कु
हनस्य च॥ तथा षट्क्षणकालेऽपि नीडं स्थानकुलाययोः॥१७॥ पं
डः षंडेऽधिपि स्त्री स्यात्पांडुर्ना नृपतौ सिते॥ पिंडो बोले बले सांद्रे
देहागारैकदेशयोः॥१८॥ देहमात्रे निवापे च गोलसिल्हकयोर

पि॥ओडुपुष्पेचपुंसिस्यात्क्लीबमाजीवनासयोः॥१९॥पिंडीतुपिंडीत
गरेऽलाबुखर्जूरभेदयोः॥पीडाकृपाशिरोमालाऽपमर्दसरलद्रुषु॥
२०॥भांडंपात्रेवणिङ्मूलधनेभूषाऽश्वभूषयोः॥मंडःपंचांगुलेशाक
भेदेक्लीबंतुमस्तुनि॥२१॥आमलक्यांस्त्रियांमंडाऽथाऽस्त्रियांसार
पिच्छयोः॥मुंडोदैत्यांतरेराहुग्रहेनामुंडितेत्रिषु॥२२॥मुंडामुंडीर
कायांस्यात्स्त्रियामस्त्रीतुमूर्द्धनि॥रंडामूषिकपर्ण्यांचविधवायांच
योषिति॥२३॥रोडःक्षोदभवेत्पुंसितृप्तेतुवाच्यलिंगकः॥रंडातु
पांसुकायांस्त्रीत्रिषुहस्तादिवर्जिते॥२४॥व्याडोहिंस्रपशौसर्पेशुं
डापानगृहेमता॥अप्यंबुहस्तिनीवेश्याहस्तिहस्तसुरासुच॥२५॥
शौंडोमत्तेचविख्यातःपिप्पल्यांचभवेत्स्त्रियां॥षंडंपद्मादिसंघा
तेनस्त्रीस्याद्गोपतौपुमान्॥२६॥ ॥डत्रि॥ ॥करंडो
मधुकोशासिकारंडेषुदलाढके॥कूष्मांडीतूमायांस्त्रीपुंसिकर्कारौ
चगणांतरे॥२७॥भ्रूणांतरेऽथकोदंडंचापेनानीवृदंतरे॥भुव्य
थोगारुडंक्ष्वेडमंत्रेमरकतेपिच॥२८॥तरंडोबडिशीसूत्रबद्ध
काष्ठादिकेप्लवे॥नौकायामपिनस्त्रीस्यात्तित्तिडीडिंबचिंचयोः॥२९
द्राविडोदेशभिज्जातेसंख्याभिद्धमुख्ययोः॥निर्गुंडीनीलशेफा
ल्यांसिंधुवारद्रुमेपिच॥३०॥प्रचंडोदुर्वहेश्वेतकरवीरेप्रतापिनि
॥प्रकांडोनस्त्रीविटपेमूलशाखांतरेतरोः॥३१॥शस्तेपिचंडउद
रेपशोरवयवेपुमान्॥पूत्यंडोगंधकीटेपितथाजंत्वंतरेपुमान्
॥३२॥वरंडोप्यंतरेवेदीसमूहमुखरोगयोः॥वारुंडीद्वारपिंड्यां
स्त्रीफणिनांराजकेपुमान्॥३३॥नस्त्रियांसेकपात्रेचमलेक्ष्णःश्र
वणस्यच॥भेरुंडादेवताभेदयक्षिण्यंतरयोःस्त्रियां॥३४॥भया
नकेवाच्यवत्स्यान्मार्तंडःक्रोडसूर्ययोः॥मारुंडोऽंडेभुजंगानां
मार्गेगोमयमंडले॥३५॥वरंडासारिकावर्तिशस्त्रभेदेचयोषि
ति॥वितंडावादभेदेस्यात्कच्चीशाकेशिलाह्वये॥३६॥करवीर्या
मपिस्त्रीस्याच्छिखंडोबर्हचूडयोः॥शरंडस्तुपुमान्धूर्तेशरठे

भूषणांतरे॥३७॥ ॥डचतुः॥ ॥अपोगंडस्त्रबलिभे विकलांगेशिशावपि॥अतिगंडोयोगभेदेबृहद्गंडेतुवाच्यवत् ॥३८॥चक्रवाडोऽद्रिभेदेस्याच्चक्रवाडंतुमंडले॥जलरुंडोजलावर्तेपयोरेणौभुजंगमे॥३९॥देवताडःसैंहिकेयेजीमूतेचहुताशने॥अथवातकुडावात्याराजशोणितयोरपि॥४०॥पृष्ठिलस्फोटिकायांचवामायामपियोषिति॥ ॥इतिडांतवर्गः॥ ॥५३०॥ ॥ढोढक्कायांपुमानुक्तःश्वनितस्यचलांगुले॥ ॥ढद्वि॥ ॥गूढंरहसिगुप्तेचनद्वयोःसंवृतेत्रिषु॥१॥दृढंस्थूलेनितांतेचप्रगाढेबलवत्यपि॥माढिःस्त्रीपत्रपंक्तौचदैन्यस्यापिप्रकाशने॥२॥मूढस्तंद्रितेबालेराढारस्त्रीशरूपशोभयोः॥रूढंजातेप्रसिद्धेचबाढंदृढप्रतिज्ञयोः॥३॥व्यूढःसंहतविन्यस्तपृथुलेष्वभिधेयवत्॥वोढेनाभारिकेसूतेशंढःस्यात्पुंसिगोपतौ॥४॥आरूढंडेवर्षवरेतृतीयाप्रकृतावपि॥षोढात्रिनिक्षासंयुक्तेशक्तेचाप्यभिधेयवत्॥५॥ ॥ढत्रि॥ ॥अध्यूढाकृतसापत्न्यनार्यामध्यूढईश्वरे॥आषाढोव्रतिनांदंडेमासेमलयपर्वते॥६॥स्त्रीपूर्णिमायामालीढंपादन्यासेशितेत्रिषु॥उद्गूढंऊढेस्थूलेस्यादुपोढोनिकटोढयोः॥७॥प्रगाढःकृच्छ्रदृढयोःप्रमीढोमूत्रितेघने॥प्ररूढोजठरेबद्धमूलेप्यारूढइत्ययं॥८॥वरूढांचलेकपाटेऽग्नौपंजरेशंबलेपिच॥विरूढोंकुरितेजातेविगूढोगर्हितेपिच॥९॥गुप्तेपित्रिषुसंरूढःप्रौढेचांकुरितेत्रिषु॥समूढःपुंजितेभुग्नेसद्योजातेसुपप्लुते॥१०॥ ॥ढचतु॥ ॥अध्यारूढंसमारूढेऽभ्यधिकेचाभिधेयवत्॥रवढ्ढारूढःश्रितेरवढ्ढामविनीतेचवाच्यवत्॥११॥प्रत्यालीढंतुचरणान्यासभेदेशितेत्रिषु॥ ॥इतिढांतवर्गः॥ ॥५३१॥ ॥णैकं॥ ॥णःपुमान्बिंदुदेवेस्याद्भूषणेगुणवर्जिते॥पानीयनिलयेपीतिकेचिदूचुर्विपश्चितः॥१॥ ॥णद्वि॥ ॥

अणुर्व्रीहिविशेषेस्यात्पुंसिसूक्ष्मेभिधेयवत्॥ अणिराणिवद्दक्षा
ग्रकीलाश्रिसीमसुद्वयोः॥२॥उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्य
लिंगकः॥ऊर्णामेषादिलोम्निस्यादंतरावर्तकेभ्रुवोः॥३॥ कर्णः
पृथाज्येष्ठसुतेसुवर्णालौश्रुतावपि॥ क्षणःपर्वोत्सवव्यापारेषु
मानेऽप्यनेहसः॥४॥ कणाजीरककुंभीरमक्षिकापिप्पलीषु च
॥ कणोऽतिसूक्ष्मेधान्यांशेकाणःकाकेकचक्षुषोः॥५॥ कीर्णंदत्ते
चविक्षिप्तेहिंसितेप्यभिधेयवत्॥कुणिस्तुन्नकवृक्षेनाकुकरे-
त्वभिधेयवत्॥६॥ कृष्णःसत्यवतीपुत्रेवायसेकेशवेऽर्जुने॥
कृष्णास्याद्द्रौपदीनीलीकणाद्राक्षासुयोषिति॥७॥ मेचकेवा-
च्यलिंगःस्यात्क्लीबेमरिचलोहयोः॥ कोणोवाद्यप्रभेदेस्याद्वीणा
दीनांचवादने॥८॥एकदेशेगृहादीनामश्रौचलगुडेपिच॥गणः
प्रथमसंख्यौघेचंडासैन्यप्रभेदयोः॥९॥गुणोमौर्व्यामप्रधानेरू
पादौसूदइंद्रिये॥त्यागशौर्यादिसत्वादिसंध्याद्यावृत्तिरज्जुषु॥
१०॥शुक्लादावपिवट्यांचगेष्णुर्नागायनेनटे॥घ्राणंक्लीबंना
सिकायांघ्रातेस्याद्वाच्यलिंगकम्॥११॥घृणाजुगुप्साकृपयो-
रथचूर्णीकपर्दके॥चूर्णोधूलौक्षारभेदेचूर्णानिवासयुक्तिषु॥
१२॥जर्णुश्चंद्रेचवृक्षेचजिष्णुर्नावासवेर्जुने॥जित्वरेवाच्यवज्जी
र्णंपरिपक्वपुराणयोः॥१३॥झूणिःक्रमुकभेदेपिदुष्टदेवसुतो
स्त्रियाम्॥त्राणंतुत्रायमाणायांरक्षणेरक्षितेत्रिषु॥१४॥ती
क्ष्णंसामुद्रलवणेविषलोहाजिमुष्कके॥क्लीबंजवाग्रजेपुंसि=
तिग्मात्मत्यागिनोस्त्रिषु॥१५॥तूणीनील्यांनिषंगेना तृष्णा
स्यात्तर्षलिप्सयोः॥दीर्णंविदारितेभीते द्रुणंचापेऽलिनिद्रुणः
॥१६॥द्रुणीतुद्रोणीकच्छप्योर्देष्णुर्दातरिदुर्गमे॥द्रोणोऽस्त्रि
यामाढकेस्याद्दवापञ्चतुष्टये॥१७॥पुमान्कृपीपतौदग्धका
लेस्त्रीनीवृदंतरे॥तथाकाष्ठांबुवाहिन्यांगवादिन्यामपीष्यते
॥१८॥पणोवराटमानेस्यान्मूल्येकार्षापणेग्रहे॥क्रय्यशाका

दृंकाद्यूतव्यवहारेभृतौधने॥१९॥ पर्णंपत्रेकिंशुकेनापार्ष्णिः स्यादुन्मदस्त्रियां॥स्त्रियांद्वयोःसैन्यपृष्ठेपादग्रंथ्यधरेपिच॥२०॥ प्राणोस्त्रन्मारुतेबोले काव्यजीवेऽनिलेऽबले॥पुल्लिंगःपूरितेवाच्य लिंगःपुंभूम्निचासुषु॥२१॥ पूर्णःशक्तेसमग्रेनापूरितेत्वभिधेयवत्॥ फाणिर्गुडेकरंबेचस्त्रियांवाणीतुयोषिति॥२२॥ व्यूताब पिसरस्वत्यांभ्रूणःस्त्रीगर्भडिंभयोः॥ मणिःस्त्रीपुंसयोरश्मजातौमुक्तादिकेपिच॥२३॥ कंठदेशेस्तनेजायालिंगाग्रेऽलिंजरेपिच॥ मोणःशुष्कफलेनक्रमक्षिकाऽहिकरंडयोः॥२४॥ रणःक्वोणेक्वणेपुंसिसमरेपुन्नपुंसकं॥रेणुःस्त्रीपुंसयोर्धूलौपुल्लिंगःपर्पटेपुनः॥२५॥ वर्णोद्विजादिशुक्लादियशोगुणकथासुच॥ स्तुतौनानस्त्रियांभेदरूपाक्षरविलेपने॥२६॥ बाणःस्याद्गोस्तनेदैत्यभेदेकेवलकांडयोः॥ बाणातुबाणमूलेस्त्रीनीलझिंट्यांपुनर्द्वयोः॥२७॥ वीणाविद्युतिवल्लक्यां वृष्णिःपांडवचंद्रयोः॥त्रिषुनायादवेमेषे वेणीकेशस्यबंधने॥२८॥ नद्यादेरंतरेदेवताले वेणुर्नृपांतरे॥ त्वक्सारेपिचपुंसिस्याच्छाणोमासचतुष्टये॥२९॥ लौहादीनांचनिषकेशाणीप्रावरणांतरे॥ श्राणापक्केयवाग्वांस्त्रीशीर्णंतनुविशीर्णयोः॥३०॥ श्रेणिःस्त्रीपुंसयोःपंक्तौसमानशिल्पिसंहतौ॥ शोणःकृशानौश्योनाकेलोहिताश्वेनदेपुमान्॥३१॥ त्रिषुकोकनदच्छायेस्थाणुःकीलेहरेपुमान्॥ अस्त्रीध्रुवेऽथस्थूणास्यात्स्त्रर्म्यांस्तंभेगृहस्यच॥३२॥

॥ णत्रि ॥

अरुणोऽव्यक्तरागेऽर्केसंध्यारागेऽर्कसारथौ॥ निःशब्देकपिलेकुष्ठभेदेनागुणिनित्रिषु॥३३॥ अरुणाऽतिविषाश्यामामंजिष्ठात्रिवृतासुच॥ अरणिर्वन्हिमंथेनाद्वयोर्निर्मथ्यदारुणि॥३४॥ अभीक्ष्णंतुभृशेनित्येलघ्वक्तक्रियपोस्त्रिषु॥ इंद्राणीकरणंस्त्रीणांपौलोमासिंधुवारयोः॥३५॥ ईरिणंतूषरेभून्येपीक्षणंदर्शनेदृशि॥ ऊषणंमरिचेक्लीबंकणायामुषणास्त्रियाम्॥३६॥ एषणी

व्रणमार्गानुसारिण्यांच तुलाभिदि॥ करुणास्त्करसे वृक्षे कृपायां
करुणामता॥३७॥ कल्तृणं तृणभित्पृथ्व्योः करणं हेतुकर्मणोः॥
वणिजादौ हस्तलेपे नृत्यगीतप्रभेदयोः॥३८॥ क्रियाभेदेन्द्रियक्षेत्र
कायसंवेशनेषुच॥ कायस्थे साधने क्लीबं पुंसि भू ज्ञाविशेषःस्मृते॥
॥३९॥ कल्याणमक्षयस्वर्गे मंगलेपि नपुंसकं॥ कंकणं करभू
षायां सूत्रमंडनयोरपि॥४०॥ करेणुर्गजयोषायां स्त्रियां पुंसि म
तंगजे॥ कार्मणं मंत्रतंत्रादि योजने कर्मठेपिच॥४१॥ काकिणी
पणतुर्यांशे मानदंडेच दृश्यते॥ कृष्णलेकवराटयोः स्यादुन्मानस्यां
शकेपिच॥४२॥ कारणं करणे हेतुवधयोश्च नपुंसकम्॥ स्त्री या
तनायां कुर्वाणो भृत्यकारकयोस्त्रिषु॥४३॥ कृपाणः खड्गे क्षु-
रिकाकर्त्तर्योरपि योषिति॥ कृपणस्त्रक्रमो पुंसि मंदकुत्सितयो
स्त्रिषु॥४४॥ क्षेपणं प्रेरणे नौकादंडजालभिदोः स्त्रियां॥ ग्रहणं
स्वीकारादरकरोपरागोपलब्धिबंदिषु॥४५॥ स्याद्ग्रामणीः प्रधानेऽधि
पतौ त्रिषु नापिते पुंसि॥ ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभि
धेयवत्॥४६॥ गोकर्णोऽश्वतरे सर्पसारंगे च गणांतरे॥ अंगुष्ठा
नामिकोन्माने गोकर्णी मूर्विकौषधौ॥४७॥ चरणोऽस्त्री बह्वृचा
दौ मूले गोत्रे पदेपिच॥ भ्रमणे भक्षणे चापि नपुंसकमुदाहृतः
॥४८॥ जरणं जीरके जार्जां हिंगुसौवर्चलेपिच॥ तरुणं कुब्जपु
ष्पेनारुबुके यूनि तु त्रिषु॥४९॥ तरणिर्द्युमणौ पुंसि कुमारीनौक
योः स्त्रियाम्॥ दक्षिणो दक्षिणोद्भूतसरलच्छंदवर्त्तिषु॥५०॥ आ
रामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्॥ द्रविणं न द्वयोर्वित्ते
कांचनेच पराक्रमे॥५१॥ दारुणो रसभेदेना त्रिषु तु स्याद्भयावहे॥ द्रुघणो मुद्गरेपि स्यात् द्रुहिणेच परश्वधे॥५२॥ दुर्वर्णं त्रिषु
सहूर्णं क्लीबमैलेयरूप्ययोः॥ दौर्वाणं मृष्टपर्णे स्याद्दूर्वायां स्वरसे
पिच॥५३॥ धर्मणस्त्रुपुमान्वृक्षभेदसर्पप्रभेदयोः॥ धरणं मा
नभेदेपि धारणं धरणी भुवि॥५४॥ धर्षणं स्यात्परिभवे रतेऽ

सत्यांतु धर्षिणि॥ धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि॥५५॥
धारणी नाडिकायांस्यात्सुश्रोक्तमंत्रभिद्यपि॥ धारणा गेच योगस्य
नपुंसि स्याद्धि धारणे॥५६॥ धिषणस्त्रिदशाचार्ये धिषणा धियि
योषिति॥ निःश्रेणिरधिरोहिण्यां खर्जूरी पादपे स्त्रियाम्॥५७॥
निर्याणं वारणापांगदेशे मोक्षे ध्वनिर्गमे॥ निर्माणं निर्मितौ सारे-
ऽसमंजसे नपुंसकम्॥५८॥ निर्वाणमस्तंगमने निर्वृतौ गजमः
ज्जने॥ संगमेप्यपवर्गे च प्रवणो ना चतुष्पथे॥५९॥ क्रमनिम्नमही
भागोदरप्रह्वेषु च त्रिषु॥ प्रघणस्ताम्रकुंभे स्यादलिंदे लोहमु
द्गरे॥६०॥ प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि॥ इयत्तायां च
हेतौ च क्लीबैकत्वे प्रमातरि॥६१॥ पत्रोर्णं धौतकौशेये क्लीबं स्या
च्छोणके पुमान्॥ पक्षिणी पूर्णिमायां स्याद्विहंग्यां शाकिनीभिदि
॥६२॥ आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम्॥ प्रवेणिः स्त्री
कुथावेण्योः पुराणं पंचलक्षणे॥६३॥ पणे पुंसि त्रिषु प्रत्ने पूरणः पू
रके त्रिषु॥ क्लीबं पिंडप्रभेदे च पूरणी शाल्मलिद्रुमे॥६४॥ पद्धारंभक
सूत्रेषु प्रोक्षणं सेचने वधे॥ वरुणस्तरुभेदेऽप्सु पश्चिमाशापता
यपि॥६५॥ वरुणस्तु पुमान् तिक्तशाकप्राकारयोरपि॥ क्लीबं क
न्यादिवरणे वेष्टने स्त्री नदीभिदि॥६६॥ वारणं प्रतिषेधे स्याद्वार
णस्तु मतंगजे॥ ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम्॥६७॥
भूमिदेवे तु पुल्लिंगः स्पृक्काजिकापृक्कयोः स्त्रियाम्॥ वारुणी गंडदूर्वा
यां प्रतीचीसुरयोरपि॥६८॥ भरणी घोषकेऽऋक्षे भरणं वेतने भृ
तौ॥ भ्रमणी कारंडिकायां क्रीडाद्यायामधीशितुः॥६९॥ भीषणो
रसे सल्लक्यां नागाढे दारुणे त्रिषु॥ मसृणोऽकर्कशे स्निग्धे भिषूमा
यांतु योषिति॥७०॥ मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेपि च
॥ उद्दंशे नालिकेरे च मार्गणो याचके शरे॥७१॥ याञ्चान्वेषणयोः
क्लीबं यंत्रणं रक्षणे स्मृतम्॥ बंधने स्यान्नियमने रवणः शब्दने
खरे॥७२॥ रमणं पटोलमूले नार्यां स्त्री ना धवे स्मरे॥ रोषणः पार

देहेमघर्षणोपल्लयोः पुमान् ॥ ७३ ॥ क्रोधनेवाच्यलिंगः स्याद्रोहि
णीकंठरुग्भिदि ॥ तडित्कटुंभरासोमवल्केषुलोहितागवोः ॥ ७४ ॥
लवणंसैंधवादौनासिंधुरक्षोभिदोरसे ॥ तद्युक्तेवाच्यलिंगः स्यान्
नदीभेदद्विषोः स्त्रियाम् ॥ ७५ ॥ लक्षणंनाम्निचिन्हेचसारस्यांल
क्षणाक्वचित् ॥ लक्ष्मणात्वौषधीभेदेसारस्यामपियोषिति ॥ ७६
॥ रामभ्रातरिपुंसिस्यात्सश्रीकेचाभिधेयवत् ॥ विषाणीक्षीरका
कोल्यामजशृंग्यांचयोषिति ॥ ७७ ॥ कुष्ठनाम्नोषधेक्लीबंपशुशृंगेभ
दंतयोः ॥ विपणिः पण्यवीथ्यांचभवेदापणपण्ययोः ॥ ७८ ॥ शर
णंगृहरक्षित्रोर्वधरक्षणयोरपि ॥ श्रवणंचश्रुतौकर्णेनक्षत्रेचन
पुंसकम् ॥ ७९ ॥ श्रमणोयतिभेदेनानिंद्यजीविनितुत्रिषु ॥ स्त्रियां
सुदर्शनामांस्यांमुंडीरीशबरीभिदोः ॥ ८० ॥ श्रावणोमासिपाषंडे
दध्यात्स्त्यांश्रावणास्त्रियाम् ॥ शिंघाणंकाचपात्रेचलोहनासिक
योर्मले ॥ ८१ ॥ श्रीपर्णीकाश्मरीकुंभ्योः क्लीबंपद्माग्निमंथयोः ॥ सं
कीर्णनिचितेपिस्यादशुद्धेचापिभेद्यवत् ॥ ८२ ॥ सरणिः पंक्तौमा
र्गेचसारणोराक्षसांतरे ॥ रुग्भेदेनाप्रसारण्यांस्वल्पनद्यांचसा
रणी ॥ ८३ ॥ सुषेणः करमर्देस्याद्विष्णुसुग्रीववैद्ययोः ॥ सुव
र्णोनास्वर्णकर्षेसुवर्णातुमरवांतरे ॥ ८४ ॥ श्रीकृष्णागुरुणिक्लीबे
कांचनेहरिचंदने ॥ सुपर्णः स्वर्णचूडेचगरुडेकृतमालके ॥ ८५ ॥
सुपर्णीकमलिन्यांचवैनतेयस्यमातरि ॥ हरेणुर्नासतीलेस्त्री
रेणुकाकुलयोषितोः ॥ ८६ ॥ हरणंयौतकादीनांद्रव्येभुंजेर्हता
वपि ॥ हरिणः पुंसिसारंगेविषदेत्वभिधेयवत् ॥ ८७ ॥ हरिणी
हरितायांचनारीभिद्वृत्तभेदयोः ॥ सवर्णप्रतिमायांचहर्षणोऽ
क्षिरुगंतरे ॥ ८८ ॥ हर्षकेयोगभेदेचश्राद्धदेवेपिचक्वचित् ॥ हिर
ण्यंरेतसिस्वर्णेवराटेचनपुंसकम् ॥ ८९ ॥ णचतुः

अंगारिणीहसंत्यांचभास्करत्यक्तदिश्यति ॥ अथर्वणिर्नाऽथ
र्वज्ञब्राह्मणेचपुरोधसि ॥ ९० ॥ आतर्पणंप्रीणयेस्यान्मंगलाले

पनेपिच॥आरोहणंस्यात्सोपानेसमारोहेप्ररोहणे॥९१॥उत्क्षेप
णंतुव्यजनेधान्यमर्दनवस्कनि॥स्यादुद्धरणमुद्धारवांतान्नोन्मू
लेष्वपि॥९२॥कार्षापणोऽस्त्रीकार्षिकेपणषोडशकेपिच॥अथका
मगुणोरागेविषयाभोगयोरपि॥९३॥जीर्णपर्णंतुनिंबेपिखर्जूरी
भूरुहेपुमान्॥चूडामणिःशिरोरत्नेकाकचिंच्याफलेपुमान्॥९४॥
जुहुवाणोऽपिचाध्वर्यावपिस्याज्जातवेदसि॥तंडुवीणःकीटमा
त्रेवर्बरेतंडुलोदके॥९५॥त्रायमाणावार्षिकेस्त्रीरक्ष्यमाणेऽभिधे
यवत्॥तैलपर्णीमलयजेश्रीवासेसिल्हकेपिच॥९६॥दाक्षायणी
त्वपर्णायामश्विन्याद्युडुषुस्त्रियाम्॥अथदेवमणिर्भर्गेऽश्वावर्तेकौ
स्तुभेपिच॥९७॥नारायणोच्युतेभीरुगौर्योर्नारायणीमता॥अ
थोनिगरणंक्लीबंभोजनेस्याद्गलेपुमान्॥९८॥अथनिःसरणंमु
त्यूपायमोक्षेषुनिर्गमे॥स्यान्निस्तरणमुपायेनिस्तारेतरणेपिच
॥९९॥निरूपणंस्यादालोकेविचारेचनिदर्शने॥पर्परीणश्चपर्ण
स्यशिरायांद्यूतकंबले॥१००॥पर्णचूर्णरसेपिस्यात्पर्परीणंतुपर्व
णि॥प्रवारणंनिषेधेस्यात्काम्यदानेचनद्वयोः॥१॥परीरणःस्या
त्कमठेदंडेचपट्टशाटके॥परायणमभीष्टेस्यात्तत्पराश्रययोरपि
॥२॥परवाणिःपुमान्धर्माध्यक्षवत्सरयोरपि॥परायणंसमासं
गकार्त्स्न्येपारगतावपि॥३॥पीलुपर्णीबिंबिकायांमूर्वायामोष
धीभिदि॥अथपुष्करिणीत्वेभ्यांसराजिन्यांजलाशये॥४॥मधुप
र्णीतुगंभार्यांनीलीसंज्ञौषधावपि॥मीनीम्राणस्तुपुल्लिंगोडुंडुरा
म्रेन्चरवंजने॥५॥रक्तरेणुस्तुसिंदूरपलाशकोरकेपुमान्॥राग
चूर्णःपुमान्दंतधावनेमकरध्वजे॥६॥रेरिहाणस्तुपुंसिस्यान्महा
देवेंबरेपिच॥लंबकर्णःस्मृतोकोटपादपेच्छगलेपिच॥७॥विदा
रणंविडंबेचभेदेकुंबिरणेद्वयोः॥अथवैतरणीनद्यांप्रेतानांयातु
मातरि॥८॥शरवाणिःशरमुखेपापिष्ठेशरजीविनि॥पुमानथो
शिखरिणीरसालावृत्तभेदयोः॥९॥नारीरत्नेमल्लिकायांरोमाव

ल्यामपि स्त्रियाम्॥ अथ संसरणं क्लीबमसंबाधचमूगतौ॥१०॥ घं
टापथे च संसारे रणारंभे च कुत्रचित्॥ समीरणः स्यात्पवने पथि
के च फणिज्झके॥११॥ हस्तिकर्णश्चोरुबूके पलाशगणभेदयोः॥

॥ ॥णपंच॥ ॥अवग्रहणमित्येतत्प्रतिरोधेप्यनाद
रे॥१२॥ अवतारणं भूतादिग्रहे वस्त्रांचलेऽर्चने॥ प्रविदारणमा
ख्यातं संपराये ऽवदारणे॥१३॥ परिभाषायां सनिंदोपालंभने निय
मेपि च॥ उक्तो मत्तवारणस्तु प्रक्लिन्नकटकुंजरे॥१४॥ क्लीबं प्रासा
दवीथीनां कुंडवृक्षवृतावपि॥ मंडूकपर्णी मंजिष्ठाब्राह्मण्योर्ना
तु शोणके॥१५॥ रोमहर्षणं रोमांचे ना सूते च बिभीतके॥ वालरा
यणा उन्मत्ते निष्प्रयोजनपूरुषे॥१६॥ कांडे च परपत्रे च कूटे च पर
संक्रमे॥ ॥णषट्॥ ॥दोहदलक्षणमुक्तं वयःसंधौ
च गर्भे च॥१७॥ यौवनलक्षणमप्याख्यातं लावण्यकुचयोश्च

॥ ॥ ॥इति णांतवर्गः॥ ॥६४१॥ ॥तैकं॥ ॥

तश्चौरामृतपुच्छेषु क्रोडे म्लेंछे च कुत्रचित्॥ अंशुमांस्तरणौ पुण्ये-
कथितः शब्दवेदिभिः॥१॥ ॥तद्वि॥ ॥अस्तं क्षिप्तेप्य
वसिते त्रिषु ना पश्चिमाचले॥ अंतं स्वरूपे नाशे ना नस्त्री शेषेऽंतिके
त्रिषु॥२॥ आर्त्तिः पीडाधनुष्कोट्योः स्त्र्याप्ते लब्धे स्वसत्तयोः॥ आप्तिः
स्त्री योगसंप्राप्त्योरितं स्मृते गते त्रिषु॥३॥ ईतिर्डिंबप्रवासेतिवृ
ष्ट्यादिषट्के च स्त्रियाम्॥ उक्तमेकाक्षरच्छंदस्युक्तं स्याद्भाषिते त्रि
षु॥४॥ ऊतिः स्त्री रक्षणे स्यूता ऋतिः कल्याणवर्त्मनोः॥ जुगुप्सास्पर्ध
योः स्त्री स्यादृतमुञ्छशिलाजले॥५॥ सत्ये दीप्ते पूजिते स्यादृतुर्व
र्षादिषट्के च॥ आर्तवे मासि च पुमानेतः कर्बुर आगते॥६॥ क्ष
त्ता शूद्रात्क्षत्रियजे प्रतीहारे च सारथौ॥ भुजिष्या तनयेपि स्यान्नि
युक्तवेधसोः पुमान्॥७॥ कर्त्ता तु कारके वाच्यलिंगो ना परमेष्ठिनि
॥ क्रतुर्यज्ञे मुनौ पुंसि कांतिः शोभेच्छयोः स्त्रियाम्॥८॥ कांता
नार्यां प्रियंगौ स्त्री शोभने त्रिषु ना धवे॥ लोहे च चंद्रसूर्याद्यः पर्या

यांतः शिलास्कच ॥ ९ ॥ क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रिया
म् ॥ कीर्त्तिः प्रसादयशसोर्योषित् कुंतो गवेधुकायां स्यात् ॥ १० ॥ प्रा
सायुधेच कुंती गुग्गुलु पृथयोश्च शाल्लुक्याम् ॥ कृतं युगेऽलमर्थे स्या
द्विहिते हिंसिते त्रिषु ॥ ११ ॥ कृत्तं तु वेष्टितेच्छिन्ने कृतिः कारणहिंस
योः ॥ कृत्तिश्चर्मत्वचोर्भूर्जे कृत्तिकायां हयं स्त्रियाम् ॥ १२ ॥ केतुर्ना
रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि ॥ गर्त्तस्त्रिगर्तभेदे स्याद्वटे
चकुकुंदरे ॥ १३ ॥ ग्रस्तं ग्रासीकृतेपि स्याल्लुप्तवर्णपदेपि च ॥ गतिः स्त्री
मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः ॥ १४ ॥ नाडीव्रणसरण्यांचगतं-
विज्ञातयातयोः ॥ गातुर्ना कोकिले भृंगे गंधर्वे त्रिषु रोषणे ॥ १५ ॥
गीतिश्छंदसि गाने स्त्री गीतं शब्दितगानयोः ॥ गुप्तिरन्धवकरस्थाने
कारागारे च रक्षणे ॥ १६ ॥ गुप्तं स्याद्रक्षिते गूढे घातः कांडप्रहारयोः
॥ घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् ॥ १७ ॥ चित्तं छन्ने त्रिषु
चिता चित्यायां संहतौ स्त्रियाम् ॥ चितिश्चित्यावृंदयोः स्त्री जातं व्य
क्तौघजन्मसु ॥ १८ ॥ क्लीबं त्रिलिंगमुत्पन्ने जातिः स्त्री गोत्रजन्मनोः
॥ अश्मंतिकामलक्योश्च सामान्यच्छंदसोरपि ॥ १९ ॥ जातीफलेच
मालत्यां ज्ञातिस्तातसगोत्रयोः ॥ पुमानथ ततं व्यासे विस्तृते चत्रि
लिंगकम् ॥ २० ॥ क्लीबं वीणादिवाद्ये स्यात्पुल्लिंगस्तु समीरणे ॥ ताते
नुकंप्येजनके तिक्तो रसस्कगंधयोः ॥ २१ ॥ तिक्ता तु कटुरोहिण्यां
पर्पटे तु नपुंसकम् ॥ तूस्तं रेणौच विख्यातं जटायांच नपुंसकम्
॥ २२ ॥ त्रेतायुगेऽग्नित्रितये दत्तं विश्राणितेऽर्चिते ॥ दंतोऽद्रिकटके-
कुंजे दशनेऽथौषधौ स्त्रियाम् ॥ २३ ॥ दांतस्तु दमितेपि स्यात्तपः क्ले
शसहे त्रिषु ॥ दितिर्दैत्यजनन्यां च खंडनेपि च योषिति ॥ २४ ॥ दी
प्तं निर्भासिते दग्धे ज्वलितेऽथ द्रुतं त्रिषु ॥ शीघ्रे विलीने विद्राणे द्यु
तिः स्त्री रश्मिशोभयोः ॥ २५ ॥ दृतिश्चर्मपुटे मत्स्ये ना धातुर्नेद्रिये
त्रिषु ॥ शब्दयोनिमहाभूततद्गुणेषु रसादिषु ॥ २६ ॥ मनःशिलादौ श्ले
ष्मादौ विशेषाद्गैरिकेस्त्रि च ॥ धाता हिरण्यगर्भे ना पालके त्रिषु योधु

नम्॥२७॥ त्यक्ते धितं ते धूर्तं तु कंपिते भर्त्सिते त्रिषु॥ धूर्तं तु खंडलव णे धूस्तूरे नाविटे त्रिषु॥२८॥ धृतिर्नेष्टौस्त्रियां तु ष्टौ योगभिद्धैर्यधार णे॥ नतं तगरपाद्यां स्यात्क्लीबं कुटिलनम्रयोः॥२९॥ त्रिषु नीति र्नयेपि स्यात्प्रापणेपि च योषिति॥ पंक्तिः स्त्री गौरवे पाके पत्तिर्ना पदगे स्त्रियाम्॥३०॥ गतावेकरथैकेभ त्र्यश्व पंच पदातिके॥ पंक्ति र्दशाक्षरं छंदो दशसंख्यालिषु स्त्रियाम्॥३१॥ पतिर्धवे नाथिधीशे प्रा प्तं लब्धे समंजसे॥ पातो निपाते नेत्राते त्रिषु प्राप्तिर्महोदये॥३२॥ लाभेपि च स्त्रियां प्रातिः पूर्तिमादेशयोः स्त्रियाम्॥ पीतिर्नाऽश्वे स्त्रि यां पाने प्रीतं स्त्रृषितनर्मणोः॥३३॥ पीतं पाने हरिद्रायां स्त्रियां गौरे ऽभिधेयवत्॥ प्रीतिर्योगांतरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्॥३४ ॥पुस्तं क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि॥ पुतं तु रंगमगतौ क्लीबं पुंसि त्रिमात्रके॥३५॥ पूतं त्रिषु पवित्रे च शाटिते बहुलीकृते॥ पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि॥३६॥ प्रोतं नपुंसकं व स्त्रे खचिते वाच्यलिंगकम्॥ प्रेतो भूतांतरे पुंसि मृते स्याद्वाच्यलिं गकः॥३७॥ पोतः शिशौ वहित्रे च गृहस्थाने च वाससि॥ वृत्तिस्त्व वरणेपि स्याद्वेष्टनेऽपि च योषिति॥३८॥ भर्त्ता स्वामिनि पुंसि स्या त्त्रिषु धातरि पोष्टरि॥ भक्तिर्विभागे सेवायां स्त्रियां भ्रांतिस्तु यो षिति॥३९॥ मिथ्यामितौ च भ्रमणे भित्तिः कुड्यप्रदेशयोः॥ भीति र्भये स्त्रियां भीतं भयेऽथ भीयुते त्रिषु॥४०॥ भूतिर्भस्मनि संपत्तौ हस्तिशृंगारयोः स्त्रियाम्॥ भूतं क्ष्मादौ पिशाचादौ जंतौ क्लीबं त्रिषू चिते॥४१॥ प्राप्ते वृत्ते समे सत्ये देवयोन्यंतरे तु ना॥ कुमारेपि भृ तिः स्त्री स्यान्मूल्येपि भरणेपि च॥४२॥ मतं तु सन्मते ज्ञाते मतिः स्त्रीच्छाशियोः स्मृतौ॥ मंतुः पुंस्यपराधेपि मनुष्येपि प्रजापतौ॥४३ ॥माता गोर्यादिजननीगोब्रह्माण्यादिभूमिषु॥ मातिर्मानेप्यव च्छेदे मुक्तिर्मोक्षे च मोक्षणे॥४४॥ मात्रादयः स्त्रियां मुक्तः प्राप्तमो क्षे च मोचिते॥ त्रिषु स्त्री मौक्तिके मूर्तिः कायकाठिन्ययोः स्त्रियां॥४५

मूर्त्तस्यात्त्रिषु मूर्च्छाले कठिनेमूर्त्तिमत्यपि॥मृतंतु याचिते मृत्यौ क्लीबंमृतकमतित्रिषु॥४६॥यतिःस्त्रीपादविच्छेदेनिकारयतिनोःपुमान्॥यंतामेंठेचसूतेना युक्तिःस्त्रीन्याययोगयोः॥४७॥युतोयुक्ते ऽपृथग्भूते क्लीबंहस्तचतुष्टये॥रक्तोनुरक्तेनील्यादिरंजिते लोहिते त्रिषु॥४८॥क्लीबंतु कुंकुमेताम्रेप्राचीनामलकेसृजि॥रतिःस्त्रीस्म रदारेषुरागेस्त्रःरतगुह्ययोः॥४९॥रत्नं वर्त्मनिनिधांस्त्रीरतंसुरतगु ह्ययोः॥रिक्तंशून्येवनेरीतिःस्त्रियांस्यंदप्रचारयोः॥५०॥पित्तलेलो हकिट्टेच लत्ताप्रियंगुशाकयोः॥पृक्काज्योतिष्मतीवल्ली लत्ताकर्पूरि कास्त्रच॥५१॥माधवीदूर्वयोर्लिप्तंविलिप्तविषदिग्धयोः॥भुक्ते लूता तूर्णनाभपिपीलिकागदांतरे॥५२॥वसातुजनके पुंसिवापकेप्य भिधेयवत्॥वक्तातु पंडितेपिस्याद्वाग्मिन्यप्यन्यलिंगकः॥५३॥व्य स्तंतुव्याकुले व्यस्ते व्यक्तःस्फुटमनीषिणोः॥वस्तिर्द्वयोर्निरूहेना भ्यधोभूम्नि दशास्त्रच॥५४॥वर्त्तिर्भेषजनिर्माणेनयनांजनलेख योः॥गात्रानुलेपनीदीपदशादीपेषुयोषिति॥५५॥वार्त्तात्तुवर्त्मने वार्त्तिंगणेकृष्याद्युदंतयोः॥निःसारारोग्ययोःक्लीबं वृत्तिर्मल्लीरु- जोःस्त्रियाम्॥५६॥व्याप्तंख्यातेसमाक्रांतेव्याप्तिर्व्यापनरंभयोः॥ स्त्रियांवित्तिर्विचारेच लाभसंभावयोःस्त्रियाम्॥५७॥वित्तंक्लीबं धनेवाच्यलिंगंख्यातेविचारिते॥वीतमसारगजेस्यादंकुशकर्मण्य सारतुरंगेपि॥५८॥वीतिर्गतौचदीप्तौप्रजनाशनधावनेषुस्त्री॥ वृत्तिर्विवरणाजीवकेशिक्यादिप्रवर्त्तने॥५९॥स्त्रीवृंतंप्रसवबंधे घटीधाराकुचाग्रयोः॥वृत्तोऽधीतेप्यतीतेतिवर्तुलेपिदृढेमृते॥६० ॥वृते ऽन्यलिंगंवाक्लीबंछंदश्चारित्रवृत्तिषु॥शक्तिरस्त्रांतरेगौर्या मुत्साहादौबलेस्त्रियाम्॥६१॥शस्तंक्षेमेप्रशस्तेच शांतिःस्त्रीमंग लेशमे॥शास्ता समंतभद्रेनाशासके पुनरन्यवत्॥६२॥शांतोऽ भियुक्तरसयोःपुंसित्रिषुशमान्विते॥अव्ययंवारणेशांते शातं शितंचदुर्बले॥६३॥निशितेन्दशितिर्भूर्जेवासितासितयोःत्रिषु

शीतं हिमगुणे क्लीबं शीतलालसयोस्त्रिषु ॥६४॥ वानीरे बहुवारे
ना शुक्तः पूताम्लनिष्ठुरे ॥ श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्त्तयोः
स्त्रियाम् ॥६५॥ शुक्तिः कपालशकले शंखे शंखनखेपि च ॥ नख्य
श्वावर्त्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम् ॥६६॥ श्रुतमाकर्णिते शास्त्रे
श्वेतो द्वीपाद्रिभेदयोः ॥ श्वेता वराटिका काष्ठपाटला शंखिनीषु च
॥६७॥ क्लीबं रूप्ये न्यवच्छुक्ले सन्साधौ धीरशस्तयोः ॥ मान्ये सत्ये वि
द्यमाने त्रिषु साध्व्युमयोः स्त्रियाम् ॥६८॥ सातिर्दानेवसाने स्त्री स्वां
तं चेतसि गह्वरे ॥ स्थितं प्रतिज्ञातयतिचोर्ध्वनिश्चलयोस्त्रिषु ॥६९
स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि ॥ सितमवसिते च ब
द्धे धवले त्रिषु धवलायां स्त्री ॥७०॥ सीता लांगलपद्धति वैदेहीस्वर्गगं
गासु ॥ सुतस्तु पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता ॥७१॥ सुप्तिः
स्पर्शाज्ञता निद्राविश्रंभे शयने स्त्रियाम् ॥ सूतस्तु सारथौ तक्ष्णि क्ष
त्रियाद्ब्राह्मणीसुते ॥७२॥ बंदिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु ॥
सूतिः सीवनसंतत्योः स्त्रियां सूतः प्रसेवके ॥७३॥ नात्रिषूते स्मृति
र्धर्मशास्त्रस्मरणयोः स्त्रियाम् ॥ सृतिः स्त्री गमने मार्गे सेतुर्नालौ कु
मारके ॥७४॥ हस्तः करे करिकरे सप्रकोष्ठकरेपि च ॥ ऋक्षे केशात्
परो व्राते हितं पथ्ये गते धृते ॥७५॥ हेतिः स्यादायुधज्वाला सूर्यते
जःसु योषिति ॥ ॥नत्रि॥ ॥अमृतं यज्ञशेषे स्यात्
पीयूषे सलिले घृते ॥७६॥ अयाचिते च मोक्षे च ना धन्वंतरिदेवयोः
॥ अमृता मागधी पथ्या गुडूच्यामलकीषु च ॥७७॥ अनृतं कृषा
वसत्ये प्यजितो ना हरौ त्रिषु ॥ अनिर्जिते चाच्युतस्तु हरौ पुंसि त्रिषु
स्थिरे ॥७८॥ अर्दितं याचितेपि स्याद्वातव्याधौ च हिंसिते ॥ अक्षत
न द्वयोः पंडे लाजेषु त्रिष्वहिंसिते ॥७९॥ यवेपि क्वचिदव्यक्तो हरौ स्म
रहरे पुमान् ॥ परमात्ममहदाद्योः क्लीबं स्यादस्फुटे त्रिषु ॥८०॥ अनं
तः केशवे शेषे पुमाननवधौ त्रिषु ॥ अनंता च विशल्यायां शारिवा
दूर्वयोरपि ॥८१॥ कणा दुरालभा पथ्या पार्वत्यामलकीषु च ॥ वि

श्वंभरागुडूच्योः स्यादनंतं स्करवर्त्मनि॥८२॥अश्मंतमशुभेचुल्यां
मरणेऽनवधावपि॥ क्षेत्रेप्यथाऽर्यतिः पुंसि हिमदीधितिकालयोः॥
८३॥अर्हंस्तु क्षपणेबुद्धे पुंसिमान्येऽन्यलिंगकः॥ अर्हंतश्चापिसु
गते क्षपणेपिच दृश्यते॥८४॥ अगस्तिः कुंभयोनौ च वकसेनतरौ
पुमान्॥ अर्वती कुंभदास्यां च वडवायां च योषिति॥८५॥ अंगतिः
पुंस्यग्निहोतृब्रह्मवन्हिषु यथादितिः॥ भूदेवमात्रोरंहति स्यागेरोगे
प्युभेस्त्रियौ॥८६॥आपातः पुंसि पतने तदात्वे च प्रकीर्तितः॥ आ
घ्रातं शिंघिते क्रांते प्याख्यातं भाषिते तिङि॥८७॥आध्मातः शब्दि
ते दग्धे वातरुग्भेदसंयुते॥ आप्लुतः स्नातके स्नातेऽप्याहृतः साद
रेऽर्चिते॥८८॥आचितः शकटोन्मेये पलानामयुतद्वये॥ पुल्लिंगः
संगृहीतेपि छंदेपि स्यात्रिलिंगकः॥८९॥आहतं गुणितेचापिता
डितेच मृषार्थके॥ स्यात्पुरातनवस्त्रेपि नववस्त्रेच माऽनके॥९०॥
आनर्तो देशभेदेपि नृत्यस्थाने जलेरणे॥ आवर्तश्चिंतने वारि
भ्रमे चावर्त्तने पुमान्॥९१॥आस्फोतं तु पुमानर्कपर्णे स्यात्कोविदार
के॥ आस्फोता गिरिकर्ण्यां च वनमाल्यां च योषिति॥९२॥ आयस्त
स्तेजिते क्षिप्ते क्लेशिते कुपिते हते॥ आयतिस्तु स्त्रियां दैर्घ्ये प्रभावा
गामिकालयोः॥९३॥आयत्तिस्तु स्त्रियां स्नेहे वशित्वे वासवे बले॥
आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि॥९४॥आसत्तिः संगमे
लाभे स्त्रियामापत्तिरापदि॥ प्रापणेपि च योषित्स्यादुदंतः साधु
वार्तयोः॥९५॥उषितं व्युषिते दग्धेप्युदात्तस्तु स्वरांतरे॥ दयात्या
गादिसंपन्नेऽकाव्यालंकारकृत्ययोः॥९६॥उत्तप्तं शुष्कमांसेथ त्रिषु
तप्तेपरिप्लुते॥उचितं तु भवेन्न्यस्ते मिते ज्ञाते समंजसे॥९७॥उद्धू
तं स्यात्रिषूत्क्षिप्ते परिभुक्तोज्झितेपि च॥ उत्थितं स्यात्रिषूत्पन्ने
प्रोद्यते वृद्धिमत्यपि॥९८॥उद्घातस्तु पुमान्पादस्खलने समुपक्र
मे॥ पवनाभ्यासयोगस्य कालभेदेन कीर्तितः॥९९॥उत्तुंगो मुद्गरेपि
स्यादुदितं तूक्त आगते॥उच्छ्रितं त्रिषु संजाते समुन्नद्धप्रवृद्धयोः १००

उन्मत्त उन्मादवति धूस्तूरमुचुकुंदयोः॥उद्भ्रांतोनिर्मदगजेवुमा
सुद्भ्रमितेत्रिषु॥१॥ऊधस्वान्पुरुषेऽग्नौना कलितंविदितासयोः॥
कपोतःस्याच्चित्रकंठपारावतविहंगयोः॥२॥अथक्रंदितमाह्वा
नेरुदितेपिनपुंसकम्॥क्षारितःस्याच्चितेक्षारेअभिशस्तेपिचत्रि
षु॥३॥कापोतारुचकेक्लीबेकपोतोपेजनांतरे॥किरातोम्लें
छभेदेस्याद्भूनिंबेऽल्पतनावपि॥४॥स्त्रियांचामरधारिण्यांकुट्टि
नीदुर्गयोरपि॥कृतांतोयमसिद्धांतदैवाकुशलकर्मसु॥५॥गर्जि
तं वारिवाहादिध्वनौनामत्तकुंजरे॥ग्रंथितंगुंफितेक्रांतेहिंसि
तेचत्रिलिंगकम्॥६॥गभस्तिःकिरणेसूर्येनास्वाहायांतुयोषिति
॥गार्मुत्तुस्त्रीस्वर्णलतयोर्गोपतिःशिवषंढयोः॥७॥नृपभास्क
रयोःपुंसिचेष्टितंगतिचेष्टयोः॥जगत्स्याद्विष्टपेक्लीबंवायौना
जंगमेत्रिषु॥८॥जगतीभुवनेक्ष्मायांछंदोभेदेजनेपिच॥जयं
तीवृक्षभिद्गौर्योरिंद्रपुत्रीपताकयोः॥९॥पुमानिंद्रेहरेभीमेज्वलि
तंदग्धउज्वले॥जामाताद्दुहितुःपत्यौसूर्यावर्तेधवेपुमान्॥१०॥
जीमूतोऽद्रौधृतिकरेदेवताडेपयोधरे॥जीवातुरस्त्रियांभक्ते-
जीवितेजीवनौषधे॥११॥जीवंतीजीवनीशम्योर्गुडूचीवृंदयोर
पि॥जृंभितंकरणेस्त्रीणामीहास्फोटितयोरपि॥१२॥त्वरितंप्र-
जवेशीघ्रेत्रिगर्तोगणितांतरे॥देशेपिनाघुर्घुरिकाकामुकांग
नयोःस्त्रियाम्॥१३॥तृपाताधनुषितृणत्वेदर्शितमपिजातदर्शि
तेपिस्यात्॥कवचाचितेद्विजातिर्विप्रांडजयोश्चपुल्लिंगः॥१४॥
दुर्जातंव्यसनेक्लीबेसम्यग्जातेऽन्यलिंगकम्॥दुर्गतिर्नरकेनैस्व्ये
स्त्रीदृष्टांतउदाहृतौ॥१५॥शास्त्रेचमरणेधीमान्पंडितेचबृह
स्पतौ॥निर्ऋतिःस्यादलक्ष्म्यांस्त्रीदिशांपालांतरेपुमान्॥१६॥नि
भृतंविमलंभेस्यान्नीचेविभक्तेपिच॥निर्मुक्तस्त्यक्तसंगेस्यान्मु
क्तकंचुकभोगिनि॥१७॥निरस्तस्त्रिषुनिष्ठ्यूतेप्रेषितेप्रोद्धुतोदिते
॥संत्यक्तेचप्रतिहतेनिमित्तंहेतुलक्ष्मणोः॥१८॥निवातोदृढ

सन्नाहे यानभृन्येपिचाश्रये ॥ निशांतंत्रिषुशांतेस्यात्क्लीबंतुभवनो
षसोः ॥१९॥ निकृतिर्भर्त्सनेक्षेपे शठेशाठ्येपिचस्त्रियाम् ॥ निर्वृतिः
स्वस्थितावस्तंगमनेचस्वरवेस्त्रियाम् ॥२०॥ नियतिर्नियमेदैवेस्त्री
पतन्पातुकेखगे ॥ प्रहतंवितते क्षुण्णे पर्यस्तः पतितेहते ॥२१॥
प्रभूतमुद्गतेप्राज्येपंडितः सिल्हकेकवौ ॥ पलितंशैलजेतापेके
शपाकेचकर्दमे ॥२२॥ प्रसृतः क्रमसारेस्याद्विनीतेवेगितेत्रिषु ॥ अ
ङ्घ्रीजलौतुपुंल्लिंगेजंघायांप्रसृतामता ॥२३॥ प्रसूतंकुसुमेक्लीबं
त्रिषुसंजातसूतयोः ॥ प्रणीतः संस्कृताग्नौनायज्ञपात्रांतरेस्त्रिया
म् ॥२४॥ त्रिषुक्षिप्तोपसंपन्नविहितेषुप्रवेशिते ॥ प्रतीतः सादरेज्ञा
तेहृष्टप्रख्यातयोस्त्रिषु ॥२५॥ प्रमीतंवाच्यलिंगंस्यात्प्रोक्षितेपिमृ
तेपिच ॥ परेतोवाच्यलिंगः स्यान्मृतेभूतांतरेपुमान् ॥२६॥ पर्वतः
पादपेपुंसिशाकमत्स्यप्रभेदयोः ॥ देवमुन्यंतरेशैलेप्रतापोनिर्झरे
तटे ॥२७॥ पर्याप्तंतुयथेष्टेस्यात्तृप्तौशक्तेनिवारणे ॥ पंचतापंच
भावेस्यान्मरणेपिचयोषिति ॥२८॥ पक्षतिश्चभवेत्पक्षमूलेचप्र-
तिपत्तिथौ ॥ प्रसूतिरुद्भवेपिस्यात्तनयेदुहितर्यपि ॥२९॥ प्रतति
र्विस्तृतौवल्ल्यांपद्धतिः पंक्तिवर्त्मनोः ॥ प्रवृत्तिस्तुप्रवाहेस्यादुदंते
चप्रवर्तने ॥३०॥ आयंस्यादोंच पर्याप्तिः प्रकामप्राप्तिरक्षणे ॥ प्र
कृतिर्गुणसाम्येस्यादमात्यादिस्वभावयोः ॥३१॥ योनौलिंगेपौर
वर्गेऽमीपक्षत्यावयः स्त्रियाम् ॥ पार्वतीसल्लकीदुर्गागोपालपु
त्रिकासुच ॥३२॥ प्रार्थितंयाचितेशत्रुसंरुद्धेभिहतेत्रिषु ॥ पित्स
न्विहंगमेपुंसिपतनेच्छौपुनस्त्रिषु ॥३३॥ पिशितंमांसेमांस्यांस्त्री
पिंडितंगुणितेघने ॥ पीडितंकरणेस्त्रीणांयंत्रितेबाधितेपिच
॥३४॥ पुटितंस्याद्दहिपुटेपाटितस्यूतयोरपि ॥ पृषन्मृगेपुमान्विं
दौनद्वयोः पृषतोपिना ॥३५॥ अनयोश्चत्रिषुश्वेतबिंदुयुक्तेप्युभा
विमौ ॥ प्रोक्षितंनिहितेसिक्तेबृहतीवसनांतरे ॥३६॥ छंदोभित्
क्षुद्रवार्ताकीवारिधानीषुवाचिच ॥ कंटकारीमहत्योश्चभवद्यु

ध्वस्ततोस्त्रिषु॥३७॥स्त्रीबाणभेदे भरतो नाट्यशास्त्रमुनौ नटे॥
रामानुजेच दौष्यंतौ भास्वान्भास्वरसूर्ययोः॥३८॥भारतंग्रंथभेदेस्या
द्वर्षभेदेऽथभारती॥वचनेचसरस्वत्यांपक्षिवृत्तिप्रभेदयोः॥३९॥भा
संतःसुंदराकारेत्रिषुनाभासपक्षिणि॥भावितंवासितेप्राप्तेभूभृन्ना
द्रोमहीपतौ॥४०॥महतीवल्लकीभेदेराज्येस्यात्तुनपुंसकम्॥तत्वभेदे
पुमान्वृद्धेवाच्यवन्मथितंपुनः॥४१॥क्लीबंनिर्जलघोलेस्यात्त्रिषुशालोडि
तघृष्टयोः॥मरुद्देवेसमीरेनाग्रंथिपर्णेनपुंसकम्॥४२॥मुषितंहृत
खंडितयोर्मूर्छितमपिसोच्छ्रयेचमूढेच॥रजतंत्रिषुशुक्लेस्यात्क्लीबंहा
रेचदुर्वर्णे॥४३॥रमतिर्नायकेनाकेपुंसिस्याद्रसितंपुनः॥रुतस्तनित
योःक्लीबंस्वर्णादिखचितेत्रिषु॥४४॥रेवतीहलिपत्न्यांस्यात्ताराभिन्मा
तृभेदयोः॥रैवतस्तुसुवर्णालौशैलभेदेचशंकरे॥४५॥रोहितंकुंकु
मेरक्तेऋजुशक्रशरासने॥पुंसिस्यान्मीनमृगयोर्भेदेरोहितकद्रुमे॥
४६॥रोहिन्मृग्यांलताभेदेस्त्रीनार्केललितंत्रिषु॥उलितेचेशितेपि
स्याद्धारभेदेतुनद्वयोः॥४७॥लोहितंरक्तगोशीर्षेकुंकुमेरक्तचंदने॥
पुमान्नदांतरेभौमेवर्णेचत्रिषुतद्वति॥४८॥वर्द्धितप्रासितेच्छिन्नेपूरि
तेवहतिर्गवि॥सचिवेपुंसिवहतुःपथिकेवृषभेपुमान्॥४९॥वनिता
जातरागस्त्रीस्त्रियोस्त्रिषुचयाचिते॥सेवितेवापितंबीजाकृतमुंडि
तयोस्त्रिषु॥५०॥वसतिःस्यात्स्त्रियांवासेयामिन्यांचनिकेतने॥-
व्यायतंव्यापृतेदीर्घेदृढेऽचातिशयेऽन्यवत्॥५१॥व्याघातोयोगभे
देस्यादंतरायप्रहारयोः॥वासिताकरणीनार्योर्वासितंभावितेरु
ते॥५२॥वासंतीमाधवीयूथ्योरुष्ट्रेनावहितेत्रिषु ॥विविक्तंत्रिषु
संपृक्तेरहःपूतविवेकिषु॥५३॥वस्कनंदेनाविहस्तःपंडितेव्याकुले-
त्रिषु॥विनीतःसुवहाश्वेस्याद्वणिज्यपिपुमांस्त्रिषु॥५४॥जितेंद्रिये
ऽपनीतेचनिभृतेविनयान्विते॥विश्वस्तोजातविश्वासेविश्वस्ता
विधवस्त्रियाम्॥५५॥विद्युत्तडितिसंध्यायांस्त्रियांत्रिषुतुनिष्प्रभे
॥विवृताक्षुद्ररुग्भेदेविस्तृतेत्वभिधेयवत्॥५६॥विनेतादेशकेरा

ज्ञिनाविधाता तु वेधसि॥स्मरेनाविनता तार्क्ष्यजनन्यांपिटकाभिदि
॥५७॥विनतःप्रणतेभुग्नेशिक्षितेचाभिधेयवत्॥विकृतंत्रिषुबीभ
त्सरागितेसंस्कृतेपि च॥५८॥विच्छित्तिरंगरागेविच्छेदे हारभेदेस्त्री
॥विदितंबुधितार्थितयोर्विपत्तिरपियातनापदोर्योषित्॥५९॥वृ
त्तांतःप्रक्रियायांस्यात्कार्त्स्न्येवार्ताप्रभेदयोः॥प्रस्तावेवेष्टितंरुद्धेला
सकेकरणांतरे॥६०॥वेल्लितंगमनेक्लीबंकुटिलेविधुतेत्रिषु॥विवर्तः
समुदायेस्यादपवर्तननृत्ययोः॥६१॥शकुंतःकीटभेदेस्याद्भासिप
क्षिविहंगयोः॥श्रीमांस्तिलकवृक्षेनामनोज्ञेज्ञानकत्रिषु॥६२॥श्री
पतिःपुंसिपृथिवीनाथेचमधुसूदने॥शुद्धांतोंतःस्मरेक्ष्माभृत्रहः
कक्षांतरेपिच॥६३॥स्रवंती तु तरंगिण्यांगुल्मस्थानौषधीभिदोः॥
संवर्तःप्रलयेपुंस्यंतरेकर्षफलेपिच॥६४॥स्खलितंचलितेभ्रेषेसं
हृतंसंगतेहृदे॥संस्कृतःकृत्रिमेशस्तेभूषितेप्यन्यलिंगकः॥६५॥
क्लीबंतुलक्षणोपेतेस्थपतिःकंचुकिन्यपि॥जीवेष्टियाजकेशिल्पि
भेदेनासत्तमेत्रिषु॥६६॥संघातःपुंसिघातेचसंहतौनरकांतरे॥
संवित्तिःप्रतिपत्तौस्यादविवादेजनस्यच॥६७॥संततिःस्यात्पंक्तौ
गोत्रेपारंपर्येपुत्रपौत्राणाम्॥संगतिःसंगमेज्ञानेसन्नतिःप्रण
तौध्वनौ॥६८॥समितिःसंपरायेस्यात्सभायांसंगमेपिच॥स-
माप्तिरवसानेस्यात्समर्थनेऽथसंमतिः॥६९॥अभिलाषेप्यनुज्ञा
यांसंवित्याद्यास्तुयोषिति॥स्थापितंनिश्चितेन्यस्तेस्तिमितोऽ
चंचलार्द्रयोः॥७०॥सिकतास्त्रीसिकतिले वालुकायांतुभूमनि
॥सुरतंस्यान्निधुवनेदेवत्वेसुरतास्मृता॥७१॥सुकृतंतुशुभे
पुण्ये क्लीबंसुविहितेत्रिषु॥सुव्रतासुखसंदोह्याशोभनव्रतयो
रपि॥७२॥सुनीतिःशोभननयेध्रुवमातरियोषिति॥सूनृतंमं
गलेपिस्यात्प्रियसत्येवचस्यपि॥७३॥हरिद्दिशिस्त्रियांपुंसिहय
वर्णविशेषयोः॥अस्त्रियांस्यात्तृणेचाथहर्मितंक्षिप्तदग्धयोः॥
॥हरितास्त्रीचदूर्वायांहरिद्वर्णयुतेऽन्यवत्॥हसंत्यंगारधान्यां

चर्मल्लिकाशाकिनीभिदोः॥ ७५॥ हरीतः पक्षिभेदे स्यान्मुनिभेदे च के
तवे॥ हृषितं विस्मिते प्रीते प्रहते हृष्टलोमनि॥ ७६॥ ॥तन्चतुः
॥ ॥अवसितमृद्धे ज्ञातेऽप्यवसानगते च वाच्यलिंगं स्यात्॥
अर्थपतिः पुल्लिंगो धनाधिनाथे च नरनाथे॥ ७७॥ अवदातः सिते
गौरे विशुद्धेऽप्यन्यलिंगकः॥ अवगीतं तु निर्वादे त्वसृग्गर्हितयोर
पि॥ ७८॥ अंतर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत्॥ अंगारितं
तु दग्धे स्यात्पलाशकलिकोद्गमे॥ ७९॥ हसंत्यां च लतामात्रे नदीभे-
दे च योषिति॥ अपावृतस्तु पिहिते स्वतंत्रेऽपि च वाच्यवत्॥ ८०॥ अ
त्याहितं महाभीतौ जीवानपेक्षकर्मणि॥ अभिनीतं त्रिषु न्याय्ये
संस्कृतामर्षिणोरपि॥ ८१॥ अभिजातः कुलीने स्यान्न्याय्ये पंडि
तयोस्त्रिषु॥ अभियुक्तः परैरुद्धे तत्परेऽप्यभिधेयवत्॥ ८२॥ अति
मुक्तस्तु निःसंगे वासंत्यां तिनिशेऽपि च॥ अवध्वस्तः परित्यक्ते निं
दितेऽप्यवचूर्णिते॥ ८३॥ अधिक्षिप्तः प्रणिहिते कुत्सिते भर्जिते त्रि
षु॥ अंशुमान् भास्करे शालपर्ण्यामंशुमती स्मृता॥ ८४॥ भवेद
पचितिः पूजाव्ययनिष्कृतिहानिषु॥ अथानुमतिरूनेंदुपूर्णि
मानुज्ञयोरपि॥ ८५॥ अभिशस्तिः प्रार्थनापवादयोश्च त्रयं स्त्रि
याम्॥ आयुष्मान्योगभेदे ना वाच्यवच्चिरजीविनि॥ ८६॥ उपाहि
तोऽनलोत्पाते पुमानारोपिते त्रिषु॥ उपाकृतोऽध्वरहतपशौ नो
पद्रुते त्रिषु॥ ८७॥ उदास्थितः प्रतीहारे प्रव्रज्यावसिते चरे॥ स्या
दुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत्॥ ८८॥ उद्ग्राहितमुदी
र्णे स्याद्बद्धग्राहितयोस्त्रिषु॥ भवेदुपचितं दग्धे समृद्धे वाच्यलिं
गकम्॥ ८९॥ उज्जृंभितं त्रिषूत्फुल्ले चेष्टायां तु नपुंसकम्॥ उपर
क्तोऽव्यसनार्ते राहुग्रस्तेंदुसूर्ययोः॥ ९०॥ उपसत्तिः संगमात्रे सेवा
यामपि योषिति॥ ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिंबिषु॥ ९१॥
ऐरावतोऽभ्रमातंगे नारंगे लकुचद्रुमे॥ नागभेदे च पुंसि स्याद्विद्यु
तद्भेदयोः स्त्रियाम्॥ ९२॥ नपुंसकं महेंद्रस्य ऋजुदीर्घशरासने॥

कलधौतं स्वर्णे स्याद्रजते च नपुंसकम्॥९३॥ भवेत्कुहरितं क्ली
बेपि कालापे रतध्वनौ॥ कुमुद्वान्कुमुदप्रायदेशे स्याद्वाच्यलिं
गकः॥९४॥ कुमुद्वती कुमुदिन्यां कुशपत्न्यां च योषिति॥ कृष्णवृन्ता
पाटलायां माषपर्ण्यां च योषिति॥९५॥ अथ गंधवती पृथ्वी पुराभि
द्यासमा तृषु॥ सुरायां च गरुत्मांश्च पक्षिमात्रे खगाधिपे॥९६॥ भ
वेद्गृहपतिः पुंसि गृहस्थेपि च मंत्रिणि॥ चंद्रकांतस्तु पुंसि स्यान्मणि
भेदे च कैरवे॥९७॥ चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्॥ चि
त्रगुप्तस्तु पुंसि स्याद्यमे तस्य च लेखके॥९८॥ दिवाभीतः कुंभिले स्या
दुलूके कुमुदाकरे॥ दिवाकीर्तिस्तु पुंसि स्यान्नापितांतावसायिनोः
॥९९॥ द्वीपवान्सिंधुनद्योर्द्वीपवत्यापगाभुवोः॥ दृषद्वती न
दीभेदे कात्यायन्यामपि स्त्रियाम्॥१००॥ स्याद्धूमकेतुरुत्पातभेदे
वैश्वानरे पुमान्॥ नंद्यावर्तः पुमान्वेश्मप्रभेदे भगवद्द्रुमे॥१॥ न
दीकांतः समुद्रे स्यादिज्जले सिंदुवारके॥ नदीकांता स्त्रियां जंब्वां
काकजंघौषधावपि॥२॥ नागदंतो द्विपरदे गृहान्निर्गतदारुणि॥
नागदंती तु कुंभायां श्रीहस्तिन्यामपि स्त्रियाम्॥३॥ निष्काशितो
निर्गमिते ऽप्याहिते ऽधिकृतेपि च॥ अथ निस्तुषितं त्यक्ते त्वग्निही
ने लघूकृते॥४॥ निराकृतिरनाकारे ऽस्वाध्याये वारणे त्रिषु॥ प
रिगतं त्रिषु प्राप्ते विस्मृतज्ञातचेष्टिते॥५॥ अथ प्रणिहितं न्यस्ते
प्राप्तेपि च समाहिते॥ अथ पल्लवितं लाक्षारक्ते सपल्लवे तते॥६॥
भवेत्प्रणिहितं द्विष्टे प्रतिस्खलितबद्धयोः॥ प्रतिक्षिप्तं वारिते स्या
त्क्षेपिते पंचकं त्रिषु॥७॥ परिवर्तो विनिमये कूर्मराजे प्रवर्तने॥
परिस्रुता स्त्री वारुण्यां स्यान्ने स्यादभिधेयवत्॥८॥ प्रधूपिता
क्लेशितायां सूर्यगंतव्यदिश्यपि॥ पंचगुप्तस्तु चार्वाकदर्शने क
मठे पुमान्॥९॥ प्रजापतिश्च दक्षादौ महीपाले विधातरि॥ प्रति
पत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेपि च॥१०॥ संप्राप्तौ च प्रबोधे च प
दप्राप्तौ च योषिति॥ अथ प्रव्रजिता मांसी मुंडीरी तापसी तु च॥

११॥ प्रतिकृतिरथाचार्यां प्रतिनिधिमतीकारयोश्च स्त्री॥ पाशुप
तो बकपुष्पे स्यात्पशुपत्यधिदैवने च तद्भक्ते॥१२॥ पारिजातः सु
रतरौ पारिभद्रतरावपि॥ पारावती गोपगीते नदीभिल्लुवलीफले
॥१३॥ पारावतः कलरवे तथा मर्कटतिंदुके॥ पुष्पदंतस्तु दिङ्नाग
भेदे विद्याधरांतरे॥१४॥ पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपू
जिते॥ भगवन्नाजिने गौर्यां स्त्रियां पूज्ये तु वाच्यवत्॥१५॥ अथ
भोगावती नागपुरी नद्योर्हरो पुमान्॥ रंगमाता तु कुट्टिन्यां वृक्ष
रोगांतरे स्त्रियाम्॥१६॥ लक्ष्मीपतिः पुमान्वासुदेवे नरपतावपि॥
व्यतीपातो महोत्पाते योगभेदापयोनयोः॥१७॥ वनस्पतिर्नाद्रुमा
त्रे विना पुष्पफलद्रुमे॥ विनिपातो निपाते स्याद्दैवादिव्यसने पुमा
न्॥१८॥ विजृंभितं तु चेष्टायां फुल्ले त्रिषु विकस्वरे॥ विवस्वान्विबुधे
सूर्ये तन्नगर्यां विवस्वती॥१९॥ वैजयंतो गृहे शक्रध्वजप्रासाद
योः पुमान्॥ वैजयंती पताकायां जयंतीपादपे पुमान्॥२०॥ भवे
त्कुलधृतिः पुंसि शक्रे च परमेष्ठिनि॥ शुभ्रदंती स्त्री दंत्यां स्यात्पुष्पदं
तेभयोषिति॥२१॥ समुद्धृतं समुत्कीर्णेप्यपनीते च वाच्यवत्॥ स
दागतिर्नाकवाते निर्वाणे सुसदीश्वरे॥२२॥ सरस्वांश्च नदे चाब्धौ ना
न्यवद्रसिके स्त्रियाम्॥ वाणी स्त्री रत्न वाग्देवीगोनदीषु नदीभिदि
॥२३॥ मनुपत्न्यामपि सत्यवती व्यासस्य मातरि॥ नारदर्षीकयोः
पत्न्यां स्त्रियां पुंसि नृपांतरे॥२४॥ समुद्रांता तु कार्पासी पृक्कादुरा
लभासु च॥ समाहितः समाधिस्थे प्रयुक्तसिद्धांतआहिते॥२५॥ नि
र्विवादीकृतेपि स्यात्प्रतिज्ञाते च वाच्यवत्॥ समाघातो वधे युद्धे
संख्यावान्पंडिते पुमान्॥२६॥ संख्यायुक्तेऽन्यलिंगोऽथ स्कंथाभृ
तिः पुमान्मखे॥ चंद्रस्तु भाषितो बुद्धे पुमान्सूक्ते नपुंसकम्॥२७
॥ सूर्यभक्तस्तु बंधूके पुंसि त्रिषु अर्कपूजके॥ सेनापतिः कार्तिकेये
ध्वनीकाधिपतौ पुमान्॥२८॥ हिमारातिः पुमान्वीतिहोत्रे किरण
मालिनि॥ हैमवत्यभयाः स्वर्णक्षीर्योः श्वेतवचोमयोः॥२९॥ ॥

॥ ॥तपंच॥ ॥अवलोकितो नालोकनाथे त्रिषु निरीक्षि
ते॥अपराजित ईशाजे स्यंतरे नाऽजिते त्रिषु॥३०॥ गिरिकर्णीजया
दुर्गाम्लानपर्णीषु योषिति॥उपधूपित आसन्नमरणे परिधूपिते॥
३१॥स्याद्गणाधिपतिः पुंसि शंकरेपि गजानने॥ भवेत्त्रिपतिषन्
पित्सौ त्रिषु पुंसि विहंगमे॥३२॥ पृथ्वीपतिस्तु भूपाले ऋषभा-
ख्यौषधौ पुमान्॥ मूर्द्धाभिषिक्तो भूपाले मंत्रिणि क्षत्रियेपि च॥
३३॥ यादसांपतिरंभोधौ पश्चिमाशापतावपि॥ वसंतदूतश्चैत्रे
स्यात्पिकपंचमरागयोः॥३४॥ वसंतदूती पाटल्यामभियुक्ते च
योषिति॥ ॥तषट्॥ ॥अर्द्धपारावतश्चित्रकंठे ति
त्तिरिपक्षिणि॥३५॥ ॥तसस॥ ॥समुद्रनवनीतंस्या
क्लीबं पीयूषचंद्रयोः॥ ॥इति तांतवर्गः॥ ॥
थैकम्॥ ॥थं रक्षणे मंगले च साध्वसे च नपुंसकम्॥
शिलोच्चये पुमानेव क्वचित्तु भयरक्षके॥१॥ ॥थद्वि॥ ॥
अर्थो विषयार्थनयोर्धनकारणवस्तुषु॥अभिधेये च शब्दानां नि
वृत्तौ च प्रयोजने॥२॥ आस्था त्वालंबनास्थानयत्नापेक्षासु योषि
ति॥ कंथा मृन्मयभित्तौ च तथा प्रावरणांतरे॥३॥ क्राथः स्यादति-
दुःखेपि निष्पाकेपि द्रवस्य च॥ कुथः स्त्रीपुंसयोर्वर्णकंबले पुंसि
बर्हिषि॥४॥ कोथो ना नेत्ररोगस्य भेदे च शटिते त्रिषु॥ ग्रंथो ग्रथ
नाधनयोः स्याच्छास्त्राक्षरसंख्ययोः॥५॥ ग्रंथिस्तु ग्रंथिपर्णे नाबं
धे रुग्भेद पर्वणोः॥ गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः
॥६॥ तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च॥ अवतारर्षिजु
ष्टांबुपात्रोपाध्यायमंत्रिषु॥७॥ तुत्थमंजनभेदे स्यान्नीलसूक्ष्मैल
योः स्त्रियाम्॥ दुःस्थः स्याद्दुर्गते मूर्खे दुःखेनातिष्ठति त्रिषु॥८॥ प्रस्थो
स्त्रियां मानभेदे सानावुन्नितवस्तुनि॥ पाथोऽर्के ऽम्भो जले क्लीबं
पृथुः स्यान्महति त्रिषु॥९॥ त्वक्पर्ण्यां कृष्णजीरे ऽस्त्री पुमानग्नौ
नृपांतरे॥ प्रोथोऽस्त्री हयघोणायां नाकट्यामध्वगे त्रिषु॥१०॥

मंथः स्यात्पुंसि मंथाने साक्तवे च दिवाकरे ॥ यूथं तिर्यक्समूहे स्त्री
पुष्पभेदे च योषिति ॥११॥ रथः पुमानवयवे स्यंदने वेतसेपि च ॥
शौथा पंक्तौ गृहांगे च रूपकांतरवर्त्मनोः ॥१२॥ संस्थेश्वरेऽवस्थि
ते स्त्री स्थितौ सा दृश्यनाशयोः ॥ सार्थो वणिक्समूहे स्यादपि सं
घातमात्रके ॥१३॥ सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ॥
॥ ॥ थत्रि ॥ ॥ अतिथिः कुशपुत्रे स्यात्पुमाना
गंतुके भिक्षु ॥१४॥ अश्वत्थः पिप्पलद्रौ स्यादश्वत्थो पूर्णिमातिथौ
॥ अव्यथौ निर्व्यथे सर्पे चारटी पथ्ययोः स्त्रियाम् ॥१५॥ उन्माथः
कूटयंत्रे स्यान्मारणे घातके पुमान् ॥ उपस्थः शेफशिक्रोडे त
थामदनमंदिरे ॥१६॥ उद्रथो रथकीले स्यात्ताम्रचूडाख्यपक्षि
णि ॥ क्षवथुर्ना क्षुते कासे कायस्थः परमात्मनि ॥१७॥ नरजाति
विशेषेना हरीतक्यां तु योषिति ॥ कापथः कुत्सितपथेऽशीरे
क्लीबमिष्यते ॥१८॥ गोग्रंथिर्ना करीषे स्याद्गोष्ठगोजिह्विकौषधौ
॥ दमथस्तु पुमान् दंडे दामे च परिकीर्तितः ॥१९॥ निशीथस्तु पु
मानर्द्धरात्रे स्याद्रात्रिमात्रके ॥ निर्ग्रंथो नग्नकेपि स्यान्निःस्वबा
लिशयोरपि ॥२०॥ प्रमथा स्याद्धरीतक्यां हरपारिषदे पुमान् ॥
वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः ॥२१॥ मन्मथः काम
चिंतायां कपित्थे कुसुमायुधे ॥ वयस्था तु स्त्रियां ब्राह्मीगुडूच्या
मलकीषु च ॥२२॥ सूक्ष्मैलायां च काकोल्यां पथ्यालीतरुणीषु
॥ वमथुः पुंसि वमने गजस्य करशीकरे ॥२३॥ विदथो योगिकृ
तिनोः शमथः शांतिमंत्रिणोः ॥ षड्ग्रंथा तु वचायां स्त्री स्यात्करं
जांतरे पुमान् ॥२४॥ समर्थस्तु हिते शक्ते संबद्धेप्यन्यलिंगकः
॥ सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे ॥२५॥ ॥ थ
चतुः ॥ ॥ अनीकस्थो रणागते हस्तिशिक्षाविचक्षणे ॥
राजरक्षिणि चिन्हे च वीरमर्दनकेपि च ॥२६॥ अवोदितकथा
पार्थवाच्यश्च अद्ययनष्टयोः ॥ चतुष्पथं चतुर्मार्गे संगमे ब्राह्मणेपि ना

अथचित्ररथः सूर्यगंधर्वांतरयोः पुमान् ॥ दशमीस्थो नष्टवीर्येस्थ
विरेप्यन्यलिंगवत् ॥२८॥ प्राणनाथो यमेभास्यान्निष्टप्राणाधिपे मतः
॥ वानप्रस्थो मधूके पि स्यात्तृतीयाश्रमे पुमान् ॥२९॥ भवेदुदरथिः
पुंसि समुद्रे च विपन्मणौ ॥ ॥ इति थांतवर्गः ॥ ॥९१५॥
दैकम् ॥ ॥ दः पुमानचले दत्ते स्त्रियां शोधनदानयोः ॥ छेदो
पतापरक्षासु पुंसि स्त्वदातरि स्मृतः ॥१॥ ॥ दद्विः ॥ अब्दः
संवत्सरे वारिवाहमुस्तकयोः पुमान् ॥ कंदो स्त्री सूरणे शस्यमूले ज
लधरे पुमान् ॥२॥ अंदूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च ॥ कुंदो
माध्ये स्त्रीमुकुंदभ्रमिनिध्यंतरे पुना ॥३॥ क्षोदः स्यात्पुंसि रजसि
पेषणे च प्रकीर्तितः ॥ गदो भ्रातरि विष्णोः स्यादामये नायुधे गदा ॥
४॥ छदः पलाशे गरुति ग्रंथिपर्णतमालयोः ॥ छंदो वशे प्यभिप्राये
धीदा पुत्री मनीषयोः ॥५॥ नंदिर्द्यूतांग आनंदेऽस्त्री नंदिकेश्वरे पु
मान् ॥ नदी सरिति शोणादौ नानंदा स्याद्वलिंजरे ॥६॥ गोर्यां तिथिवि
शेषे स्त्री निधिराजभिदोः पुमान् ॥ निंदा स्यादपवादे पि कुत्सायाम
पि योषिति ॥७॥ पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः ॥ पादतच्चि
न्हयोः स्थानत्राणयो रंकवस्तुनोः ॥८॥ श्लोकपादे पि चक्री बं पुल्लिंगः
किरणे पुनः ॥ पादो बुध्ने तुरीयांशे शैलप्रत्यंतपर्वते ॥९॥ चरणे च
मयूरवे च वंदा लतांतरे स्मृता ॥ भिक्षुक्यामपि वंद्यां च बिंदुर्दंतक्षतां
तरे ॥१०॥ भ्रूवोर्मध्ये रूपकार्यप्रकृतौ पृषते पुमान् ॥ वेदिलर्यन्यलिं
गः स्यात् भद्रं कल्याणशर्मणोः ॥११॥ भेदो द्वैधे विशेषे स्यात्तूपजा
पे विदारणे ॥ मदो रेतसि कस्तूर्यां गर्वे हर्षे भदानयोः ॥१२॥ मंदोऽ
तीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः ॥ अल्पे च त्रिषु पुंसि स्याद्ध
स्तिजात्यंतरे शनौ ॥१३॥ मृदुः स्यात्कोमले तीक्ष्णे रदो दंते विलेख
ने ॥ विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति ॥१४॥ वेदः श्रुतौ च
वृत्ते च वेदिः स्यात्पंडिते पुमान् ॥ स्त्रियामंगुलिमुद्रायां स्यात्परि
ष्कृतभूतले ॥१५॥ शादः स्यात्कर्दमे शष्पे स्वादुर्मिष्टमनोज्ञयोः ॥

सूदः स्त्रे कथितः सूपकारे चव्यंजनांतरे ॥ १६ ॥ स्वेदस्त्रे स्वेदने घर्मे त्रिदुद् क्लीबं तु क्रुन्चित्तयोः ॥ ॥ दत्रिः ॥ ॥ अंगदः कपिभेदे नाकेयूरेतिनपुंसकम् ॥ १७ ॥ अंगदा याम्यदिग्दंतिहस्तिन्यामपियोषिति ॥ अर्बुदुरर्बुदं बंदे स्याद्धलहस्तनरवांकयोः ॥ १८ ॥ अर्बुदुः स्याददतिमोदस्त्रियोन्यंगुलियोजने ॥ अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिषु ॥ १९ ॥ महीधरविशेषेनाऽथास्पदं पदकृत्ययोः आमंदो वासुदेवे स्यात्तवद्धाभेदे च योषिति ॥ २० ॥ आक्रंदः क्रंदने ह्वाने मित्रदारुणयुद्धयोः ॥ भ्रातर्यपि च पुंसि स्यादामोदो गंधहर्षयोः ॥ २१ ॥ ककुद्रस्त्री ककुदोप्यस्त्री वृषांके राजध्वजे वरे ॥ क्षणदो गणके रात्रौ क्षणदा क्षणदं जले ॥ २२ ॥ कपर्दः खंडपरशोर्जटाजूटे वराटके ॥ कपर्दस्तु रूक्षिशिकायां कर्णपाल्यामपि स्त्रियाम् ॥ २३ ॥ क्रव्याद्रक्षसि पुंसि स्यान्मांसाशिन्यन्यलिंगकः ॥ कामदा कामधेनौ स्त्री कामदातरि वाच्यवत् ॥ २४ ॥ कुमुद्रत्रिषु स्यात्कृपणे कैरवे तु नपुंसकम् ॥ कुमुदं कैरवे रक्तपद्मे स्त्री कुंभिकौषधौ ॥ २५ ॥ गंभार्यां पुंसि दिङ्नागनागशाखामृगांतरे ॥ कुसीदं जीवने वृद्ध्या क्लीबं त्रिषु कुसीदिके ॥ २६ ॥ कौमुदः स्यात्कार्तिके चंद्रिकायां तु कौमुदी ॥ गोष्पदं गोपदश्वभ्रे गवां च गतिगोचरे ॥ २७ ॥ गोविंदो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ ॥ गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे ॥ २८ ॥ जलदो मुस्तके मेघे जीवदो वैद्यविद्विषोः ॥ नरदस्त्रियां पूर्वेपि स्यात्कारंडे च विहंगमे ॥ २९ ॥ तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम् ॥ दरदस्त्रियां प्रपाते पि भयपर्वतयोरपि ॥ ३० ॥ दारदो विषभेदे स्यात्पारदे हिंगुले पुमान् ॥ दायादस्त्रे ऽभवे पुंसि सपिंडे तनये पि च ॥ ३१ ॥ दृषद्विष्येषणाशिलापट्टप्रस्तरयोः पुमान् ॥ धनदस्त्रे कुबेरे स्यात्पुल्लिंगो दातरि त्रिषु ॥ ३२ ॥ नलदं स्यात्पुष्परसोशीरमांसीषु नह्वयोः ॥ नर्मदः केलिसचिवे नर्मदा सरिदंतरे ॥ ३३ ॥ निर्वादः स्याल्लोकवादे परिनिश्चितवादयोः ॥ निषादः

स्वरभेदेस्याच्चंडालेधीवरांतरे॥३४॥प्रमदः संमदेमत्तेस्त्रियामु
त्तमयोषिति॥प्रसादोऽनुग्रहेकाव्यगुणस्वास्थ्यप्रसत्तिषु॥३५॥
प्रणादस्तुपुमांस्तारशब्देचश्रवणामये॥प्रासादोदेवनृपयोर्गृ
हेथवरदास्त्रियाम्॥३६॥कन्यायांवाच्यलिंगस्तुप्रसन्नेचसमर्द्ध
के॥भसदस्त्रीभास्वरेयोनौमर्यादासीमनिस्थितौ॥३७॥माकंदः
सहकारेऽस्त्रीधात्रीनगरभेदयोः॥मुकुंदोनिधिभिद्विष्णुरत्नभेदेच
कुंदरौ॥३८॥मेनादस्तुपुमान्केकिमार्जारच्छगलेषुच॥विशदःपां
डरेवक्तेशरद्स्त्रीवत्सरेप्यृतौ॥३९॥शारदोऽब्देस्त्रियांतोयपिप्प
लीसप्तपर्णयोः॥सस्येक्लीबंशरज्जातनूतनाप्रत्तिभेष्विषु॥४०॥ष
ड्बिंदुःस्यात्कीटभेदपुंडरीकाक्षयोःपुमान्॥संपत्भूतौगुणोत्क
र्षेहारभेदेपिचस्त्रियाम्॥४१॥संविदूस्त्रियांप्रतिज्ञायामाचारज्ञा
नसंगरे॥संभाषणेक्रियाकारेसकेतौनाम्निताषणे॥४२॥संभेदः
स्फुटनेसंगेस्कनंदारोचनोमयोः॥ ॥दचतुः॥ ॥अ
भिष्यंदोऽक्षिरुग्भेदोस्यादास्त्रावेक्षिगदेपिच॥४३॥अष्टापदोऽस्त्री
कनकेशारीणांफलकेपिच॥अष्टापदीचंद्रमल्यांशरभेमर्कटे
पुमान्॥४४॥अववादस्तुनिंदायामाज्ञाविश्रंभयोरपि॥अभि
मर्दस्तुपुंसिस्यादवमर्देसंपरायेच॥४५॥एकपदंतत्कालेनपुं
सकंवर्त्मनिस्त्रीस्यात्॥कटुकंदःपुमान्शिग्रौशृंगवेररसोनयोः
॥४६॥कुरुविंदंरत्नभेदेमुस्ताकुल्माषयोःपुमान्॥अथकोकन
दंरक्तकुमुदेरक्तपंकजे॥४७॥चतुष्पदीतुपद्येनापशौचकरणां
तरे॥भवेज्जनपदोजानपदोपिजनदेशयोः॥४८॥तमोनुदग्नौ
हृकैनाप्रतिपदूस्त्रीतिथौमतौ॥परिवादोपवादेस्याद्वीणावाद
नवस्तुनि॥४९॥प्रियंवदःखेचरेनाप्रियवाचितुवाच्यवत्॥पी
ठमर्दोऽतिधृष्टेस्यान्नायकस्यप्रियेपिच॥५०॥पुटभेदोनदीव
क्रेपत्तनातोद्ययोरपि॥महानादःकुंजरेस्याद्दर्षुकाब्देमहास्वने
॥५१॥मुचुकुंदोवृक्षभेदेमांधातृतनयेपिच॥मेघनादस्तुप

रुणेतनयेशावणस्यच॥५२॥विशारदः पंडितेचधृष्टेविष्णुपदं
तुरवे॥ क्षीरोदेचास्त्रियांगंगारविसंक्रांतिभेदयोः॥५३॥शशबिंदुः
पुमान्वासुदेवेराजांतरेपिच॥शतानंदोमुनेर्भेदेदेवकीनंदनेपि
च॥५४॥शतह्रदास्त्रियांवज्रेसौदामिन्यांचकीर्तिता॥समर्या
दः समीपेनामर्यादासहितेत्रिषु॥५५॥ ॥दपंच॥ ॥
भवेदुपनिषद्धर्मवेदांतविजनेस्त्रियाम्॥सहस्रपादः कारंडे
मार्तंडेयज्ञपूरुषे॥५६॥ ॥इतिदांतवर्गः॥ ॥
धैकम्॥ ॥धोनाधर्मेकुबेरेचक्लीबंदुघस्रनिस्मृतम्॥धो
धाचब्रह्मणिख्यातोधातुःस्याद्दूरकेपिच॥१॥धीर्ज्ञानेज्ञानभेदे
पिधूः स्मृताधूननेस्त्रियाम्॥ ॥धद्विः॥ ॥अर्द्धस
मांशेखंडेनाऽब्धिर्नासरसिवारिधौ॥२॥अंधः स्यात्तिमिरेक्लीबं
चक्षुर्हीनेभिधेयवत्॥आधिः पुमांश्चित्तपीडाप्रत्याशाबंधके
षुच॥३॥व्यसनेचाप्यतिष्ठानेविद्धमातपदासयोः॥ऋद्धं संप
न्नधान्येचसुसमृद्धेचवाच्यवत्॥४॥ऋद्धिःस्त्रियोषधीभेदे
समृद्धावपियोषिति॥गंधः प्रतिवेश्यामोदलेशसंबंधगंधके॥
५॥गाधःस्थानेचलिप्सायांगाथातलनिह्राकयोः॥ दधिक्षीरो
त्तरावस्थाभावेश्रीवाससर्जयोः॥६॥दग्धंपुष्टेऽन्यलिंगंस्या
त्स्थितार्कदिशिचस्त्रियाम्॥ दिग्धोविषाक्तबाणेस्यात्पुंसिलि
प्तेऽन्यलिंगकः॥७॥दुग्धंप्रपूरितेक्षीरेदुग्धाक्षीरविकौषधौ॥
दोग्धार्थोपजीविकवौवत्सगोपालयोःपुमान्॥८॥बद्धोबद्धे
मयोद्वृत्ते बंध आधौचबंधने॥बंधुःस्यात्पुंसिबंधूकेमित्रेभ्रा
तरिबांधवे॥९॥बाधादुःखेनिषेधेचबुधः सौम्येचपंडिते॥
बुद्धोजिनेलब्धवर्णेपुंसिस्याद्बुधितेऽन्यवत्॥१०॥बोधिःपुंसि
समाधेश्चभेदेपिप्पलपादपे॥मधुपुष्परसेक्षौरेमद्येनातुम
धुद्रुमे॥११॥ वसंतदैत्याभिद्भेदेस्याज्जीवंत्यांतुयोषिति॥मू
र्द्धाचित्ताभिसंक्षेपेक्लीबमालस्यचित्तयोः॥१२॥मुग्धस्तुसुंदरे

मूढेमेधाबुद्धौक्रतौपुमान्॥राधोमासांतरेराधाचित्रभेदेचध-
न्विनाम्॥१३॥गोपीविशाखामलकीविष्णुक्रांतासुविद्युति॥लुब्ध
आकांक्षिणिव्याधेवधूःस्त्रीशारिबौषधौ॥१४॥स्नुषाशठीनवोढा
सुभार्यापृक्कांगनासुच॥व्याधिःकुष्ठेचरोगेना॥व्याधोमृगयुदुष्ट-
योः॥१५॥तारामयेरवेचाविधुर्नाकर्पूरेंदुहारिषु॥विद्धंस्याद्वेधिते
क्षिप्तेसदृशेबाधितेत्रिषु॥१६॥विधिर्नानियतौकालेविधानेपरमे-
ष्ठिनि॥विधागजाशनेऋद्धौप्रकारेवेतनेविधौ॥१७॥वृद्धोजीर्णेप्र-
वृद्धेज्ञेत्रिषुक्लीबंतुशैलजे॥वृद्धिःस्त्रीवर्द्धनेयोगेप्यष्टवर्गौषधांतरे
॥१८॥कालांतरेचाभ्युदयेसमृद्धावपियोषिति॥श्रद्धाऽऽदरेचकां-
क्षायांश्राद्धंश्रद्धान्वितेत्रिषु॥१९॥हव्यकव्यविधौक्लीबंशुद्धंस्यात्त्रि-
षुकेवले॥निर्दोषेचपवित्रेचसंधास्थितिप्रतिज्ञयोः॥२०॥स्पर्धासं-
घर्षणेपिस्यात्साम्येक्रमसमुन्नतौ॥संधिःपुमान्सुरुंगायांभगेसं-
घट्टनेपिच॥२१॥रूपकानांमुखाद्यंगेसावकाशेपिकीर्तितः॥स्कंधः
स्यान्नृपतौवंशेसंपरायसमूहयोः॥२२॥कायेतरुप्रकांडेचभद्रादौ
छंदसोभिदि॥साधुर्वार्धुषिकेचारौसज्जनेचाभिधेयवत्॥२३॥सि-
द्धोनाव्यासादौभेदेयोगस्यदेवयोनेश्च॥त्रिषुनिष्पन्नेस्निग्धंस्नेह-
युतेचिक्कणेपिस्यात्॥२४॥सिंधुर्वमथुदेशाब्धिनदेनासरितिस्त्रिया-
म्॥सिद्धिःस्त्रीयोगनिष्पत्तिपादुकांतर्द्धिवृद्धिषु॥२५॥सुधास्त्रीले-
पनेमूर्व्यांस्नुहीगंगेष्टकामृते॥ ॥धत्रिः॥ ॥अवधिः
स्त्ववधानेस्यात्सीम्निकालेबिलेपुमान्॥२६॥अगाधमतलस्पर्शे
त्रिषुश्वभ्रेनपुंसकम्॥अनद्धंमुरजादौचक्लीबंस्यात्संदितेत्रिषु॥
२७॥आविद्धोवाच्यलिंगस्यात्कुटिलेचपराहते॥आबद्धोदृढबं-
धेस्यात्प्रेमालंकारयोर्द्वयोः॥२८॥उत्सेधस्तूच्छ्रयेनस्त्रीक्लीबंसं-
न्नहनेपिच॥उपाधिर्धर्मचिंतायांकुटुंबव्यापृतेच्छले॥२९॥विशे-
षणेपुंस्युपधिःपुंसिव्याजरथांगयोः॥कबंधोऽस्त्रीक्रियायुक्तव्य-
पमूर्द्धकलेवरे॥३०॥क्लीबंजलेपुंस्युदरेराहुरक्षोविशेषयोः॥दु

र्विधो वाच्यलिंगः स्याद्दुर्गतेपि खलेपि च ॥ ३१ ॥ न्यग्रोधस्तु पुमान्व्याम वटयोश्च शमीतरौ ॥ न्यग्रोधी तूपचित्रायां निरोधो नाशरोधयोः ॥ ३२ ॥ निषधः कठिने देशे तद्राजे पर्वतांतरे ॥ परिधिर्नायज्ञियद्रुशाखायामुपसूर्यके ॥ ३३ ॥ प्रसिद्धो भूषिते ख्याते प्रणिधिर्नाऽनुचरे चरे ॥ मागधी स्त्री कणायूथ्योर्वाच्यवन्मगधोद्भवे ॥ ३४ ॥ पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकबंदिनोः ॥ विवधो वीवधश्चापि पर्याहारेऽध्वभावयोः ॥ ३५ ॥ विश्रब्धोऽनुद्धतेपि स्याद्गाढविश्वस्तयोस्त्रिषु ॥ विबुधो ज्ञे सुरे वीरुल्लताविटपयोः स्त्रियाम् ॥ ३६ ॥ सन्नद्धो वर्मिते व्यूढे संबाधः संकटे भगे ॥ सन्निधिः सन्निधानेपि पुमानिंद्रियगोचरे ॥ ३७ ॥ संसिद्धिः प्रकृतौ सिद्धौ मदोग्रायामपि स्त्रियाम् ॥ संबोधो बोधने क्षेपे समाधिर्ना समर्थने ॥ ३८ ॥ ध्यानेनीवाकनियमे काव्यस्य च गुणांतरे ॥

॥ धचतुः ॥

॥ अवरोधस्तिरोधाने राजदारेषु तद्गृहे ॥ ३९ ॥ अवष्टब्धो विदूरे स्यादाक्रांते चावलंबिते ॥ अनुबंधस्तु बंधे स्याद्दोषोत्पादे विनश्वरे ॥ ४० ॥ मुख्यानुयायि बाले च प्रकृतस्यानिवर्तने ॥ अनुबंधी तु हिक्कायां तृष्णायामपि योषिति ॥ ४१ ॥ अनिरुद्ध उषानाथे पुंसि चाऽबंधनेऽन्यवत् ॥ आशाबंधः समाश्वासे पुंसि मर्कटजालके ॥ ४२ ॥ इष्टगंधः सुगंधौ स्यात्त्रिषु क्लीबं तु वालुके ॥ इक्षुगंधा कोकिलाक्षे कोष्ट्यां काशे च गोक्षुरे ॥ ४३ ॥ उपलब्धिर्मतौ प्राप्तावपि ज्ञाने च योषिति ॥ उग्रगंधाजमोदायां वचायां छिक्किकौषधौ ॥ ४४ ॥ कालस्कंधस्तमाले स्यात्तिंदुके जीवकद्रुमे ॥ तीक्ष्णगंधा वचाराजिकयोः शोभांजने पुमान् ॥ ४५ ॥ तृणगोधा चित्रकोले कृकलासेपि योषिति ॥ परिव्याधस्तु पुंसि स्याद्द्रुतसे वञ्जुलोत्पले ॥ ४६ ॥ ब्रह्मबंधुरधिक्षिप्से निर्देशे ब्राह्मणस्य ना ॥ महौषधं तु शुंठ्यां स्याद्विषायां लशुनेपि च ॥ ४७ ॥ समुन्नद्धः समुद्धूते पंडितंमन्यगर्विते ॥

॥ धपंच ॥

॥ योजनगंधा कस्तूर्यां सीतायां व्यासमातरि

रि॥४८॥ ॥ इति धांतवर्गः॥ ॥ नैकम्॥ ॥
नः पुमान्सुगते बंधे ह्रिरंडे मस्तकेपि च॥ ॥ नद्दिः॥ ॥
अग्निर्वैश्वानरेपि स्याच्चित्रकारव्योषधौ पुमान्॥१॥ अन्नं भक्ते च
भुक्ते स्यादिनः पत्यौ नृपार्कयोः॥ उन्नं क्लिन्ने च सुरते कृत्स्नं सर्वांबु
कुक्षिषु॥२॥ घनं स्यात्कांस्यतालादि वाद्य मध्यमनृत्ययोः॥ नासुस्ता
ब्धौ घदार्ढ्येषु विस्तारे लोहमुद्गरे॥३॥ त्रिषु सांद्रे दृढे चाथ चिन्हं ल
क्ष्मपताकयोः॥ चीनो देशांशुकव्रीहिभेदे तंतौ मृगांतरे॥४॥ छन्नं
तु रहसि क्लीबं छादिते वाच्यलिंगवत्॥ छिन्नं छत्ते त्रिलिंगं स्याद्गु
डूच्यामपि योषिति॥५॥ जनो लोके महर्लोकात्परलोके च पामरे॥
जनी सीमंतिनी वध्वोरुत्पत्तावौषधीभिदि॥६॥ जन्हुः स्यात्पुंसि रा
जर्षिभेदे च मधुसूदने॥ ज्यानिर्जीर्णे च हानौ च तटिन्यामपि योषि
ति॥७॥ जिनो र्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु॥ ज्योत्स्ना चंद्रा
तपेपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता॥८॥ ज्योत्स्नी पटोलिकायां स्या
ज्ज्योत्स्ना युक्तनिशि स्त्रियाम्॥ तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे वि
रले कृशे॥९॥ दानं गजमदे त्यागे पालनच्छेदशुद्धिषु॥ दानुर्दातरि
विक्रांते दीनाख्ली मूषिके स्त्रियाम्॥१०॥ वाच्यवद्दुर्गते भीते द्युम्नं
वित्ते बले पि च॥ धनुः पुमान्पियालद्रौ राशिभेदे शरासने॥११॥ ध
नं तु गोधने वित्ते धाना भृष्टयवेपि च॥ धान्याके पि नवोद्भिन्ने धेनी
नद्यां नदे पुमान्॥१२॥ नग्नो वंदिक्षपणयोः पुंसि त्रिषु विवाससि
॥ न्यूनं गर्ह्योनयोः पानं पीतिभाजनरक्षणे॥१३॥ भानुर्नाकिरणे
सूर्ये भिन्नः स्यात्त्रिषु दारिते॥ संगतेऽन्ये च फुल्ले च मानं भ्विनान्न
नोगृहे॥१४॥ क्लीबं प्रमाणे मस्यादौ मीनो राश्यंतरे झषे॥ मुनिः पुं
सि वसिष्ठादौ वंकसेनतरौ जिने॥१५॥ मृत्स्ना मृत्सा तु धर्योः स्त्री था
नं स्या हाहने गतो॥ योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमंदिरे॥
१६॥ रत्नं स्वजातिश्रेष्ठेपि मणावपि नपुंसकम्॥ रास्ना च स्याद्भुजं
गाक्ष्यां एलापर्ण्यामपि स्त्रियाम्॥१७॥ लग्नं राश्युदये क्लीबं सक्त

लज्जितयोस्त्रिषु॥ वस्नस्त्वविक्रये पुंसि वेतने स्यान्नपुंसकम्॥
॥१८॥ वनं नपुंसकं नीरे निवासालयकानने॥ वह्निर्वैश्वानरेपि स्या
च्चित्रकाख्यौषधौ पुमान्॥१९॥ वानं शुष्कफले शुष्कस्यूतिकर्मक
टे गतौ॥ विन्नं विचारिते लब्धे बुध्नो नामूलरुद्रयोः॥२०॥ श्वा पुमा
न्कुक्कुरे स्यात्तः स्थानभेदे च वास्तनः॥ शीनो मूर्खे चाजगरे श्येनः
पक्षिणि पाण्डुरे॥२१॥ स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्॥
सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे॥२२॥ स्थानं सादृश्येऽव
काशे स्थितौ वृद्धिक्षयेतरे॥ स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्य
योरपि॥२३॥ स्नानं स्नानीयेऽभिषवे सूनं प्रसवपुष्पयोः॥ सूना
पुत्र्यां वधस्थाने गलशुण्डिकयोः स्त्रियाम्॥२४॥ सूनुः पुत्रेनुजे केना
सूनुः किरणसूर्ययोः॥ हनुर्हट्टविलासिन्यां सूनावज्ञे गदे स्त्रियां
॥२५॥ द्वयोः कपोलावयवे हीनं गर्ह्योनयोस्त्रिषु॥ ॥न-
त्रिः॥ ॥अंजनं कज्जले चाक्तौ सौवीरे च रसांजने॥२६॥ पुं
सि ज्येष्ठादिग्गजयोरंजना वानरीभिदि॥ अंजनी लेप्यनार्यां-
-चावनं प्रीतौ च रक्षणे॥२७॥ अयनं पथि भानोरप्युदग्दक्षिणतो
गतौ॥ अपानं तु गुदे क्लीबं पुंसि स्यात्तस्य मारुते॥२८॥ असनं क्षे
पणे क्लीबं पुंसि स्याज्जीवकद्रुमे॥ अंगनं प्रांगते याने कामिन्या
मंगना मता॥२९॥ अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः॥ मातु
रेकसुतेपि स्यात्पुंल्लिंगो धवलेऽन्यवत्॥३०॥ नपुंसकं तृणे नेत्रग
दे चाप्यर्जुनी गवि॥ उषायां बाहुदानघ्यां कुट्टिन्यामपि च क्वचित्
॥३१॥ अम्लानो महासहायां नान्यलिंगस्तु निर्मले॥ अर्शोघ्नी
तालमूल्यां स्यादर्शोघ्नः सूरणेपि च॥३२॥ असिक्नी स्यादवृद्धान्तः
पुरप्रेष्यानदीभिदोः॥ अशनिः स्त्रीपुंसयोः स्यात्त्वं चलायां पव्याव-
पि॥३३॥ अरत्निर्ना सप्रकोष्ठततांगुलिकरेपि च॥ कफोणावप्य
थालीस्याद्वृश्चिके भ्रमरे पुमान्॥३४॥ अर्थी पुमान्याचके स्यात्
सेवके च विवादिनि॥ अध्वाना पथि संस्थाने स्यादवस्कंदकाल-

योः॥३५॥अर्वातुरंगमेपुंसिकुत्सितेवाच्यलिंगकः॥आसनंद्विरद
स्कंधेपीठेयात्रानिवर्तने॥३६॥आसनीविपणोस्थित्यामासनोनाः
तुजीरके॥आदानंग्रहणेपिस्यादलंकारेचवाजिनाम्॥३७॥आप
न्नःसविपत्तौचप्राप्तेवाच्यवदीरितः॥आत्मापुंसिस्वभावेपिप्रय
त्नमनसोरपि॥३८॥धृतावपिमनीषायांशरीरब्रह्मणोरपि॥आला
नंकिरणांबंधस्तंभेरज्जौचनस्त्रियाम्॥३९॥ईशानंज्योतिषिक्लीबं
पुल्लिंगःस्यात्रिलोचने॥उत्तानमगभीरेस्यादूर्ध्वास्यशयितेत्रिषु॥
४०॥उत्थानमुद्यमेतंत्रेपौरुषेपुस्तकेरणे॥प्रांगणोद्गमहर्षेषुमल
रोगेपिनद्वयोः॥४१॥उद्यानंस्यान्निःसरणेवनभेदेप्रयोजने॥उदा
नोप्युदरावर्त्तेवायुभेदेभुजंगमे॥४२॥उन्मानमुद्धृतेवाच्यलिंगंतु
स्यान्नपुंसकम्॥ओदनंनस्त्रियांभक्ते बलायामोदनीस्त्रियाम्॥
४३॥कमनःकामुकेकामेऽभिरूपेऽशोकपादपे॥कंपनंनद्वयोः
कंपेकंप्रेस्यादभिधेयवत्॥४४॥कठिनमपिनिष्ठुरेस्यात्स्तब्धेपि
त्रिषुनपुंसकंस्थाल्याम्॥कठिनीखटिकायामपिकठिनागुडश
र्करायांच॥४५॥क्रंदनंरोदनेपिस्यादाह्वानेप्यथकल्पना॥करि
णःसज्जनायांस्त्रीक्लीबंक्लृप्तौचकल्पने॥४६॥कर्तनंनद्वयोश्छेदे
नारीणांसूत्रनिर्मितौ॥कर्मास्त्रीव्याप्यक्रिययोःकदनंमर्दपापयोः
॥४७॥कांचनःकांचनारेस्याच्चंपकेनागकेसरे॥उदुंबरेचधत्तूरे
हरिद्रायांचकांचनी॥४८॥क्लीबेब्जकेसरेहेम्निकामिनीभीरुवं
द्योः॥कामीतुकामुकेचक्रवाकेपारावतेपिच॥४९॥कानीनःक
न्यकाजाततनयेव्यासकर्णयोः॥काकिनीपणपादेपिमानपाद
वराटके॥५०॥काननंविपिनेगेहेपरमेष्ठिमुखेपिच॥कुहनंमृ
त्तिकाभांडविशेषेकाचभाजने॥५१॥कुहनादंभचर्यायामीर्ष्यालौ
कुहनंत्रिषु॥कृतीस्यात्पंडितेयोग्येकेतनंतुनिमंत्रणे॥५२॥गृ
हेकेतौचकृत्येथकेशीकेशवतित्रिषु॥दैत्येनाचौरपुष्प्यांस्त्रीकौ
लीनंकुत्सजन्ययोः॥५३॥कुकर्मणिकुलीनत्वेयुद्धेपश्वहिपक्षिणां

कौपीनं स्यादकार्येच चीरगुह्यप्रदेशयोः॥५४॥ खलिनी खलवृं
दे स्यात्तालपर्ण्यामपि स्त्रियाम्॥ खंजनं खंजरीटे स्त्री सर्षप्यां खं
जनं गतौ॥५५॥ खङ्गीनामंडके मंजुघोषे खड्गधरे त्रिषु॥ गर्जनं
निनदे कोपे गहनं कलिले त्रिषु॥५६॥ नपुंसकं गह्वरे स्याद्दुःखका
ननयोरपि॥ गंधनमुत्साहे स्यात्प्रकाशनसूचनेपि हिंसायां॥५७॥
ग्रामीनः श्वनि काके पुंसि त्रिषु संभृते ग्रामे॥ ग्रावा तु प्रस्तरे पृथ्वी
धरे पुंस्यथ गृंजनम्॥५८॥ विषदग्धपशोर्मांसे क्लीबं पुंसि रसोन
के॥ गोस्तनो हारभेदं ना द्राक्षायां गोस्तनी स्त्रियाम्॥ ५९॥ गोमी
शृगाले पुंसि स्यात्त्रिषु गोमत्युपासके॥ घटना चलना घट्यो श्चंद
नी तु नदीभिदि॥६०॥ चंदनोऽस्त्री मलजये भद्रकाल्यां नपुंसकं॥
चलनं भ्रमणे कंपे कंपे तु वाच्यलिंगकम्॥६१॥ चलनी वस्त्रयो
धिन्यां वारीभेदेपि च क्वचित्॥ चक्री जालिकभित्कोककुलालाजा
हिसूचके॥६२॥ चर्म फलकपाणौ स्याद्भूर्जे भृंगरिटावपि॥ चर्मकू
तौ च फलके चेतना संविदि स्त्रियाम्॥६३॥ वाच्यवत्प्राणयुक्तेऽथ
छद्म व्याजापदेशयोः॥ छर्दनं वमने क्लीबं निंबालंबुषयोः पुमान्
॥६४॥ छदनं छदने पक्षे पिधाने छेदने भिदि॥ कर्तने जगनुः पुं
सि जंतौ वैश्वानरेपि च॥ ६५॥ जवनं तु स्यदे वेगि हये ना वेगिनि त्रि
षु॥ जननी तु दयामात्रोर्जननं वंशजन्मनोः॥६६॥ जयनं स्यात्तुरं
गादिसन्नाहे विजयेऽपि च॥ जंघनं च स्त्रियाः श्रोणिपुरोभागे कटाव
पि॥६७॥ ज्ञानी स्यात्पुंसि दैवज्ञे ज्ञानयुक्तेन्यलिंगकः॥ जीवनं व
र्तने नीरे प्राणधारणयोरपि॥६८॥ जीवनी जीवना चापि जीवंती
भेदयोः क्रमात्॥ तपनो रुष्करेपि स्याद्भास्करे निरयांतरे॥६९॥ तल्ल
नः पवने यूनि युवत्यां तल्लुनी स्मृता॥ तलिने विरले स्तोके स्वच्छेपि
वाच्यलिंगकम्॥७०॥ तमोघ्नः सूर्यवन्हींदुबुद्धशंकरविष्णुषु॥
त्यागी दातरि शूरेऽथ तेवनं केलिकानने॥७१॥ क्रीडायां तेमनं त्वा
र्द्रीकरणे व्यंजनेपि च॥ तेजनः पुंसि वंशे स्यात्तेजनी तृणमूलके ७२

तोदनं व्यथने तोत्रे दंशनं दंशवर्मणोः॥ दर्शनं नयनस्वप्नबुद्धिध-
र्मोपलब्धिषु॥७३॥ शास्त्रदर्पणयोश्चाथ दमनः पुष्पधीरयोः॥ दशनः
शिखरे दंते कवचे तु नपुंसकम्॥७४॥ दहनश्चित्रके भल्लातकेऽग्नौ
दुष्टचेष्टिते॥ दशानं ज्योतिषि क्लीबं पुल्लिंगः स्याद्धिरेचने॥७५॥ देव
नं व्यवहारे स्याज्जिगीषाक्रीडयोरपि॥ देवनोऽक्षेषु पुंसि स्याद्ध्वजी
तु पृथिवीधरे॥७६॥ रथब्राह्मणयोश्चापि भुजंगमतुरंगयोः॥ धन्वी
धनुर्धरेपि स्यादर्हणे ककुभद्रुमे॥७७॥ धन्वा तु मरुदेशे ना क्लीबं चा
पे स्थले पि च॥ धमनोऽनानले भस्त्राऽध्मापककूरयोस्त्रिषु॥७८॥
धमनी तु शिरा हट्टविलासिन्योश्च योषिति॥ धावनं गमने शुद्धौ पृ-
श्निपर्ण्यां तु धावनी॥७९॥ धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः
॥ नंदनं वासवोद्याने नंदनो हर्षके सुते॥८०॥ नंदी हरप्रतीहारे गर्द
भांडे वनद्रुमे॥ नंदिन्युमायां गंगायां ननांदृधेनुभेदयोः॥८१॥ न-
लिनी पद्मिनी व्योमनिम्नगा कमलाकरे॥ नपुंसकं नीलिकायां नपुं
सि सरसीरुहे॥८२॥ निदानं कारणे वत्सदाम्नि दकारणक्षये॥ नि
धनं स्यात्कुले नाशे प्रधनं दारणे रणे॥८३॥ पचनं कुंभकारस्य पाक
स्थाने नपुंसकम्॥ निष्पावमारुतौ पुंसि प्रज्ञानं बुद्धिचिन्हयोः॥
८४॥ प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि॥ प्रज्ञायामपि च क्लीब
मेकत्वे तूत्तमे सदा॥८५॥ पद्मिनी पद्मसंघाते स्त्रीविशेषे सरोरुहे
॥ प्रसन्ना स्त्री सुरायां स्यात्स्वच्छसंतुष्टयोस्त्रिषु॥८६॥ प्रसूनो धान्य
वज्जाते क्लीबं तु फलपुष्पयोः॥ पत्री श्येने पत्ररथे कांडद्रुरथिकादि
षु॥८७॥ पर्व क्लीबं महे ग्रंथौ प्रस्तावे लक्षणांतरे॥ दर्शप्रतिपदोः सं
धौ विष्णुवत्प्रभृतिष्वपि॥८८॥ सूक्ष्मसूत्रादिसूक्ष्मांशे किंजल्केने
त्रलोमनि॥ पाठीनो मीनभेदे स्यात्पाठके गुग्गुलद्रुमे॥८९॥ पाव
नं तु जले कृच्छ्रे नाध्यासे पावके पि च॥ पावनं दशमूल्यादौ प्राय
श्चित्ते च नामले॥९०॥ वाच्यवत्स्याच्चयितरि हरीतक्यां तु योषिति
॥ पाशी व्याधे च वरुणे पिशुनं कुंकुमेपि च॥९१॥ कपिवक्त्रे च का

केनासूचककूरयोस्त्रिषु॥शुक्लायांपिशुनास्त्रीस्यात्पीतनंपीतदारुणि॥९२॥कुंकुमेहरितालेचपुमानाम्रातकेमतः॥पूतनातुहरीतक्यांदानवीरोगभेदयोः॥९३॥पृतनातुस्त्रियांसेनामात्रसेनाविशेषयोः॥प्रेत्वानावासवेवातेप्रेमास्त्रीस्नेहहर्षयोः॥९४॥फलिन्यग्निशिखायांस्त्रीफलिन्यांफलिनेत्रिषु॥फाल्गुनस्तुगुडाकेशेनदीजार्जुनभूरुहे॥९५॥तपस्यसंज्ञेमासेतत्पूर्णिमायांतुफाल्गुनी॥ब्रह्मतत्त्वतपोवेदेनद्वयोःपुंसिवेधसि॥९६॥ऋत्विग्योगभिदोर्विप्रेबंधनंवधबंधयोः॥वंदनीनतिर्जीवातुरुद्रीमाचलकर्मसु॥९७॥वाहिनीस्यात्तरंगिण्यांसेनासैन्यप्रभेदयोः॥वाणिनीनर्तकीमत्ताविदग्धवनितासुच॥९८॥बुधानस्तुगुरौविज्ञेबोधनंगंधदीपने॥बोधिनीबोधिपिप्पल्योर्भर्मस्यात्कांचनेभृतौ॥९९॥भंडनंकवचेयुद्धेखलीकारेपिनद्वयोः॥भट्टिनीद्विजभार्यायांनाट्योक्त्यांराजयोषिति॥१००॥भवनंस्याद्गृहेभावेभाजनंयोग्यपात्रयोः॥भावनातुननाध्यानेपर्यालोचेधिवासने॥१॥भुवनंपिष्टपेपिस्यात्सलिलेगगनेजले॥भोगीभुजंगमेपिस्याद्ग्रामपात्रेनृपेपुमान्॥२॥विहायमहिषीमन्यराजयोषितिभोगिनी॥मदनःस्मरवसंतद्रुभिद्धूस्तूरसिक्थके॥३॥मलनःपटवासेनामर्दनंतुनपुंसकम्॥मलिनंदूषितेकृष्णेऋतुमत्यांतुयोषिति॥४॥मंडनंभूषणेक्लीबंस्यात्त्रिषलंकरिष्णुनि॥मार्जनंनद्वयोर्मार्ष्टौपुंसिस्याल्लोध्रशाखिनि॥५॥मालिनीमातृकावृत्तभिदोर्मालिकयोषिति॥गौरीचंपानगर्योश्चमंदाकिन्यांनदीभिदि॥६॥मानिनीतुस्त्रियांफल्यांमानीमानवतित्रिषु॥मिथुनंतुद्वयोराशिभेदेस्त्रीपुंसयुग्मके॥७॥मुंडनंवपनेत्राणेमेहनंमूत्रशिश्नयोः॥मैथुनंसुरतेपिस्यात्संगतेपिनपुंसकम्॥८॥यमनंबंधनेचोपरतौक्लीबंयमेपुमान्॥यवनोदेशभेदेनावेगिवेगाधिकाश्वयोः॥९॥यावान्योषधिभेदेस्त्रीगाव्यवहूगिनिस्मृता॥याप

नंवर्तनंकालक्षेपेनिरसनेपिच॥१०॥युवाँस्यात्तरुणेश्रेष्ठेनिसर्गे
बलशालिनि॥युंजानःसारथौविप्रेयोजनंपरमात्मनि॥११॥चतुः
क्रोश्यांचयोगेऽथरसनंस्वदनेध्वनौ॥जिह्वायांतुनपुंसिस्याद्रास्ना
यांरसनास्त्रियाम्॥१२॥रंजानोरागजननेरंजनंरक्तचंदनम्॥शृं
गरोचनिकानीलीमंजिष्ठास्रुचरंजनी॥१३॥रजनीनीलिनीरात्रि
हरिद्राजतुकास्रुच॥राधनंसाधनेप्राप्तौराधनाभाषणेस्त्रियाम्
॥१४॥राजाप्रभौचनृपतौक्षत्रियेरजनीपतौ॥यक्षेशक्रेचपुंसिस्या
द्रागीरक्तेपिकामुके॥१५॥रेचनीत्रिवृतादंत्योरोचनीकर्कशेस्त्रि
याम्॥रोचनारक्तकल्हारेगोपित्तवरयोषितोः॥१६॥रोचनःकूट
शाल्मल्यांपुंसिस्याद्रोचकेत्रिषु॥रोदनंक्रंदनेस्रेपिदुरालंभौषधौ
स्त्रियाम्॥१७॥रोहीरोहितकेऽश्वत्थवटपादपयोःपुमान्॥लंघ
नंतूपवासेस्यात्क्रमणेप्लवनेऽपिच॥१८॥ललनाकामिनीनारीभे
दजिह्वास्रुयोषिति॥लक्ष्मचिन्हेप्रधानेचलाछनंमानचिन्हयोः
॥१९॥खेलनंछर्दनेभूर्जेलिपिन्यासेऽथवर्जनम्॥हिंसात्यागयो
र्वपनंबीजाधानेचमुंडने॥२०॥वसनंछादनेवस्त्रेवमनंछर्दनेऽ
र्दने॥वर्द्धनंवृद्धिवर्धिष्णुच्छेदयस्यांतुवर्द्धिनी॥२१॥व्यंजनंतेम
नेचिन्हेश्मश्रुण्यवयवेहनि॥व्यसनंत्वशुभेसक्तौपानस्त्रीमृगया
दिषु॥२२॥दैवानिष्टफलेपापेविपत्तौनिष्फलोद्यमे॥वर्तनोवाम
नेक्लीबंवृत्तौस्त्रीवेषणाध्वनोः॥२३॥नपुंसितूलनासायांतर्कुपीठे
चजीवने॥वर्त्तिष्णोस्त्रिषुवज्रीतुबुद्धेदेवाधिपेपुमान्॥२४॥व
वह्निस्तुपुमान्विप्रेवावदूकेऽभिधेयवत्॥वर्णीस्याल्लेखकेचि-
त्रकरेपिब्रह्मचारिणि॥२५॥वर्ष्मदेहप्रमाणातिसुंदराकृतिषुस्मृ
तम्॥वर्त्मनेत्रच्छदेमार्गेवाजीबाणाश्वपक्षिषु॥२६॥वामनोप्य
निरखर्वेचत्रिषुपुंसितुदिग्गजे॥हरावंकोटवृक्षेऽथवासनंधूप
नेपिच॥२७॥वारिधान्यांचवस्त्रेचप्रत्याशाज्ञानयोस्त्रियाम्॥
वाग्मीपटौसुराचार्येविज्ञानंज्ञानकर्मणोः॥२८॥वितुन्नंसुनि

षण्णेच शैवालेचनपुंसकम्॥ विमानो व्योमयानेचसार्वभौमगृहे- पिच॥ २९॥ घोटकेयानपात्रेचपुंनपुंसकयोर्मतः॥ वितानो यज्ञउल्लोचेविस्तारेपुंनपुंसकम्॥ ३०॥ क्लीबंवृत्तविशेषेस्यात्रिलिंगोमत्ततुच्छयोः॥ विक्लिन्नोजरसाजीर्णे शीर्णेचार्द्रेच वाच्यवत्॥ ३१॥ विपन्नंविपदाक्रांतेत्रिषुपुंसिभुजंगमे॥ विच्छिन्नंचसमालब्धेविभक्तेप्यभिधेयवत्॥ ३२॥ विलग्नंनस्त्रियांमध्येत्रिषुस्याल्लग्नमात्रके॥ विषघ्नस्तुशिरीषेनागुडूचीत्रिवृत्तोःस्त्रियाम्॥ ३३॥ व्युत्थानंस्वातंत्र्यकृत्येविरोधाचरणेपिच॥ वृजिनंकल्मषेक्लीबं केशेनाकुटिलेत्रिषु॥ ३४॥ वृषाकर्णेमहेंद्रेना वेदना ज्ञानदुःखयोः॥ वेष्टनंकर्णशष्कुल्यामुष्णीषेमुकुटेवृतौ॥ ३५॥ व्योमवारिणिचाकाशेभास्करस्यार्चनाश्रये॥ शकुनिःपुंसिविहगेसौबलेकरणांतरे॥ ३६॥ शयनंसुरतेनिद्राशय्ययोश्चनपुंसकम्॥ शमनंशांतिवधयोःशमनःश्राद्धदेवते॥ ३७॥ श्वसनंस्वसितेपुंसिमारुतेमदनद्रुमे॥ शकुनस्तुपुमान्पक्षिमात्रपक्षिविशेषयोः॥ ३८॥ शुभशंसिनिमित्तेचशकुनंस्यान्नपुंसकम्॥ शंकिनी श्वेतगुंजायांचौरपुष्प्यांवधूभिदि॥ ३९॥ शंखी हरौसमुद्रेनाशंखवत्यभिधेयवत्॥ शतघ्नी शस्त्रभेदेस्यात् वृश्चिकाल्यांकरंजके॥ ४०॥ शासनंराजदत्तोर्व्यांलेखाज्ञाशास्त्रशांतिषु॥ शाखी स्यात्पादपेवेदे तुरुष्कारव्यजनेपुमान्॥ ४१॥ शिखी वन्हौबलीवर्दे शरे केतुग्रहेद्रुमे॥ मयूरेकुक्कुटेपुंसिशिखावत्यन्यलिंगकः॥ ४२॥ शिल्पी तुवाच्यवत्कारोस्त्रियांकोलदलौषधौ॥ शृंगीशृंगयुतेनागेवृषपर्वतयोरपि॥ ४३॥ श्लेष्मघ्नी मल्लिकायांच ज्योतिष्मत्यांचयोषिति॥ शोभनोयोगभेदेनासुंदरेवाच्यलिंगकः॥ ४४॥ सवनंत्वध्वरेस्नानेसोमनिर्दलनेपिच॥ स्तननंध्वनिमात्रेस्यान्मेघशब्देचकुंथिते॥ ४५॥ समानंसत्समेकेषुत्रिषुनाभिमारुते॥ संतानःसंततौगोत्रेस्यादपत्येसुरद्रुमे॥ ४६॥ स्पर्शनो मारुतेपुंसि दानेस्पर्शनपुंसकम्॥ संस्थानमाकृ-

तोमृत्योसंनिवंशेच तुष्यथे ॥ ४७ ॥ स्यदनं तु श्रुतौ नीरे तिनिशेना
रथेऽस्त्रियाम् ॥ सज्जनं तु भवेत्क्लीबंसु परक्षण घट्टयोः ॥ ४८ ॥ वाच्य
लिंगं कुलीने स्यात्कल्पनायां तु योषिति ॥ संधानं स्यादभिषवे तथा
संघट्टनेपि च ॥ ४९ ॥ संपन्नं साधितेपि स्यात्संपत्तिसहिते न्यवत् ॥ सं
धिनी वृषभाक्रांताकालदुग्धोस्त्रयोः स्त्रियाम् ॥ ५० ॥ सद्म स्यान्मंदि
रेनीरे संव्यानं छादनेंशुके ॥ सदनं मंदिरे ताये स्वामीप्रभुविशाख
योः ॥ ५१ ॥ सादी तुरंगमातंगरथारोहेषु दृश्यते ॥ स्थापनं रोपणे पुं
सिवने पाठोषधौस्त्रियाम् ॥ ५२ ॥ सावनो थ ज्ञकर्मांते यजमानभर्त्र
तसोः ॥ साधनं मूलसंस्कारे सैन्ये सिद्धौषधौगतौ ॥ ५३ ॥ निवर्तनोपा
यमेढ्रे दापनेऽनुगमधने ॥ साम क्लीबं सुपायस्य भेदे वेदांतरेपि च
॥ ५४ ॥ सीमा घाटस्थितिक्षेत्रे षंडकोषेऽपि च स्त्रियाम् ॥ सूचना व्यध
ने दुष्टे गंधनेऽभिनयेपि च ॥ ५५ ॥ सेचनं रक्षणे सेके नौकायाः सेकभा
जने ॥ सेनानीः स्यात्तु मान्कार्तिकेयसेनापतावपि ॥ ५६ ॥ सेवनं सी
वनोपास्त्योर्हलीरामे च कर्षके ॥ हस्तिनी गजयोषायां जातिभेदे
च योषितः ॥ ५७ ॥ हसनं न द्वयोर्हासेऽगारधान्यां तु योषिति ॥ हायनो
नस्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः ॥ ५८ ॥ ह्लादिनी वज्रनड्डितोर्हि
डेनं भ्रमणेरते ॥ ॥ नत्र तुः ॥ ॥ अवलग्नोऽस्त्रियां
मध्ये त्रिषु स्यात्लग्नमात्रके ॥ ५९ ॥ अनूचानो विनीते स्यात्सांगवेद
विचक्षणे ॥ अवाचीनमवागर्थे विपर्यस्ते च वाच्यवत् ॥ ६० ॥ अभि
पन्नोऽपराधे भिग्रस्ते चापद्गते त्रिषु ॥ अवदानं खंडने स्यादतिवृत्ते
च कर्मणि ॥ ६१ ॥ अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ॥
अनीकिनी स्त्रियां सेनामात्रसेनाविशेषयोः ॥ ६२ ॥ अधिष्ठानं
पुरे चक्रे प्रभावेऽध्यासनेपि च ॥ अन्वासनं स्नेहवस्तावुपास्ता
वनुशोचने ॥ ६३ ॥ अर्यमा तु पुमान्सूर्ये पितृदेवांतरेपि च ॥ अथ
र्वा ब्राह्मणे पुंसि वेदे तु स्यान्नपुंसकम् ॥ ६४ ॥ भवेदभिजनः ख्या
तौ जन्मभूम्यां कुलध्वजे ॥ कुलेपि च पुमानायोधनं युद्धे वधेपि च ॥

॥६५॥स्यादाकलनमाकांक्षापरिसंख्यानबंधने॥आतंचनंप्रती वापपवनाप्यायनेषुच॥६६॥आराधनंचपनेप्राप्तोसंतोषणेपि च॥आच्छादनंसंपिधानेवस्त्रेऽपट्टत्तिमात्रके॥६७॥आस्कंदनंति रस्कारेरणेसंशोषणेपिच॥आवेशनंशिल्पिशालेभूतावेशप्रवेश योः॥६८॥आत्मयोनिःपुमान्कामदेवेचपरमेष्ठिनि॥उपधानंविषे गेंडोप्रणयेपिनपुंसकम्॥६९॥उत्सादनंसमुल्लेखोद्वाहनोद्वर्तने षुच॥स्यादुत्पतनमुत्पत्तौतथोर्ध्वगमनेऽपिच॥७०॥उद्वर्त्तनमु त्पतनेविलेपनेघर्षणेक्लीबम्॥उदयनमुदयेक्लीबंवत्सेशागस्त्य योःपुंसि॥७१॥उद्वाहनंप्रणीतेस्याद्व्यासुद्वाहनीमता॥उपा सनंशराभ्यासेप्युपास्तावासनेपिच॥७२॥कपीतनोगर्दभांडशि- रीषाम्रातकेषुच॥अश्वत्थेचकलापीतुप्लक्षबर्हिणयोःपुमान्॥ ७३॥कलध्वनिःपुमान्पारावतेपिकमयूरयोः॥क— —क्यंतःपु राध्यक्षेपिद्रुंडुहोजोंगकद्रुमे॥७४॥कात्यायनोवररुचौविशेषेच- मुनेःपुमान्॥काषायवस्त्रेविधवार्द्धजरत्युमयोःस्त्रियाम्॥७५॥कुं भयोनिरगस्त्येस्याद्वसिष्ठद्रोणयोःपुमान्॥कुचंदनंचपत्रांगेद्रुमे देरक्तचंदने॥७६॥कुंडलीवरुणेकेकिभोगिनोश्वसकुंडले॥के सरीतुरगेसिंहेपुन्नागेनागकेसरे॥७७॥क्रौंचादनंतुघेंचुल्यांनि चोटकमृणालयोः॥खड्गधेनुःस्त्रियांखड्गपुत्रिकागंडकस्त्रियोः ॥७८॥गवादनीद्रवारुण्यांगवांघासादनाश्रये॥गदयित्नुःपु मान्कामेजल्पकेकामुकेपिच॥७९॥घनाघनोवर्षुकाब्देमत्तघा तुककुंजरे॥चक्रेच घोषयित्नुस्तुविप्रकोकिलयोःपुमान्॥८०॥ चित्रभानुःपुमान्वैश्वानरेचाहस्करेपिच॥चोलकीतुकरीरे- स्यान्नारंगेविक्षुपर्वणि॥८१॥जलाटनोलोहपृष्ठेजलौकायांज लाटनी॥तपस्वीतापसेचानुकंप्येत्रिष्वथयोषिति॥८२॥मांसि काकटुरोहिण्योस्तरस्वीशूरवेगिनोः॥तपोधनस्तापसेस्यान्मुंडि र्यांतुतपोधना॥८३॥द्विजन्मादशनेविप्रेदुर्नामक्लीबमर्शसि॥

स्याद्दीर्घकोषिकायांस्त्री देवसेना तु वज्रिणः॥ ८४॥ स्कन्दस्यापि सेनायां देवतानां च योषिति॥ नागार्जुने भस्कंदर्या नागयष्टौ च योषिति॥ ८५॥ भवेन्निधुवनं कंपे सुरते च नपुंसकम्॥ निर्वासनं हिंसने स्यान्नगराद्देर्बहिष्कृतम्॥ ८६॥ निर्भर्त्सनं खलीकारे अलक्तकेपि नपुंसकम्॥ निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि च॥ ८७॥ निशामनं दर्शने स्यादालोचने च न द्वयोः॥ निशमनमुक्तं दृष्टौ श्रुतौ निरसनं वधे प्रतिक्षेपे॥ ८८॥ निष्ठीवने प्रजननं योनौ जन्मन्यपि क्लीवम्॥ प्रहसनमपि भंगे स्यात्क्षेपे पंचाननः शिवे सिंहे॥ ८९॥ प्रहसनमपि महासे रूपकभेदे च परिहासे॥ प्रणिधानं प्रयत्ने स्यात्समाधौ च प्रवेशने॥ ९०॥ प्रयोजनं कार्यहेत्वोः पलाशी वृक्षरक्षसोः॥ अथ प्रवचनं देवे प्रकृष्टवचनेऽपि च॥ ९१॥ प्रतिपन्नोऽन्यलिंगः स्याद्विज्ञाते ङ्गीकृते च॥ प्रस्फोटनं तु शूर्पे स्यात्ताडने च विकाशने॥ ९२॥ प्रतिमानं प्रतिच्छायागजकुंभांतरालयोः॥ प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च॥ ९३॥ प्रत्यर्थी वाच्यलिंगः स्याच्छत्रौ च प्रतिपादिनि॥ परिज्वा तु पुमानिंदौ याज्ञिके परिचारिके॥ ९४॥ प्रसाधनी तु कंकत्यां सिद्धौ वेशे प्रसाधनम्॥ पयस्विनी नदी धेन्वोर्विभावर्यां च योषिति॥ ९५॥ अथ पुण्यजनो यक्षे राक्षसे सज्जनेपि च॥ पृथग्जनस्तु पुल्लिंगः कथितो नीचमूर्खयोः॥ ९६॥ फलकी मत्स्यभेदे नाबाच्यवत्फलकान्विते॥ बार्की शत्रुचिवाश्वपर्णीजीवपयोधिषु॥ ९७॥ भूतात्मा पुंसि निर्दिष्टो देवे च परमेष्ठिनि॥ महाधनं महामूल्ये सुवर्णे सिल्हकेपि च॥ ९८॥ महासेनः कार्तिकेये महासैन्यपतावपि॥ मदयित्नुर्मद्यु ते पुमान्मद्ये नपुंसकम्॥ ९९॥ महासुनिरगस्त्ये ना कुस्तुंबुरुणि न द्वयोः॥ मातुलानी कलाले स्यादुंगायां मातुलस्त्रियाम्॥ ३००॥ मालुधानो मातुलाहौ सालुधानी लतांतरे॥ मेधावी ना शुके आर्ष्यां स्त्रियां मेधान्विते त्रिषु॥ १॥ रसायनं विषेपि स्याज्जराव्याधिजिदौषधौ॥ पुल्लिंगः पक्षिराजे च विडंगाख्यौषधेपि च॥ २॥ राजादनं क्षीरिकायां

प्रियाले किंशुकेपि च॥ ललामस्यात्प्रभावे च लांछन ध्वज वाजिषु॥
३॥ शृंगे प्रधाने भूषायामपि वालधि पुंड्रयोः॥ लांगली नालिकेरेंद्रो
रेवतीरमणे पुमान्॥ ४॥ वनश्वा गंधमार्जारे वंचक व्याघ्रयोः पुमा
न्॥ वर्धमानः पुंभेदे शरावैरंडविष्णुषु॥ ५॥ विस्मापनः स्या
त्कुहके गंधर्वनगरे स्मरे॥ विसर्जनं परित्यागे दाने संप्रेषणेपि च
॥ ६॥ विरोचनः प्रल्हादस्य तनये ऽर्के ऽग्निचंद्रयोः॥ विहेठणं तु हिं
सायां मर्दने च विडंबने॥ ७॥ भवेद्विहवनं विघ्नहिंसयोस्तूलपिंज
ने॥ विषयी विषयासक्ते वाच्यवत्क्लीबमिंद्रिये॥ ८॥ पुंसि स्यान्नृप
तौ कामदेवे वैषयिकेपि च॥ विष्वक्सेना फलिंग्यां स्याद्विष्वक्सेनो
जनार्दने॥ ९॥ विलेपनी सुवेषस्त्रीयवाग्वोरपि योषिति॥ विला
सी भोगिनि व्याले विष्वक्सेनेऽग्निचंद्रयोः॥ १०॥ वृक्षादनश्चलदले
मधुछत्रकुठारयोः॥ वृक्षादनी तु वंदाक्यां विदारीकंदकेपि च॥ ११॥
वैरोचनिस्तु सुगते बलिदैत्यार्कपुत्रयोः॥ शिखरी स्यादपा
मार्गे शैलपादपयोः पुमान्॥ १२॥ शिखंडिनी यूथिकायां गुंजाया
मपि योषिति॥ शिखंडी ना कलापे स्याद्भ्रांगे यारिमयूरयोः॥ १३॥
शृंगारी पूगगजयोः सशृंगारस्त्रु वेशयोः॥ अथ श्लेष्मघ्ना मल्लि
केतक्यामपि योषिति॥ १४॥ संमूर्च्छनमभिव्याप्तावुच्छ्राय मोहयो
रपि॥ समुत्थानं समुद्योगे व्याधीनां निर्णयेपि च॥ १५॥ सदादा
नोऽभ्रमातंगे हेरंबे गंधहस्तिनि॥ स्यात्संवदनमालोचे वशीका
रे नपुंसकम्॥ १६॥ समादानं समीचीनग्रहणे सौगताह्निके॥
संवाहनं वाहने स्याद्भारादेरंगमर्दने॥ १७॥ समापनं परिच्छे
दे समाप्तिवधयोरपि॥ सनातनः शाश्वतेऽजेपितृतिथ्यंतरेऽ
हरे॥ १८॥ स्तनयित्नुः पुमान्वारिधरेपि स्तनितेपि च॥ सरोजि
नी तु कमलाकरे पद्मे च योषिति॥ १९॥ समापन्नं समाप्ते स्यात्प्रा
प्ते क्लिष्टे वधेपि च॥ संबाधनं द्वाःसदने शूलाग्रद्वारपालयोः॥ २०
॥ संयमनी यमपुर्यां संयमने बंधने व्रतेऽपि स्यात्॥ सारसन

मथुरस्त्वेतनुश्रीणां मेखलायांच ॥ २१ ॥ सामिधेनी तु धाय्यायां समि
ध्यपि च योषिति ॥ समयोनिस्तु सामोत्थे ब्रह्मकुंजरयोरपि ॥ २२ ॥ सु
दर्शनो हरेश्चक्रे मेरुजंबुद्रुमे पुमान् ॥ नद्वयोः शक्रनगरे आज्ञौषधि-
भिदोः स्त्रियाम् ॥ २३ ॥ सुयामुनो वत्सराजे प्रासादे प्यांतरे च्युते ॥
सुकर्मा तु पुमान् योगभेदे स्याद्देवशिल्पिनि ॥ २४ ॥ सुधन्वा प्रोद
धानुष्के त्रिषु ना विश्वकर्मणि ॥ सुपर्वा ना शरे वंशे पर्वधूमस्करे
पि च ॥ २५ ॥ सुदामा तु पुमान्वारिधरपर्वतभेदयोः ॥ सौदाम-
न्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम् ॥ २६ ॥ हर्षयित्नुः पुमान्पुत्रे-
कांचने तु नपुंसकम् ॥ ॥ न पंच ॥ ॥ अथातिस
र्जनं दाने वधेपि च नपुंसकम् ॥ २७ ॥ अपवर्जनं तु दाने निर्वाणत्या
गयोरपि ॥ अपसर्जनमाम्नातं परिवर्जनदानयोः ॥ २८ ॥ अग्रज
न्मा द्विजज्येष्ठभ्रातरि ब्राह्मणि स्मृतः ॥ अथानुवासनं स्नेहवस्ति
धूपनयोरपि ॥ २९ ॥ अभिनिष्ठानो प्यक्षरमात्रे पि स्याद्विसर्जनी
येच ॥ अंतेवासी शिष्ये स्याच्चांडाले प्रांगणे चापि ॥ ३० ॥ स्यादुपस्प-
र्शनं स्पर्शे स्नानाचमनयोरपि ॥ उपसंपन्नमुद्दिष्टं निहते च सुसं
स्कृते ॥ ३१ ॥ कारंधमी कांस्यकारे धातुवादरते पि च ॥ कामचारी
कामुके स्यात्स्वच्छंदकलविंकयोः ॥ ३२ ॥ किष्कुपर्वा पुमानिक्षौ वे
णौ पोरगले पि च ॥ कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुंतुदे ॥ ३३
॥ स्याद्गंधमादनो भृंगे गंधके वानरांतरे ॥ स्त्री सुरायां नगे नस्त्री
चिरजीवी द्विकाजयोः ॥ ३४ ॥ तिक्तपर्वा हिलमोचीगुडूचीयष्टिषु
स्त्रियाम् ॥ दंतधावनः खदिरे दंतशुद्धौ नपुंसकम् ॥ ३५ ॥ स्याद्धू
मकेतनः पुंसि केतुग्रहहुताशयोः ॥ स्यान्नंदिवर्धनो गर्भे पक्षां
ते तनये पि च ॥ ३६ ॥ प्रतिपादनं तु दाने प्रतिपत्तौ च बोधने ॥
स्यात्पृष्टहायनो धान्यविशेषे च मतंगजे ॥ ३७ ॥ प्रचलाकी म
यूरे स्याद्भुजंगे चापि दृश्यते ॥ स्यात्पद्मलांछनो लोकेश्वरे ब्रह्म
णि भास्करे ॥ ३८ ॥ धनदे च स्त्रियां तारा लक्ष्मी वाग्देवतासु च ॥

पीतचंदनमुद्दिष्टं कालीयकहरिद्रयोः॥३९॥ पृष्ठशृंगी पुमान् दंशभीमोशंदेत्कोदरे॥ वरचंदनमाख्यातं कालीये देवदारुणि ॥४०॥ वरवर्णिनी तुलाक्षाहरिद्रारोचनास्वच॥ फलिन्यामुत्तमा नारी साधी यस्यामतिस्त्रियाम्॥४१॥ मधुसूदनस्तु पुंसि भ्रमरे वनमालिनि॥ महारजनमुद्दिष्टं शातकुंभकुसुंभयोः॥४२॥ स्यान्मृत्युवंचनः शंभौश्रीफलद्रोणकाकयोः॥ वनमाली तु गोविंदे वाराह्यां वनमालिनी॥४३॥ विषयायी पुमान् राज्ञि वैषयिकजनेपि च॥ इंद्रिये कामदेवे च विषयासक्तपूरुषे॥४४॥ विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः॥ विघ्नकारी स्मृतो घोरदर्शनेपि विघातिनि॥४५॥ वृषपर्वा पुमान्दैत्यभेदे प्यंधकसूदने॥ व्योमचारी तु निर्दिष्टो देवतायां विहंगमे॥४६॥ शकुलादनी स्त्रियां कृष्णाभेदी कटुकशाकयोः॥ शालंकायन उद्दिष्टो मुनिभेदे च नंदिनि॥४७॥ शिवकीर्तनस्तु पुंसि भृंगरीटे स्वरद्विषि॥ श्वेतवाहन इत्येष सुधाधाम्नि धनंजये॥४८॥ श्वेतधामा पुमानिंदौ घनसाराब्धिफेनयोः॥ स्यात्षष्टिहायनो धान्यविशेषे कुंजरे पुमान्॥४९॥ सप्रयोगी कलाकेलौ कामुके सप्रयोजने॥ हरिचंदनमस्त्री स्यात्त्रिदशानां महीरुहे॥५०॥ नपुंसकं तु गोशीर्षे ज्योत्स्नाकुंकुमयोरपि॥ हरिवाहनस्तु पुंसि शचीपतिविवस्वतोः॥५१॥ ॥नषट्॥ ॥अंतावसायी श्वपचे मुनिभेदे च नापिते॥ कलानुनादी रोलंबे कलविंके कपिंजले॥५२॥ जायानुजीवी पुंसि स्यान्नटे च बकपक्षिणि॥ सहस्रवेधिक्ली बंस्याद्रामठे नाम्लवेतसे॥५३॥ ॥ इति नांतवर्गः॥ ॥पैकम्॥ ॥पो ना वातांडपूले षु पापात रिच कीर्तितः॥ स्त्रियां तु रक्षणे पाने पूते पूरितके च सः ॥१॥ ॥पद्विः॥ ॥कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने॥ कपिर्ना सिल्हके शाखामृगे च मधुसूदने॥२॥ कूपः

कूपकमृन्माने गर्तोगुणवृक्षके॥ कृपो द्रोणं शालके स्याद्द्रोणप
त्न्यां कृपीस्मृता॥३॥ क्षपा दयायां क्षेपस्तु निंदाविक्षेपलेपने॥ गर्व
प्रेरणयोश्चाथ रवषः क्रोधे बलात्कृतौ॥४॥ गोपो गोपालके गोष्ठा
ध्यक्षे पृथ्वीपतावपि॥ ग्रामस्याधिकृते पुंसि शारिवाख्यौषधौ स्त्रि
याम्॥५॥ छुपः क्षुपस्पर्शनयोस्त्रपुसीसकरंगयोः॥ तल्पमट्टे क
लत्रे च शयनीये च नद्वयोः॥६॥ त्रपा लज्जाकुलटयोस्तापः संता
पकृच्छ्रयोः॥ तापी नद्यंतरे दर्पः कस्तूर्यामप्यहंकृतौ॥७॥ नीपः
कदंबबंधूकनीलाशोकद्रुमेषु च॥ दीपः प्रदीपोत्तरयेस्याल्लता
यां च मस्तके॥८॥ पुष्पं विकाशिकुसुमस्त्रीरजःसु नपुंसकम्॥ रू
पं स्वभावसौंदर्यनालोकपशुशब्दयोः॥९॥ ग्रंथावृत्तौ नाटकादावा
कार श्लोकयोरपि॥ रेपः स्यान्निंदिते क्रूरे रोपो रोपणबाणयोः॥
१०॥ लेपः प्रलेपने जग्धौ वपा विवरमेदसोः॥ बाष्पमुष्मण्यलो
हेथ शष्पं बालतृणे स्मृतम्॥११॥ पुंसि स्यात्प्रतिमाहानौ शापआ
क्रोशदिव्ययोः॥ शिल्पं स्रुवे क्रियायोग्ये स्वापः शयननिद्रयोः॥
१२॥ स्पर्शाज्ञतायामज्ञाने सूपो व्यंजनसूदयोः॥ ॥पत्रि॥
अनूपो महिषेनांबुप्रायदेशे तु वाच्यवत्॥१३॥ अरुपा तु जलौ
कायां डाकिन्यां राक्षसे तु ना॥ आवापो भांडवपने परिक्षेपाल
बालयोः॥१४॥ आक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृतः॥ आ
कल्पः कल्पने वेशे प्युडुपं तु प्लवे स्त्रियाम्॥१५॥ चंद्रे पुंस्युलपो
न स्त्री गुल्मिन्यां नातृणांतरे॥ कच्छपी वल्लकीभेदे दुलो क्षुद्रग-
दांतरे॥१६॥ पुंसि निध्यंतरे कूर्मे मल्लबंधांतरेपि च॥ कलापः स
हतौ बर्हे कांच्यां भूषणतूणयोः॥ चंद्रे विदग्धे व्याकरणभे
देपि कथ्यते बुधैः॥१७॥ कशिपुर्भक्ताच्छादनयोरकोक्त्या पृथक्क
योः पुंसि॥ काश्यप उक्तो मुनिमृगयोर्भेदे च काश्यपी क्ष्मायाम्
॥१८॥ कुतपो स्त्रियां दौहित्रे वाद्ये च्छागलकंबले॥ कुशो दिनस्या
ष्टमें शे ना सूर्ये कुणपी पुनः॥१९॥ विट्सारिकायां कुणपः पूति

गंधोथावेपिच॥जिह्वापःश्वनिमार्जारे प्रतापस्तापतेजसोः॥२०॥
पादपःपादपीठद्रौपादुकायांतु पादपा॥रक्तपास्याज्जलौकायां
डाकिन्यांनातुराक्षसे॥२१॥विटपो नस्त्रियांस्तंबशाखाविस्तारप
ल्लवे॥विटाधिपेनाविकल्पःपुंसिभ्रांतौचकल्पने॥२२॥ ॥
पचतुः॥ ॥अभिरूपोबुधेरम्येऽपलापःप्रेम्णपन्हवे॥
अवलेपस्तुगर्वेस्याल्लेपनेभूषणेपिच॥२३॥उपतापस्त्वरायांस्या
दुत्तापगदयोरपि॥जलकूपीकूपगर्तेपुष्करिण्यांचयोषिति॥२४॥
नागपुष्पस्तुपुन्नागनागकेसरपंचके॥परिवापस्तुपर्युप्तौज
लस्थानेपरिच्छदे॥२५॥परितापस्तुपुंसिस्याद्दुःखेचनरकांतरे॥
परिकल्पोभयेकंपेप्राप्तरूपोज्ञरम्ययोः॥२६॥पिंडपुष्पमशोके
चजपायांचकुशेशये॥बहुरूपःशिवेविष्णौधूनकेसरठेस्मरे॥
२७॥मेघपुष्पंतुपिंडाभ्रांबुनादेयेहरेर्हये॥विप्रलापोविरोधो
क्तावपार्थवचनेपिच॥२८॥बीजपुष्पंमरुवकेतथामदनकेपि
च॥वृकधूपस्तुसरलद्रवकृत्रिमधूपयोः॥२९॥वृषाकपिःपु
मान्कृष्णेशंकरेजातवेदसि॥हेमपुष्पमशोकेचजपापुष्पेनपुंस
कम्॥३०॥ ॥षपंच॥ ॥भवेच्चामरपुष्पंतुपू
गेकाशाम्रकेतके॥३१॥ ॥इतिपांतवर्गः॥ ॥
१३०२॥ ॥फैकम्॥ ॥फोयक्षसाधनेस्फानेझंझा
वातेपिपुंस्ययम्॥फं रुक्षोक्तौ फूत्कृतौचतथानिःफलभाषणे॥
१॥ ॥फद्विः॥ ॥गुंफस्तुगुंफनेबाहोरलंकारेचकी
र्त्यते॥रेफोरवर्णेपुंसिस्यात्कुत्सितेपुनरन्यवत्॥२॥शफंमूले
तरूणांस्याद्गवादीनांखुरेपिच॥शिफाजटायांसरितिमांसिका
यांचमातरि॥३॥ ॥इतिफांतवर्गः॥ ॥१३०५
॥ ॥बैकम्॥ ॥बःपुमान्वरुणेसिंधौभागेतोयेगतेतु
वा॥गंधनेतंतुसंतानेपुंस्येववपनेस्मृतः॥१॥ ॥बद्विः
॥ ॥कंबुःशंखेस्त्रियांपुंसिशंबूकेवलयेगजे॥कंबिरंशेच

वंशस्यखजाकायांस्त्रियामपि॥ २॥ क्लीबंस्यात्संडकेनस्त्रीयाच्यलिंगस्त्वविक्रमे॥ खर्बसंख्यांतरेक्लीबंनीचेवामनकेत्रिषु॥ ३॥ गर्वोऽभिमानेवलेपेजंबुःस्यात्पादपांतरे॥ तथाकमेरुसरितिद्वीपभेदेपिचस्त्रियाम्॥ ४॥ डिंबोभयध्वनावंडेफुप्फुसप्लीहयेपुवे॥ दर्वीस्त्रियांखजाकायांफणायामुरगस्यच॥ ५॥ पूर्बंतुपूर्वजेपिस्यात्पूर्वःप्रागाद्ययोस्त्रिषु॥ लंबापद्मालयागौर्योस्तिक्तुंब्यामपिस्त्रियाम्॥ ६॥ बिंबंतुप्रतिबिंबेपिमंडलेपुंनपुंसकम्॥ बिंबिकायाःफलेक्लीबंकृकलासेपुनःपुमान्॥ ७॥ शंबःस्यान्मुसलग्रंथलोहमंडलपेकवो॥ क्रमान्वितेत्रिषुस्तंबोप्रकांडद्रुमगुच्छयोः॥ ८॥ ॥ बत्रिः॥ ॥ कदंबंनिकुरंबेस्यान्नीपसिद्धार्थयोःपुमान्॥ कलंबीशाकभेदेस्यात्कडंबशरयोःपुमान्॥ ९॥ कादंबःस्यात्पुमान्पक्षिविशेषेसायकेपिच॥ गजाह्वाकरिपिप्पल्यांगजाह्वंहस्तिनापुरे॥ १०॥ गंधर्बःपशुभेदेस्यात्पुंस्कोकिलतुरंगयोः॥ अंतराभवसत्वेचगायनेखेचरेपिच॥ ११॥ गोडुंबःशीर्णवृंतेचगवादन्यांतुयोषिति॥ द्विजिह्वस्तरवलेसर्पेनितंबःस्कंधरोधसोः॥ १२॥ स्त्रियाःपश्चात्कटितटेकटकेकटिमात्रके॥ प्रलंबोदैत्यभेदेस्याच्चपुषेपिपयोधरे॥ १३॥ तालांकुरेपिशालायांहारभेदेप्रलंबने॥ भूजंबूरपिगोधूमेविकंकतफलेस्त्रियाम्॥ १४॥ हेरंबोविघ्नराजेभ्योमहिषेशौर्यगर्विते॥ ॥ बचतुः॥ ॥ राजजंबूस्तुजंबूभित्पिंडखर्जूरयोस्त्रियाम्॥ १५॥ ललजिह्वोऽन्यवह्निस्त्रेक्रमेलकशुनोःपुमान्॥ शतपर्वाचदूर्वायांवचाभार्गवयोषितोः॥ १६॥ ॥ बपंच॥ ॥ धूलीकदंबोनीपेस्यात्तिनिशेवरुणद्रुमे॥ शृंगालजंबूर्गोडिंवेतथाघोटाफलेस्त्रियाम्॥ १७॥ ॥ इतिबांतवर्गः॥ ॥ १३२२॥ ॥ भैकम्॥ ॥ भंनक्षत्रेगभस्तौस्त्रीपुंसिस्याद्भृगुनंदने॥ भूःस्थानमात्रेकथिताधरण्यामपियोषिति॥ १॥

भद्विः॥ ॥कुंभो राश्यंतरे हस्तिमूर्द्धांशे राक्षसांतरे॥ कार्मुके वा
रनार्यां च घटे क्लीबं तु गुग्गुलौ॥२॥ स्त्रियां मुखाकद्रूलयोः पृश्निका
यां च पाटलौ॥ गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकंटके॥३॥ जंभो
दैत्यविशेषे दंते जंबीरभक्षणयोः॥ जृंभा विकाशजृंभणयोः स्त्रीषु
डिंभो पि बालिशे बाले॥४॥ दंभस्तु कैतवे कल्के दृग्भूः स्त्री सर्पवज्र
योः॥ नाभिर्मुख्यनृपे चक्रे मध्यक्षत्रिययोः पुमान्॥५॥ द्वयोः प्राणि
प्रतीके स्यात्स्त्रियां कस्तूरिकामदे॥ निभस्तु कथितो व्याजे पुल्लिंगः
सदृशे त्रिषु॥६॥ रंभा कदल्यप्सरसोर्ना वेणौ वारणांतरे॥ विभुः
प्रभौ सर्वगते शंकरब्रह्मणोस्तु ना॥७॥ शंभुः पुंसि महादेवे परमे
ष्ठिनि चार्हति॥ शुभो योगे शुभं क्षेमे वाच्यवत्क्षेमशालिनि॥८॥
खसंचारिपुरे स्त्री तु शोभा कांतीच्छयोर्मता॥ सभा सामाजिके गो
ष्ठ्यां द्यूतमंदिरयोरपि॥९॥ स्वभूर्ना ब्रह्मणि हरौ स्तंभः स्थूणाज
डत्वयोः॥ ॥भत्रिः॥ ॥आरंभस्तु त्वरायां स्यादुद्यमे
वधदर्पयोः॥१०॥ आत्मभूर्ना विधौ कामे ऋषभस्त्वौषधांतरे॥
स्वरभिद्वृषयोः कर्णरंध्रकुंभीरपुच्छयोः॥११॥ उत्तरस्थः स्मृतः
श्रेष्ठ स्त्री नराकारयोषिति॥ शूकशिंब्यां शिरालायां विधवायां क्व
चिन्मता॥१२॥ ककुप् स्त्रियां प्रवेणीदिक्शोभासु पंकजस्रजि
॥ ककुभो रागभेदेपि वीणांगेऽर्जुनपादपे॥१३॥ कटभी वृक्षभे
देपि ज्योतिष्मत्यामपि स्त्रियाम्॥ करभो मणिबंधादि कनिष्ठांतो
ष्ट्र तत्सुते॥१४॥ कुसुंभं हेम्नि महारजके ना कमंडलौ॥ गर्दभं श्वे
तकुमुदे गर्दभो गंधभिद्यपि॥१५॥ रासभे गर्दभी क्षुद्रजंतुरो
गविशेषयोः॥ दुर्लभस्त्रिषु दुष्प्रापे कच्छूरे दुंदुभिः पुमान्॥१६
॥ वरुणे दैत्यभेदेऽथोऽक्षबिंदुत्रिकद्वये॥ निकुंभः कुंभकर्ण-
स्य तनये दंतिकौषधौ॥१७॥ वल्लभो दयितेऽध्यक्षे सल्लक्षणतु
रंगमे॥ वर्षाभूः स्त्री च शोथघ्नी भूलताप्लवयोः पुमान्॥१८॥ वि
ष्कंभो योगभेदे स्याद्विस्तारप्रतिबिंबयोः॥ रूपकांगप्रभेदे च वं

धभेदेच योगिनाम् ॥ १९ ॥ विश्रंभः केलिकलहे विश्वासे प्रणयेऽपि च ॥ विष्टंभः प्रतिबंधे स्यात्प्रभेदे चामयस्य च ॥ २० ॥ वृषभः श्रेष्ठवृषयो र्वैदर्भीरीतिभिद्यपि ॥ वैदर्भे वाक्यवैकल्ये शरभस्तु पशोर्भिदि ॥ २१ ॥ करभे वानरभिदि सनाभि ज्ञातितुल्ययोः ॥ सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति ॥ २२ ॥ चंपके च वसंते च तथा जातीफले पुमान् ॥ स्वर्णे गंधोत्पले क्ली बं स्कगंधि काल योस्त्रिषु ॥ २३ ॥ चिरख्याते सचिवे धीरे वैत्रेपि च पुमानयम् ॥ ॥ भचतुः ॥ ॥ अनुष्टुप् स्यात्सरस्वत्यां छंदोभेदे च योषिति ॥ २४ ॥ अवष्टंभः सुवर्णे च स्तंभ प्रारंभयोरपि ॥ शातकुंभं सुवर्णे स्यात् शातकुंभोऽश्वमारके ॥ २५ ॥ ॥ इति भांतवर्गः ॥ ॥ मैकम् ॥ ॥ मो मये समयेपि स्याद्विषे च मधुसूदने ॥ मा स्त्री पद्मालयायां स्यात्पुल्लिंगश्चंद्रशेखरे ॥ १ ॥ ॥ मद्वि ॥ ॥ आमो रुक्तद्विदोः पुंसि स्यादपक्केऽन्यलिंगकः ॥ उमा तसी हैमवती हरिद्राकीर्ति कांतिषु ॥ २ ॥ ऊर्मिः स्त्री पुंसयो र्वीच्यां प्रकाशे वेगभंगयोः ॥ वस्त्रसंकोचरेखायां वेदनापीडयोरपि ॥ ३ ॥ क्रमश्चानुक्रमे शक्तौ कंपे चाक्रमणेपि च ॥ क्ष्मो भूमौ तिति क्षायां स्त्रियां युक्ते नपुंसकम् ॥ ४ ॥ वाच्य वच्छक्त हितयोः कामः स्मरेच्छयोः पुमान् ॥ रेतस्यपि निकामे च काम्येपि स्यान्नपुंसकम् ॥ ५ ॥ कामिनी कामुके रत्यां स्त्री किंक्षेप वितर्कयोः ॥ निंदायां च परिप्रश्ने वाच्यलिंगमुदाहृतम् ॥ ६ ॥ क्रिमिर्ना कृमिवल्कीटे लाक्षायां कृमिलेश्वरे ॥ किर्मी पलाशे शारवायां हेमपुत्र्यां च योषिति ॥ ७ ॥ क्षुमाऽतसीनिलिकयोः क्षेमो स्त्री लुब्धरक्षणे ॥ चंडायां नाशभेन-स्त्री कात्यायन्यां तु योषिति ॥ ८ ॥ क्षौम मट्टे दुकूले ऽस्त्री क्षौमं वल्कलजांशुके ॥ शशजेऽतसिजे स्वर्मे पौरुषे कोषजांशुके ॥ ९ ॥ गमो नाऽक्षविवर्ते स्यादपर्यालोचनेऽध्वनि ॥ ग्रामः स्वरे संवसथे ग्रीष्मऽऽप्यतुभेदयोः ॥ १० ॥ गुल्मः सेनाघट्टभिदोः सैन्यरक्षण

रुग्भिदोः॥ स्तंबेस्त्रियामामलक्यांमेलवल्लीघस्त्रवेशयोः॥११॥ घर्मः स्यादातपेग्रीष्मेप्युष्णास्वेदांबुनोरपि॥ चमूःसेनाविशेषेचसेनामात्रेचयोषिति॥१२॥ जाल्मःस्यात्पामरेक्रूरेपुंस्यसमीक्ष्यकारिणि॥ जिह्मस्त्रकुटिलेमंदेक्लीबंतगरपादपे॥१३॥ तोक्मं कर्णमलेपुंसिहरितेप्चहयेस्वरे॥ दमस्त्रदमथेदंडेकर्दमेदमनेपुमान्॥१४॥ दस्मस्त्रयजमानेस्याद्पिचौरेहुताशने॥ द्रुमो महीरुहेपारिजातेकिंपुरुषेश्वरे॥१५॥ धर्मो स्त्रीपुण्यआचारेस्वभावोपमयोः क्रतौ॥ अहिंसोपनिषन्यायेनाधनुर्यमसोमपे॥१६॥ ध्यामं दमनकेगंधाभिणेथश्यामलेत्रिषु॥ नेमिर्नातिनिशेकूपत्रिकाचक्रांतयोःस्त्रियां॥१७॥ नेमः कालेवधौखंडेप्राकारेकैतवेपिच॥ पद्मो स्त्रीपद्मकेव्यूहनिधिसंख्यांतरेंबुजे॥१८॥ नानागेस्त्रीफंजिकाश्रीचारटीपन्नगेषुच॥ ब्रह्मीतुफंजिकायांस्याच्छाकमत्स्यप्रभेदयोः॥१९॥ ब्राह्मीतुभारती सोमवल्लरीब्रह्मशक्तिषु॥ भ्रमो बुनिर्गमेभ्रांतौकुंदभ्रमणयोरपि॥२०॥ भामः क्रोधेरवौदीप्तौभीष्मो गांगेयभीमयोः॥ भीमो म्लवेतसेरवोरेशंभौमध्यमपांडवे॥२१॥ भूमिर्वसुंधरायांस्यात्स्थानमात्रेपिचस्त्रियाम्॥ भौमः कुजेचनरकेपुंसिभूमिभवेत्रिषु॥२२॥ यमो श्यालिंगोयमजेनाकाकेशमनेशनौ॥ शरीरसाधनापेक्षनित्यकर्मणिसंयमे॥२३॥ यामस्त्रपुंसिप्रहरेसंयमेपिप्रकीर्तितः॥ यामिः कुलस्त्रीस्वस्रोस्त्रीयुग्माधनुषिसंयुगे॥२४॥ रश्मिः पुमान्दीधितौच पक्ष्मप्रग्रहयोरपि॥ रमा लक्ष्म्यांरमःकांतेरक्ताशोकद्रुमेश्वरे॥२५॥ रामा योषाहिंगुनद्योःक्लीबंवास्त्रकुष्ठयोः॥ नाराधवेचवरुणेरेणुकेयेहलायुधे॥२६॥ हयेचपशुभेदेचत्रिषुचारौसितेऽसिते॥ रुमा स्त्रग्रीवदारेषुविशिष्टलवणाकरे॥२७॥ रुक्मंचकांचनेलोहे लक्ष्मीःसंपत्तिशोभयोः॥ ऋद्ध्योषधेचवयायांवृद्धिनायोषधेपिच॥२८॥ स्त्रीफलिन्यांवमिर्वांतौस्त्रियांपुंसिहुताशने॥ वामंधनेहरेपुंसिकामदेवेपयोधरे॥२९॥ वल्गुमतीपसव्ये

भिक्षुनार्यां स्त्रियामथ॥ वामी शृगाली वडवा रासभी करभीषु च ॥३०॥ शमी सक्तुफलायां च शिम्बिकायां च वागुजौ ॥ श्यामो वटे प्रयागस्य वारिदे वृद्धदारके॥३१॥ पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु॥ मरिचे सिंधुलवणे क्लीबं स्त्री शारिवौषधौ ॥३२॥ अप्रसूताङ्गनायां च प्रियंगावपि वागुजौ॥ यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ॥३३॥ नीलिकायामथ श्रामो मासे मंडपकालयोः॥ सुषमं तेजसि सूर्ये ना समा संवत्सरे स्त्रियाम् ॥३४॥ सर्वसाधुसमानेषु समं स्यादभिधेयवत्॥ सीमा घाटस्थिते क्षेत्रे खंडकोषेऽपि च स्त्रियाम्॥ ३५॥ सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके॥ सूक्ष्मं क्षीरे च नभसि सोमस्तु हिमदीधितौ॥३६॥ वानरे च कुबेरे च पितृदेवे समीरणे॥ वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ॥ ३७॥ हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम्॥ शीतले वाच्यलिंगोऽथ होमिर्नापावके घृते॥३८॥

॥ मत्रिः॥ ॥

अधमः स्यान्न्यूर्ध्वहीने ह्यागमः शास्त्र आगमे॥ आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे॥३९॥ अस्त्रियामुत्तमा दुग्धिकायां त्रिषु च भद्रके॥ उद्दामो बंधरहिते स्वतंत्रे च प्रचेतसि॥ ४०॥ कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च॥ कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः॥४१॥ कृत्रिमं लवणाभेदे ना सिल्हके रचिते त्रिषु॥ गोलोमी श्वेतदूर्वायां स्याद्वचाभूतकेशयोः॥४२॥ गोधूमो नागरंगे स्यादोषधिव्रीहिभेदयोः॥ गौतमो नासुनौ बुद्धे रोचना दुर्गयोः स्त्रियाम्॥४३॥ तलिमं कुट्टिमे तल्पे चंद्रहासे वितानके॥ दाडिमस्तु त्रिलिंगः स्यादेलायां करके त्रिषु॥४४॥ निष्क्रमो बुद्धिसंपत्तौ निर्गमो दुष्कुलेऽपि च॥ निगमो वणिजे पुर्यां कटे वेदे वणिक्पथे ॥४५॥ नियमो मंत्रणायां च प्रतिज्ञानिश्चये व्रते॥ नैगमं स्यादुपनिषद्वणिजौ नागरेऽपि च॥४६॥ परमं स्यादनुज्ञायामव्ययं परमः परे॥ प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्॥४७॥ प्रति

नागजदंतस्य बंधेचानुकूलतावपि॥ पंचमोरागभेदेस्यात्स्वरभेदे
चपंचमी॥ ४८॥ पांडवानांच पत्न्यांस्त्रीपंचानां पूरणेत्रिषु॥ प्रक्रमः
क्रमेवसरे मध्यमोमध्यजेन्यवत्॥ ४९॥ पुमान्स्वरेमध्यदेशेप्यव
लग्नेतुनस्त्रियाम्॥ स्त्रियांदृष्टरजोनार्यांकर्णिकांगुलिभेदयोः॥
५०॥ अक्षरच्छंदसितथाललामंलांछनेध्वजे॥ शृंगेप्रधानेभूषा
यांरम्येवालधिपुंड्रयोः॥ ५१॥ तुरंगेचप्रभावेथव्यायामः पौरुषे
श्रमे॥ विषमेदुर्गसंचारेविश्रमोभ्रांतिहावयोः॥ ५२॥ विद्रुमोर-
त्नवृक्षेपिप्रवालेपिपुमानयम्॥ विलोमस्तुप्रतीपेस्याद्भुजंगेव
रुणेश्वनि॥ ५३॥ आमलक्यांविलोमीचविलोमंचारपट्टने॥ वि
क्रमस्तुपुमान्क्रांतिमात्रेस्याच्छक्तिसंपदि॥ ५४॥ संक्रमः क्रम
णेपुंसिनस्त्रीस्याद्दुर्गसंचरे॥ संभ्रमः साध्वसेपिस्यात्संवेगादर
योरपि॥ ५५॥ सत्तमः स्यात्पूज्यतमेसाधीयस्युत्तमेत्रिषु॥ सर
माकुक्कुरीदेवशून्योःस्याद्राक्षसीभिदि॥ ५६॥ स्तूषमानंतशोभा
यांस्त्रीचारोचमसेत्रिषु॥ स्तूषीमः शीतलेचारोत्रिषुनापन्नगां
तरे॥ ५७॥ ॥ मचतुः॥ ॥ भवेदनुपमा
स्त्रप्रतीकिन्यांस्त्रीत्रिषूत्तमे॥ अभ्यागमोविरोधाभिघाताभ्युद्ग
मनांतिके॥ ५८॥ उपक्रमस्तूपधायांज्ञात्वारंभविचक्रमे॥ चि-
कित्सायामुपगमः स्वीकारेनिकसर्पणे॥ ५९॥ जलगुल्मोजला
वर्त्तेकच्छपेजलचत्वरे॥ दंडायामस्तुकीनाशेदिवसेकुंभसंभ-
वे॥ ६०॥ प्लवंगमस्तुमंडूकेतथाशाखामृगेपिच॥ पराक्रमोवि
क्रमेस्यात्सामर्थ्योद्योगयोरपि॥ ६१॥ महापद्मः पुमान्नागनिधि
संख्यांतरेषुच॥ यातयामोन्यवज्जीर्णपरिभुक्तोज्झितेषुच॥
६२॥ सार्वभौमस्तुदिङ्नागेसर्वपृथ्वीपतावपि॥ ॥ म
पंच॥ ॥ अभ्युपगमस्तुपुंसिस्वीकारेंतिकसमागमे
च॥ ६३॥ नक्षत्रनेमिरुक्तारेवत्यांनाध्रुवेचंद्रे॥ ॥
इतिमांतवर्गः॥ ॥ यैकम्॥ ॥ योनावायो

यमनेथ्या यात्रापि धूमितत्यागेषु॥ वारणयोगसमज्ञायानेषु पुमां स्कगंतरिख्यातः॥१॥ज्या मातरि वस्कधायां मौर्व्यां घु क्लीबमन्हिगमनेच॥ नाज्वालने द्योस्त्रि दशालयन्त्रि दशवर्त्मनो र्योषिति॥२॥ अर्थ्यं शिलाजतुन्यर्थ्यो बुधेन्याय्येच वाच्यवत्॥ अंत्यस्कपुंसिसुस्तायामंतोद्भूते ऽधमेत्रिषु॥३॥ अर्घ्यमर्घस्य योग्येस्यादर्घार्थेपिचवाच्यवत्॥ अन्योसदृशेतरयोरर्य्यः स्यात्स्वामिवैश्ययोः॥४॥ आस्यं सुरवेचतन्मध्येतद्भवेच स्त्रियांस्थितो॥ इज्या दाने ऽध्वरे ऽर्चायां संगमेस्त्री गुरौत्रिषु॥५॥ इभ्या करेणुशल्लकोः स्त्रियामाद्येच वाच्यवत्॥ कश्यं त्रिषु कशार्हेस्यात्क्लीबं मद्याश्वमध्ययोः॥६॥ कन्या कुमारिकानार्योरोषधीराशिभेदयोः॥ क्षयो रोगांतरे वेश्म कल्पांतापचयेषुच॥७॥ कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते॥ सध्यो नीरोगदक्षेषु कल्याणवचनेपिच॥८॥ उपायवचनेपिस्यात्त्रिषु मद्येतु योषिति॥ कक्ष्या स्तृहतिकायांस्यात्कांच्यां मध्येभबंधने॥९॥ हर्म्यादीनां प्रकोष्ठेच कार्यं हेतौ प्रयोजने॥ काव्यं ग्रंथे पुमान् शुक्रे काव्या स्यात्पूतनाधियोः॥१०॥ कांस्यं वाद्यांतरे पानपात्रे स्यात्तैजसांतरे॥ काय: कदैवते मूर्तौ संघे लक्ष्यस्वभावयोः॥११॥ मनुष्यतीर्थे कार्यं स्यात्क्रिया तूपायचेष्टयोः॥ आरंभे निष्कृतौ पूजा संप्रधारण कर्मसु॥१२॥ शिक्षाचिकित्साकरणे कुड्यं भित्तौ विलेपने॥ कुल्यं स्यात्कीकसे पुष्पद्रोणी शूर्पाभिधेषुच॥१३॥ कुल्या पयः प्रणाल्यां च नद्यां वीजंतिकौषधौ॥ कुलोद्भवे कुलहिते त्रिषु मांस्ये पुनः पुमान्॥१४॥ कृत्या क्रियादेवतयोस्त्रिषु विद्विष्टकार्ययोः॥ गयः स्यात्पश्रुराजर्षौ भेदे तीर्थे पुनर्गया॥१५॥ गव्यं नपुंसकं ज्यायां गगद्रव्ये पयस्त्रियाम्॥ गोसमूहे त्रिलिंगं तु गोदुग्धादौ च गोहिते॥१६॥ ग्राम्यं स्त्रीकरणे क्लीबे ऽश्लील प्राकृतयोस्त्रिषु॥ गुह्यं रहस्युपस्थेच गुह्यः कमठदंभयोः॥१७॥ गृह्यं गुदे ग्रंथभेदे क्लीबं सारवापुरे स्त्रियाम्॥ गृह्यासक्त मृगादौ ना त्रिषु चास्वैरिपक्षयोः॥१८॥ गेयं तु गीते गेयः स्यात्

गातव्यं गायने त्रिषु॥ गोप्यो दासीसुते पुंसि रक्षणीयेभिधेयवत्॥
॥१९॥ चव्यं तु चविके क्लीबं चव्या याममपि योषिति॥ चयः समूहे प्राकारमूलबंधे समाहृतौ॥२०॥ चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम्॥ चैत्यमायतने बुद्धबंधे नोद्देश्यपादपे॥२१॥ चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्॥ छाया स्यादातपाभावे प्रतिबिंबार्कयोषितोः॥२२॥ पालनोत्कोचयोः कांतिसच्छोभापंक्तिषु स्त्रियाम्॥
जया जयंती तिथिभित्पथ्यो मातत्सखीषु च॥२३॥ अग्निमंथे नाजयं नेविजये च युधिष्ठिरे॥ जन्यं ह्रदे परीवादे संग्रामे च नपुंसकम्॥२४॥
जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्॥ त्रिषूत्पाद्यजनिश्रोश्च नवोढाज्ञातिभृत्ययोः॥२५॥ वरस्निग्धेऽथ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु॥ त्रयी त्रिवेद्यां त्रितयेनना तार्क्ष्योऽश्वसर्पयोः॥२६
गरुडाग्रजे स्कवर्णे च पुंसि क्लीबे रसांजने॥ तिष्यो नक्षत्रभेदे स्यात्कलौ धात्र्यां च योषिति॥२७॥ द्रव्यं स्यात्पित्तलेवित्ते पृथ्व्यादौ च विलेपने॥ क्लीबे च भेषजे भव्ये द्रुविकारे च वाच्यवत्॥२८॥ दस्युश्चौरे पुंसि रिपौ दायस्सोल्लुंठभाषणे॥ विभक्तव्यपितृद्रव्ये तथा हरणदानयोः
॥२९॥ दिव्यं लवंगे धात्र्यां स्त्री वल्लोदिविभवे त्रिषु॥ दूष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे॥३०॥ दूत्यं दूतस्वभावे च भावे कर्मण्यपि स्मृतम्॥ दैत्योऽसुरे सुरायां तु दैत्या चंडौषधावपि॥३१॥ धन्या धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु॥ धान्यं व्रीहिषु धन्याके धिष्ण्यं स्थानाग्निसद्मसु॥३२॥ शक्ता वृक्षेप्यथ नयो नीतिद्यूतविशेषयोः॥ नाट्यं तौर्यत्रिके लास्ये नित्यं स्यात्संततेऽपि च॥३३॥ शाश्वते त्रिषु पथ्या स्त्री हरीतक्यां हिते त्रिषु॥ पद्मं श्लोके पुमान् शूद्रे पद्मावर्त्मनि कीर्तिता॥३४॥ पाक्यं विटाख्यलवणे यवक्षारे पुनः पुमान्॥ प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः॥३५॥ प्रियोत्तरोऽन्यवत्पुंसि वृद्धिनामौषधौ धवे॥ पीयुः कालेरवौ घूके ना पुण्यं शोभने त्रिषु॥३६॥ क्लीबं धर्मे च सुकृते पुष्यः कलियुगे स्मृतः॥

नक्षत्रमासयोर्भेदे पूज्यः श्वशुरवंद्ययोः॥३७॥ पेयं पातव्यपयसोः
पेया श्राणाच्छमंडयोः॥ वंध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रज-
स्त्रियाम्॥३८॥ वर्या पतिंवरायां स्त्री वरेण्ये त्रिषु ना स्मरे॥ बल्यं
प्रधाने धातौ स्यात्क्लीबं बलकरे त्रिषु॥३९॥ वीर्यं शुक्रे प्रभावे च ते
जःसामर्थ्ययोरपि॥ भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च॥४०॥
भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु॥ कर्मरंगतरौ पुंसि स्त्रि
यां करिकणामयोः॥४१॥ क्लीबमस्थनि भाग्यं तु स्याच्छुभाशुभक
र्मणोः॥ भृत्यो दासे भृतौ भृत्या मयुर्ना किन्नरे मृगे॥४२॥ मयः शि
ल्पिनि दैत्यानां करभेऽश्वतरेऽपि च॥ मध्यं विलग्ने न स्त्री स्यान्न्या
य्येंऽतरे धमेऽपि च॥४३॥ मत्स्यो मीनेऽथ पुंभूम्नि देशे मन्युः पुमान्क्रु
धि॥ दैन्ये शोके च यज्ञे च माल्यं कुसुमतत्स्रजोः॥४४॥ माया स्या
च्छांबरीबुद्ध्योर्मायः पीतांबरेऽसुरे॥ मूल्यं स्याद्वेतने प्रश्ने मृत्युर्ना
मरणे यमे॥४५॥ मेध्यं त्रिषु शुचौ रक्तवचारोचनयोः स्त्रियाम्॥
ययुः पुमानश्वमेधतुरंगे च तुरंगमे॥४६॥ याप्यस्तु यापनीये
स्यान्निंदितेऽप्यभिधेयवत्॥ याम्याऽपाच्यां भरण्यां च पुंस्यगस्त्ये
च चंदने॥४७॥ योग्यः प्रवीणयोगार्होपायशक्तेषु वाच्यवत्॥ क्ली
बमृद्ध्यौषधौ पुष्पे नास्त्र्यभ्यासार्कयोषितोः॥४८॥ रम्या रात्रौ चंप
के ना मनोज्ञेऽत्वभिधेयवत्॥ नपुंसकं पटोलस्य मूले सूरिभिरिष्य
ते॥४९॥ रथ्या रथौघे विशिखा वर्तनीषु च योषिति॥ रथवोढरि
पुंल्लिंगो रूप्यः स्यात्सुंदरे त्रिषु॥५०॥ आहतस्वर्णरजते रजते
च नपुंसकम्॥ लयो विनाशे संश्लेषे साम्ये तौर्यत्रिकस्य च॥५१॥
लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्॥ लभ्यं युक्ते च लब्ध
व्ये लास्यं तौर्यत्रिके मतम्॥५२॥ नृत्ये च व्रज्या प्रस्थाने वर्गे पर्यट
नेऽपि च॥ वन्यं त्रिषु वनोद्भूते स्त्री वनांबुसमूहयोः॥५३॥ वाच्यं तु
कुत्सिते हीने वचनार्हे च वाच्यवत्॥ विंध्या स्त्रियां लवल्यां स्या
त्पुंसि व्याधाद्रिभेदयोः॥५४॥ वीक्ष्यं तु विस्मये दृश्ये पुंसि लास

कवाजिनोः॥ वश्यं वेश्यागृहे क्लीबं गणिकायां तु योषिति॥५५॥श
ल्यं तु न स्त्रियां शंकौ क्लीबं क्ष्वेडेषु तोमरे॥ मदनद्रुश्वाविधोर्ना श-
यः शय्याहिपाणिषु॥५६॥शय्या स्याच्छयनीये च गुंफनेपि च यो
षिति॥शून्यं स्यान्निर्जने वाच्यलिंगं मल्या तु योषिति॥५७॥शौर्य
मारभटीशक्त्योः सह्यः शैलांतरे पुमान्॥सोढव्ये वाच्यलिंगः स्या
दारोग्ये तु नपुंसकम्॥५८॥संख्यं समितिसंख्यां स्यादेकद्व्यादि
विचारयोः॥संध्या पितृप्रसूनद्यंतरयोर्युगसंधिषु॥५९॥सत्यं
कृते च शपथे तथ्ये त्रिषु तु तद्वति॥सव्यं वामे प्रतीपे च स्मयो ना
द्भुतगर्वयोः॥६०॥सायः कांडे दिनांते च साध्यो योगांतरे स्मरे॥ग
णदेवविशेषे च साधनीये तु वाच्यवत्॥६१॥सूर्योर्कपर्णे तपने-
स्त्री तद्भार्यौषधीभिदोः॥स्थेयो विवादपक्षस्यनिर्णेतरि पुरोहिते
॥६२॥सेव्यं क्लीबमुशीरे स्यात्सेवार्हे पुनरन्यवत्॥सैन्यं क्लीबं बले
सेनासमवेते तु वाच्यवत्॥६३॥सौम्योऽज्ञे नात्रिष्वनुग्रे मनोज्ञे सो
मदैवते॥हार्यो बिभीतकतरौ हर्तव्ये पुनरन्यवत्॥६४॥जरणे
ऽथ त्रिषु हृद्यं हृज्जहृद्गतहृत्प्रिये॥वशकृद्धृद मंत्रे ना वृद्धिना
मौषधौ स्त्रियाम्॥६५॥ ॥यत्रिः॥ ॥अनय
स्त्वविपद्दैवाशुभयोर्व्यसनेषु च॥अत्ययोऽतिक्रमे दंडे विना
शे दोषकृच्छ्रयोः॥६६॥अश्वीयमश्वसंघाते क्लीबमश्वहिते न्य-
वत्॥अधृष्या नदिनीभेदे प्रगल्भे वाच्यलिंगकम्॥६७॥अव-
ध्यमवधार्हे स्यादनर्थकवचस्यपि॥अव्ययोः स्त्रीशब्दभेदे ना
विष्णौ निर्व्यये त्रिषु॥६८॥अहल्या त्वप्सरोभेदे भार्यायां गौत-
मस्य च॥अहार्यः पर्वते ना स्यादहर्तव्ये तु वाच्यवत्॥६९॥अ
भिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि॥अभया स्त्री ह
रीतक्यामुशीरे च नपुंसकम्॥७०॥निर्भये वाच्यलिंगः स्यादपत्यं
पुत्रयोर्मतम्॥अगस्त्यः कुंभयोनौ स्याद्वंगसेनतरावपि॥७१॥
आशयः स्यादभिप्राये पनसाधारयोरपि॥स्यादातिथ्यमति

थ्यर्थेत्रिलिंगमतिथौपुमान्॥७२॥ आत्रेयीपुष्पवत्यांस्यान्नदीभेदे
चनामुनौ॥ आदित्योभास्करेदेवेध्याम्नायोनिगमेपिच॥७३॥उ
पदेशेपींद्रियंतुहृषीकेरतसिस्मृतम्॥उदयस्तुपुमान्पूर्वपर्वते
चसमुन्नतौ॥७४॥उपायःसामभेदादौतथैवोपगतौपुमान्॥ऊ
र्णायुर्नाक्षणभंगेमेषकंबलमेषयोः॥७५॥औचित्यमुचितत्वेस्या
त्सत्येपिचनपुंसकम्॥ कषायोरसभेदेचनिर्यासेचविलेपने॥७६
॥अंगरागेचनस्त्रीस्यात्सुरभौलोहितेत्रिषु॥ कालेयोदैत्यभेदे
स्यात्कालखंडेनपुंसकम्॥७७॥क्षिपण्युस्तुपुमान्देहेसुरभौवा
च्यलिंगकः॥कुलायस्तुपुमान्स्थानमात्रेस्यात्पक्षिवासके॥७८॥
क्षेत्रियंक्षेत्रजतृणेपरदेहचिकित्सयोः॥परदाररतासाध्यरोगयोः
क्षेत्रियःपुमान्॥७९॥कौकृत्यमनुतापेस्यादयुक्तकरणेपिच॥
गांगेयःस्यात्पुमान्भीष्मेक्लीबंस्वर्णकशेरुणोः॥८०॥चक्षुष्यःके
तकेपुंडरीकसंज्ञकपादपे॥कुलत्थिकासुभगयोःस्त्रियामक्षिहिते
ऽन्यवत्॥८१॥चांपेयश्चंपकेस्वर्णेकिंजल्केनागकेसरे॥जघन्यं
हेमलेक्लीबंचरमेगर्हितेऽन्यवत्॥८२॥जटायुःपुंसिसंपातेःकनी
यसिचगुग्गुलौ॥जरायुरपिनत्पक्षिराजेगर्भाशयेपुमान्॥८३
॥तपस्याव्रतचर्यायांतपस्यःफाल्गुनेपुमान्॥द्वितीयातिथिभि
त्स्त्र्योःपूरणेतूभयेत्रिषु॥८४॥देवयुर्वाच्यलिंगस्तुधार्मिकेलोक
यात्रिके॥नादेयीनागरंगेस्याज्जयायामंबुवेतसे॥८५॥भूमिजं
ब्वांजवायांचव्यंगुष्ठेपिचयोषिति॥निकायस्तुपुमाँल्लक्ष्येसधर्मि
प्राणिसंहतौ॥८६॥समुच्चयेसंहतानांनिलयेपरमात्मनि॥ नेप
थ्यःस्यादलंकारेरंगज्यायांनपुंसकम्॥८७॥प्रणयःप्रसवेप्रे
म्णियाञ्चाविश्रंभयोरपि॥निर्वाणेप्यथपर्यायःप्रकारेऽवसरेक्र
मे॥८८॥प्रलयोमृत्युकल्पांतमूर्च्छापायेषुपुंस्ययम्॥प्रत्ययः
प्रथितत्वेचसनादिज्ञानयोरपि॥८९॥आचारेशपथेरंध्रेविश्वा
साधीनहेतुषु॥पर्जन्योमेघशब्देपिध्वनदंबुदशक्रयोः॥९०॥

प्रसव्यं वाच्यलिंगंस्यात्प्रतिकूलानुकूपयोः॥ प्रकीर्यः पूतिकरजे
विनिकार्येतु वाच्यवत्॥९१॥ प्राणाय्योसंमतेपिस्यादभिलाषवि
वर्जिते॥ पयस्यंतु पयोजातहितयोर्वाच्यलिंगकम्॥९२॥ दुग्धि
का क्षीरकाकोल्यो स्वर्णक्षीर्यामपिस्त्रियाम्॥ पारुष्यं परुषत्वेच
दुर्वाक्येपुंसिगीष्पतौ॥९३॥ पानीयंतु जले क्लीबं पातव्येवाच्यलिं
गकम्॥ पौलस्त्यस्तु कुबेरेस्याद्दशग्रीवेपिपुंस्ययम्॥९४॥ बलयः
कंठरोगेना कंकणेपुंनपुंसकम्॥ ब्रह्मण्योब्रह्मसाधौस्याद्ब्रह्मदा
रुशनैश्चरे॥९५॥ बालेयोगर्दभेपुंसिमृतौ बालहितेत्रिषु॥ ब्राह्म
ण्यंब्राह्मणत्वेचसमूहेचद्विजन्मनाम्॥९६॥ भुवन्युस्तुपुमान्
भानौज्वलनेशशलांछने॥ भुजिष्यस्तुस्वतंत्रेस्याद्धस्तसूत्रक
दासयोः॥९७॥ स्त्रियांदासीगणिकयो र्मलयः पर्वतांतरे॥ शैलां
गेदेशआरामेत्रिवृतायांतुयोषिति॥९८॥ मंगल्यः स्यात्त्रायमा
णाऽश्वत्थबिल्वमसूरके॥ स्त्रियांशम्यामधःपुष्पीमिसिशफ्रूव
चास्कच॥९९॥ रोचनायामथोदध्निक्लीबंशिवकरेत्रिषु॥ मृगयुः
पुंसिगोमायौव्याधेचपरमेष्ठिनि॥१००॥ रहस्यास्यान्नदीभेदेगो
पनीयेभिधेयवत्॥ लौहित्यंलोहितत्वेस्यात्क्लीबंपुंसिनदां
तरे॥१॥ वदान्यो दानशौंडेस्याच्चारुवादिनिवाच्यवत्॥ व्यवायः
सुरतेतथापुंसिक्लीबंतुतेजसि॥२॥ वक्तव्यंकुत्सितेहीनेवचना
र्हेचवाच्यवत्॥ विजयःस्याज्जयेपार्थेस्त्रियांतिथ्यंतरेस्मृता॥३॥
उमासख्यांविस्मयःस्यादाश्चर्येगर्वयोःपुमान्॥ विनयातुफ
लायांस्त्रीशिक्षायांप्रणतोपुमान्॥४॥ विशल्याग्निशिखादं
तीगुडूचीत्रिपुटास्कच॥ विषयोगोचरेदेशेतथाजनपदेपिच
॥५॥ प्रबंधाद्यस्ययोज्ञातस्तत्ररूपादिकेपुमान्॥ श्वशुर्योदेव
रेश्यालेशांडिल्यःपावकांतरे॥६॥ मुनिभेदेचमालूरेशालेयः
स्यान्मिसौपुमान्॥ त्रिषुशाल्युद्भवेक्षेत्रेस्याच्छीर्षण्यंतुशीर्षके॥
७॥ स्फकेशेपुंसिशैलेयंतालपर्ण्यांचसैंधवे॥ शैलजेनातुमधु

पेशिलातुल्येऽन्यलिंगकम्॥ ८॥ संस्त्रायः सन्निवेशेचसंस्थाने विस्तृतावपि॥ सन्नयः समवायेपिपृष्ठः स्थायिबलेपुमान्॥ ९॥ शमयः शपथाचारसिद्धांतेषु तथाधिपि॥ क्रियाकारेचनिर्देशे संकेतेकालभाषयोः॥ १०॥ सरिण्युस्तुपुमान्वारिवाहेस्यान्मातरिश्वनि॥ सामर्थ्यंयोग्यतायांस्याच्छक्तावपिनपुंसकम्॥ ११॥ सौरभ्यंतुमनोज्ञत्वेसौगंध्येगुणगौरवे॥ सौभाग्यंसुभगत्वेस्याद्योगभेदेनपुंसकम्॥ १२॥ हिरण्यंरेतसिद्रव्येशातकुंभवराटयोः॥ अक्षयेमानभेदेस्यादकुप्येचनपुंसकम्॥ १३॥ हृदयंमानसेबुक्कोरसोरपिनपुंसकम्॥ ॥यचतुः॥ ॥

भवेदनुशयोद्वेषेपश्चात्तापानुबंधयोः॥ १४॥ अध्यवसायः शेषेस्यात्समासोनिश्चयेपिच॥ अवश्यायस्तुनीहारेप्यभिधानेपिपुंस्ययम्॥ १५॥ अपसव्यंत्रिलिंगंतुदक्षिणप्रतिकूलयोः॥ अंतशय्यामृतौभूमिशय्यायांपितृकानने॥ १६॥ उपकार्याराजसद्मन्युपकारोचितेऽन्यवत्॥ जलाशयोजलाधारेस्यादुशीरेनपुंसकम्॥ १७॥ तंडुलीयः शाकभेदेविडंगतरुनाम्नयोः॥ तृणभूम्यंमल्लिकायांभिषुस्यात्केतकीफले॥ १८॥ दाक्षिणात्योनारिकेरेभिषुदक्षिणदिग्भवे॥ धनंजयोऽर्जुनेवन्हिनागदिग्देहमारुते॥ १९॥ निरामयस्तुपुंसिस्याद्दिडिक्केभिषुनीरुजि॥ परिधायोजनस्थानेपरिच्छेदनितंबयोः॥ २०॥ प्रतिभयः सभायाऽऽशयेप्रतिभयंभये॥ घोरेपि पांचजन्यस्तुकृष्णसंख्येहुताशने॥ २१॥ प्रावृषेण्यः पुमान्नीपेप्रावृट्कालभवेत्रिषु॥ पौरुषेयः कृतेपुंसांविकारेपुरुषस्यच॥ २२॥ मिथुनासंगबुधयोः पुरुषस्यपदांतरे॥ फलोदयः पुमांल्लाभेभिदिवेशालयेपिच॥ २३॥ भागधेयंमतंभाग्येभागप्रत्ययोः पुमान्॥ महालयोविहारेस्यात्तीर्थेचपरमात्मनि॥ २४॥ महोदयः कान्यकुब्जेचाधिपत्यापवर्गयोः॥ महामूल्यः पद्मरागेमामहार्घेऽन्यलिंगकः॥ २५

मार्जारीयःस्मृतःशूद्रेविडालेकायशोधने॥रौहिणेयोन्यवद
त्सेनायुधेचहलायुधे॥२६॥बिलेशयस्तुपुल्लिंगोमूषिकेचभुजं
गमे॥वैनतेयस्तुगरुडेस्यात्प्रभाकरसारथौ॥२७॥संपरायः
समीकेस्यादापदुत्तरकालयोः॥समाह्वयस्तुपशुभिःखगेद्यूते
चसंगरे॥२८॥भवेत्समुदयःसंघेसंयुगेचसमुद्गमे॥समुदायः
समूहेस्याद्युद्धेसमुच्छ्रयःपुमान्॥२९॥विरोधोत्सेधयोःस्थूलो-
च्चयोगंडोपलेपिच॥गजानांमध्यमगतेप्यसाकल्यवरंडयोः॥
३०॥हिरण्मयःसुरज्येष्ठेनास्तुवर्णेमयेत्रिषु॥ ॥यपं
च॥ ॥कालानुसार्यंशैलेयेकालीयेशिंशपाद्रुमे॥३१॥
दुग्धतालीयमित्येतदुग्धाग्रक्षीरफेनयोः॥अथप्रवचनीयंच
स्यात्प्रवक्तृप्रवाच्ययोः॥३२॥वृषाकपायीश्रीगौरीवरीजीवंति
कासुच॥ ॥यषट्॥ मस्तुङ्कमनीयमुपस्थे
येधौतांशुकद्वये॥३३॥विष्वक्सेनप्रियालक्ष्म्यांवाराह्यामपि-
योषिति॥ ॥ ॥इतियांतवर्गः॥ ॥१५४४॥
॥ ॥रैकम्॥ ॥रःस्मृतःपावकेतीक्ष्णेराःपुंसिस्वर्णवि
त्तयोः॥श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे॥१॥लक्ष्म्यांत्रिवर्ग
संपत्तिविधोपकरणेषुच॥विभूतौचमतौचस्त्रीस्रुःस्त्रियांनि
र्झरेस्रवे॥२॥ ॥रद्विः॥ ॥अरंशीघ्रेचचक्रां
गेशीघ्रगेपुनरन्यवत्॥अग्रंपुरस्तादुपरिपरिमाणेपलस्यच
॥३॥आलंबनेसमूहेचप्रांतेचस्यान्नपुंसकम्॥अधिकेचप्रधा
नेचप्रथमेचाभिधेयवत्॥४॥अस्रःकोणेकचेपुंसिक्लीबम
श्रुणिशोणिते॥अस्त्रंप्रहरणेचापेकरवालेनपुंसकम्॥५॥अ
भ्रंमेघेचगगनेधातुभेदेचकांचने॥अद्रिःशैलाद्रुमार्केनाथां
घ्रिर्नापादमूलयोः॥६॥आराचर्मप्रभेदिन्यांपुंसिभौमशनैश्च
रे॥आर्द्रानक्षत्रभेदेस्यात्स्त्रियांक्लिन्नेभिधेयवत्॥७॥आरुः
पुंसितरोर्भेदेतथाकर्कटदंष्ट्रिणोः॥इंद्रःशक्रादित्यभेदयोग

भेदांतरात्मस्कः॥८॥ इंद्रा फणिज्झकेस्त्रीस्यादिराभूवाक्सुरांबु-
षु॥उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे॥९॥स्त्री वचाक्षतयोरु
ग्री कर्कट्यां करभे पुमान्॥उस्रो वृषे च किरणे पुंस्त्राऽर्जुन्युपचित्र
योः॥१०॥ऐंद्रिः काके जयंते ना थोड्राः पुंभूम्नि नीवृति॥ओड्रः ख्या
तो जवापुष्पे क्षारं नीरे क्षरोंबुदे॥११॥करो वर्षोपले रश्मौ पाणौ प्र-
त्यायशुंडयोः॥कद्रुस्त्रिषु स्वर्णपिंगे नागानां मातरि स्त्रियाम्॥१२॥का
रो वधे निश्चये च बलौ यत्ने यतावपि॥तुषारशीलेपि पुमान्स्त्रियां
दूत्यां प्रसेवके॥१३॥सुवर्णकारिकायां च बंधनागारबंधयोः॥क्षा
रो रसांतरे धूर्ते लवणे काचभस्मनोः॥१४॥कारिः स्त्रियां क्रियायां
स्याद्वाच्यलिंगस्तु शिल्पिनि॥कारुर्विश्वकर्मणि नात्रिषु कारक
शिल्पिनोः॥१५॥क्षीरं दुग्धे जले क्षीरः शकके पुंभूम्नि नीवृति॥कुरु
र्नृपांतरे भक्ते पुमान्पुंभूम्नि नीवृति॥१६॥क्षुद्रः स्यादधमे क्रूरे कृ
पणाल्पेषु वाच्यवत्॥क्षुद्रा व्यंगा नटी कंटकारिकासरघासु च॥
१७॥चांगेरी वेश्ययोर्हिंस्रामक्षिकामात्रकेषु च॥क्षुरः स्याच्छेद
नद्रव्ये कोकिलाक्षे च गोक्षुरे॥१८॥क्रूरस्तु कठिने घोरे नृशंसे प्य
भिधेयवत्॥कृच्छ्रं साख्यातमाभीले पापसंतापनादिनोः॥१९॥
क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः॥क्रोष्ट्री शृगालिकाकृष्णा
विदारीलांगलीषु च॥२०॥क्षौद्रं मधुनि पानीये खरः स्यात्तीक्ष्णप
र्मयोः॥गर्दभे ऽस्त्री देवताडे खरुर्दर्पे हरे हये॥२१॥दंते पुंसि त्रि
षु श्वेते खुरं कोलदले शफे॥गरी खरायां किरणे क्लीबं स्नोपविषे
विषे॥२२॥गात्रं गजाग्रजंघादौ क्लीबमंगे कलेवरे॥गीः स्त्री भा
षासरस्वत्योर्गिरिर्नानेत्ररुग्भिदि॥२३॥अद्रौ गिरियके चोद्गी
र्णे पूज्ये पुनस्त्रिषु॥गुंद्रस्तेजनके स्त्री तु प्रियंगौ भद्रमुस्तके॥२४
गुरुस्त्रिलिंग्यां महति दुर्जरालघुनोरपि॥पुमान्निषेकादिकारे पि
त्रादौ सुरमंत्रिणि॥२५॥गृध्रः खगांतरे पुंसि वाच्यलिंगोथ लुब्ध
के॥गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः॥२६॥समावनी

यथोधेच काननक्षेत्रवर्त्मसु ॥ गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधे
यवत् ॥२७॥ ना श्वेतसर्षपे चंद्रे नद्वयोः पद्मकेसरे ॥ गौरी त्वसंजा
तरजः कन्याशंकरभार्ययोः ॥२८॥ रोचनारजनीपिंगाप्रियंगुवसु
धासु च ॥ आपगायाविशेषेपि यादसांपतियोषिति ॥२९॥ घस्र
स्तु दिवसे हिंस्रे घोरे भीमे हरेपि च ॥ चरोक्षद्यूतभेदे च भौमे चारे
ऽसेचले ॥३०॥ चंद्रः कर्पूरकांपिल्लसुधांशुस्वर्णवारिषु ॥ चक्रः को
के पुमान् क्लीबं व्रजे सैन्यरथांगयोः ॥३१॥ राष्ट्रे दंभांतरे कुंभकारोप
करणास्त्रयोः ॥ जलावर्तेप्यथ चरुः पुमान् हव्यान्नभांडयोः ॥३२॥
चारः पियालवृक्षे स्याद्गतौ बंधापसर्पयोः ॥ चारुर्बृहस्पतौ पुं
सि शोभनेप्यभिधेयवत् ॥३३॥ चित्राखुपर्णीगोडुंबासुभद्रादंति
कासु च ॥ मायायां सर्पनक्षत्रेनदीभेदेषु च स्त्रियाम् ॥३४॥ तिलका
लेख्ययोः क्लीबं कर्बुराद्भुतयोरपि ॥ नद्युक्तयोस्त्रिलिंगं च चीरी झि
ल्यां नपुंसकम् ॥३५॥ गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः ॥
चुक्रं वृक्षाम्लचांगेर्यां स्त्री पुंस्यम्लेम्लवेतसे ॥३६॥ चैत्रं मृतैदेवकु
ले ना भूमृन्मासभेदयोः ॥ चोरः पाटच्चरेपि स्याच्चोरपुष्प्योषधावपि
॥३७॥ छत्त्रा मिसावतिछत्त्रे कुस्तुंबुरुशिलींध्रयोः ॥ नपुंसकं चात
पत्रे छिद्रं दूषणरंध्रयोः ॥३८॥ जारी स्यादोषधीभेदे स्त्रियामुप
पतौ पुमान् ॥ जीरस्तु जरणे खड्गे टारो रंगतुरंगयोः ॥३९॥ तर
स्तु तरणे पुंसि दशालोपे दके तरी ॥ तंत्रं कुटुंबकृत्ये स्यात्सिद्धांते
चौषधोत्तमे ॥४०॥ प्रधाने तंतुवाये च शास्त्रभेदे परिच्छदे ॥ श्रुति
शाखांतरे हेतावुभयार्थप्रयोजके ॥४१॥ इति कर्तव्यतायां च तं
त्री वीणागुणो मता ॥ अमृतादेहशिवयोस्तंद्री निद्राप्रमीलयोः
॥४२॥ तारो वानरभिन्मुक्ताविशुद्ध्योरशुद्धमौक्तिके ॥ ना नक्षत्रे
क्षिमध्ये च न नारूप्ये नपुंसकम् ॥४३॥ स्त्री बुद्धदेवताभेदे वालि
गीष्पतिभार्ययोः ॥ त्रिलिंगोत्युच्चशब्दे च ताम्रः शुल्वेऽरुणेपि च ॥
४४॥ तीव्रा तु कटुरोहिण्यां राजिकागंडदूर्वयोः ॥ त्रिषत्युष्णे नितां

तेच कटौ तीरं तु रोधसि॥४५॥ पुंसि त्रपुणि तोत्रं तु प्रजने वेणुकेऽपि च
॥ दरो स्त्री साध्वसे गर्ते कंदरे तु दरी स्मृता॥४६॥ दरा व्ययं मनागर्थे
दस्नः खरेऽश्विनीसुते॥ दारु स्यात्पित्तले काष्ठे देवदारौ नपुंसकम्
॥४७॥ द्वारं निर्गमनेऽपि स्याद्दस्तु पये धरो गिरौ॥ कार्पासतूलके कू
र्मराजे वस्वंतरेऽपि च॥४८॥ धरा विश्वंभरायां च स्त्री गर्भाशयमेदसोः
॥ धात्री जनन्यामलकी वसुमत्युपमातृषु॥४९॥ धारा सैन्याग्रिम
स्कंधे तुरंगगतिपंचके॥ घटादेश्छिद्रसंतत्योः प्रपाते स्याद्धुवस्य
च॥५०॥ खड्गादेर्निशितमुखे धारो ग्रावांतरेऽप्यृणे॥ धीरा धैर्यान्वि
ते स्वैरे धीरः स्यात्त्रिषु पंडिते॥५१॥ स्वच्छंदे धैर्ययुक्ते च कुंकुमे तु न
पुंसकम्॥ स्त्रियां श्रवणतुल्यायां धौम्रं धूम्रत्व ईरितम्॥५२॥ न-
था वास्तुस्थानभेदे नरो जे मनुजेऽर्जुने॥ क्लीबं तु रामकूपेरे नक्रं स्या
दग्रदारुणि॥५३॥ नासायां पुंसि कुंभीरे नारस्तर्णकनीरयोः॥ नी
ध्रं नेमौ वल्मीके द्रौ रेवतीभेऽपि कानने॥५४॥ नेत्रं मंथगुणे वस्त्रभेदे
मूले द्रुमस्य च॥ रथे च क्लिषिनयां तु नेत्री नेतरि वाच्यवत्॥५५॥
परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले॥ पत्रं तु वाहने पर्णे स्यात्प
क्षे शरपक्षिणोः॥५६॥ पारं परतटे प्रांते न स्त्री पारा नदीभिदि॥
पारी पूरे च कर्कर्यां पादरज्जौ च दंतिनः॥५७॥ पात्रं तु भोजने योग्ये
स्रुवादौ राजमंत्रिणि॥ तीरद्वयांतरे चाथ पुरुः प्राज्येऽभिधेयवत्
॥५८॥ पुंसि स्याद्देवलोके च नृपभेदपरागयोः॥ पुरं नपुंसकं गे
हे देहपाटलिपुत्रयोः॥५९॥ पुष्पादीनां दलावृत्तौ ना गुग्गुलौ न-
ना पुरि॥ पुंड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके॥६०॥ चित्रे कृमौ
पुंडरीके पुंभूम्नि नीवृदंतरे॥ पूरो जलसमूहे स्याद्व्रणसंशुद्धिखा
द्ययोः॥६१॥ पात्रं वस्त्रे मुखाग्रे च शूकरस्य हलस्य च॥ पौरं त्रिषु
पुरोद्भूते करणे तु नपुंसकम्॥६२॥ वरो जामातरि वृतौ देवतादेर
भीप्सिते॥ विड्गु पुंसि त्रिषु श्रेष्ठे कुंकुमे तु नपुंसकम्॥६३॥ वरी भो
क्ताशतावर्यां वरा च स्यात्फलत्रिके॥ मनागिष्टे वरं क्लीबे केचि

प्राहुस्तदव्ययम्॥ ६४॥ बभ्रुर्वैश्वानरे भूलपाणौ च गरुडध्वजे॥
विशाले नकुले पुंसि पिंगले त्वभिधेयवत्॥ ६५॥ वक्रः शनैश्चरे पुं
सि पुटभेदे नपुंसकम्॥ त्रिषु क्रूरे च कुटिले वारः सूर्यादिवासरे
॥ ६६॥ द्वारे हरे कुब्जवृक्षे वृंदावसरयोः क्षणे॥ वारी स्याद्गजबंध
न्यां कलश्यामपि योषिति॥ ६७॥ वारिर्वाग्गजबंधन्योः स्त्रीक्लीबं
तु निबालके॥ वीरो रसविशेषे स्यादुत्तरे सुभटे त्रिषु॥ ६८॥ स्त्री सु
राक्षीरकाकोलीतामलक्येलवालुके॥ पतिपुत्रवतीरंभाविदारी
दुग्धिकासु च॥ ६९॥ भल्लूः क्षीरविदार्योः क्लीबं भृंग्यां नलेऽपि च॥ भ
रुः स्वर्णे हरे पुंसि भरोऽतिशयभारयोः॥ ७०॥ भद्रः शिवे खंजरीटे
वृषभे तु कदंबके॥ करिजातिविशेषे ना क्लीबं मंगलमुस्तयोः॥ ७१
कांचनेऽपि च स्त्रियां रास्नाकृष्णाव्योमनदीषु च॥ तिथिभेदे प्रसारि-
ण्यां कट्फलानंतयोरपि॥ ७२॥ त्रिषु श्रेष्ठे च साधौ च नपुंसि करणां
तरे॥ भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके॥ ७३॥ भीरुरार्त्ते
त्रिलिंगः स्याद्वरयोषिति योषिति॥ भूरि र्नां वासुदेवे च हरे च पर
मेष्ठिनि॥ ७४॥ नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगकः॥ मंत्रो वेद
विशेषे स्याद्देवादीनां च साधने॥ ७५॥ गुह्यवादेऽपि च पुमान् मरु
र्मा गिरिधन्विनोः॥ मात्रा कर्णविभूषायां वित्ते माने परिच्छदे॥ ७६
॥ अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे॥ मारो मृतौ स्मरे विघ्ने
मारी चंड्यां च नक्षये॥ ७७॥ मारिः स्त्री मारणे वर्षे मित्रं सुहृदि
न द्वयोः॥ सूर्ये पुंसि सुरा गंधद्रव्ये दैत्यांतरे पुमान्॥ ७८॥ यात्रा-
तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्॥ रंध्रं तु दूषणे छिद्रे राष्ट्रं
स्यादुपवर्त्तने॥ ७९॥ उपद्रवे क्लीबपुंसो रुरुर्नामृगदैत्ययोः॥ धेत्रं
वेमनि पीयूषे पटवासेऽपि सूत्रके॥ ८०॥ रोध्रो नागाख्ये क्लीबमप
राधे च किल्बिषे॥ रौद्रः धर्मे रसे चंड्यां स्त्री तीव्रे भीषणे त्रिषु॥ ८१॥
वज्रं स्याद्बालके धान्यां क्लीबं योगांतरे पुमान्॥ वज्रा स्नुह्यां गुडू
च्यां च वज्री स्नुह्यंतरे स्मृता॥ ८२॥ दंभोलौ हीरके पस्त्री वर्द्धे

पुष्करव्ययोः॥ वप्रस्तातेपुमानस्त्रीरेणुक्षेत्रेचयेतटे॥८३॥ वक्रंमुखे
वस्त्रभेदे व्यग्रो व्यासक्तआकुले॥ वस्त्रोनादिवसेक्लीबंमंदिरेचच
तुष्पथे॥८४॥ व्याघ्रः स्यात्पुंसिशार्दूलेरक्तैरंडकरंडयोः॥ श्रेष्ठेनराद्यु
त्तरस्थः कंटकार्यांतुयोषिति॥८५॥ वृत्रोरिपौघनेध्वांतेशैलभेदेचदा
नवे॥ वेरः कलेवरेक्लीबंवार्त्ताकीकुंकुमेपिच॥८६॥ वोढ्रीस्त्रीपण
पादेनागोनसाहौझषांतरे॥ शरस्तेजनकेबाणेदध्यग्रेनाशरंज
ले॥८७॥ शस्त्रंलोहास्त्रयोःक्लीबंछुरिकायांतुयोषिति॥ शक्रः पु
मान्देवराजेकुटजार्जुनभूरुहोः॥८८॥ शार्ङ्गिर्नाभोधरेजिष्णौशारु
र्नाकोपवज्रयोः॥ शारिर्नाक्षोपकरणेस्त्रियांशकुनिकांतरे॥८९॥
युद्धार्थगजपर्याणेव्यवहारांतरेपिच॥ शारः स्याच्छबलेवाच्यलिं
गःपुंसिसमीरणे॥९०॥ अक्षोपकरणेशास्त्रंनद्वयोरागमाज्ञयोः
शिग्रुर्नाशाकमात्रेचशोभांजनमहीरुहे॥९१॥ शिरोनापिप्पलीमू
लेस्यात्पन्नग्यांचयोषिति॥ शीघ्रं नलदेचक्रांगेक्लीबंद्रुतगतौत्रिषु
॥९२॥ शुभ्रंस्यादभ्रकेक्लीबंवसुदीप्तशुक्लयोस्त्रिषु॥ शुक्रः स्याद्भा
र्गवेज्येष्ठमासेवैश्वानरेपुमान्॥९३॥ रेतोक्षिरुग्भिदोःक्लीबंशूरः
स्याच्चारुदेवभटे॥ स्वरुः पुमान्यूपखंडेभिदुरेप्यध्वरेशरे॥९४॥ स
त्रंयज्ञेसदादानाच्छादनारण्यकैतवे॥ सरोदध्यग्रगत्योर्नास्वरो
नासासमीरणे॥९५॥ उदात्तादावकारादौषड्जादौचध्वनौपुमा
न्॥ सारोबलेस्थिरांशेचमज्जिपुंसिजलेधने॥९६॥ न्याय्येक्लीबंत्रि
षुवरेसांद्रंवनेघटेमृदौ॥ स्फारः स्यात्पुंसिविकटेकमकादेश्चबु
द्बुदे॥९७॥ सिप्रोनिदाघसलिलेसिप्रातुसरिदंतरे॥ स्थिराभूशा
लपर्ण्योर्नाशनौमोक्षेबलेऽद्रिषु॥९८॥ सीरोर्केहलयोःपुंसिसुरा
चचक्रमर्दयोः॥ पुल्लिंगःस्त्रीदिवेशेस्यात्सूत्रंतंतुव्यवस्थयोः॥९९
॥ शास्त्रादिसूचनायंथेस्वैरः स्वच्छंदमंदयोः॥ हरिर्भर्त्रार्कवाताश्व
शुकभेकयमाहिषु॥१००॥ कपौसिंहेहरेऽजेंशौशक्रेलोकांतरेपु
मान्॥ वाच्यवल्लिंगहरितोहीरौमुक्ताकलौयुधि॥१॥ हारिःप

थिकसंघाताघूतादिभंगयोःस्त्रियाम्॥ हिंस्त्रा त्वेलावलीमांस्यो
स्त्रियांस्याद्धातुकेऽन्यवत्॥२॥ हीरा तैलांकुकालक्ष्म्योःपुंसिशंक
रवज्रयोः॥ हारा लग्नेपिराश्यर्द्धेरेखाशास्त्रभिदोरपि॥३॥ ॥
रत्रिः॥ ॥अमरस्त्रिदशेप्यस्त्रीसंहारेकुलिशद्रुमे॥स्त्रीगुडू-
च्यमरावत्योःस्थूणादूर्वाजरायुषु॥४॥अपरंगजपश्चार्द्धेस्याज्ज-
रायौतुयोषिति॥इतरस्मिन्नपितथाऽर्वाचीनेऽप्यन्यलिंगकं॥५॥
अधरस्तुपुमानोष्ठेहीनेऽनूर्ध्वेचवाच्यवत्॥अध्वरःसावधाने
स्याद्वसुभेदेक्रतौपुमान्॥६॥अंतरमवकाशावधिपरिधाना
न्तर्द्धिभेदतादर्थ्ये॥छिद्रात्मीयविनाबहिरवसरमध्यात्मसदृशे
षु॥७॥अवरंगजांत्यजंघादिदेशेपिचरमेत्रिषु॥अंबरंनद्यो
व्योम्निस्त्रग्ध्यंतरवस्त्रयोः॥८॥अंगारस्तूल्मुकेनस्त्रीपुंल्लिग-
स्तुमहीसुते॥अंकुरोरुधिरेलोम्निपानीयेभिनवोद्भिदि॥९॥अ
जिरंप्रांगणेवातेविषयेदर्दुरेतनौ॥स्त्रीचंड्यामक्षरंब्रह्मवर्ण
योःपुंसिशंकरे॥१०॥आशिरोवीतिहोत्रेस्याद्राक्षसेभास्करेपुमा
न्॥अंडीरःपुरुषेशक्तेऽररंछदकपाटयोः॥११॥अवीराऽपति
पुत्रायांस्त्रीसत्वरहितेत्रिषु॥अगुरुक्लीवंजोंककशिंशपयोर्वा
च्यवल्लघुनि॥१२॥असुरारजनीराश्योरसुरोदेवारिभास्कर
योः॥आकरोनिवहोत्पत्तिस्थानश्रेष्ठेषुकथ्यते॥१३॥आधार
श्चाधिकरणेप्यालवालांबुधारणे॥आसारःस्यात्प्रसरणेवेग
वृष्टौसुहृद्बले॥१४॥आहारःस्यादाहरणेभोजनेचपुमानयम्
॥आशरस्तुपुमान्वैश्वानरेचरजनीचरे॥१५॥आकारइंगिता
कृत्योरितरोऽन्यत्रपामरे॥इत्वरस्त्वांपथिकेक्रूरकर्मणिच-
त्रिषु॥१६॥ईश्वरोमन्मथेशंभौनाढ्येस्वामिनिचान्यवत्॥ई-
श्वरीचेश्वरोमायासुदरंजठरेयुधि॥१७॥उदरोदातृमहतोर्द
क्षिणेप्यभिधेयवत्॥उर्वरासर्वसस्याढ्यभूमौस्याद्भूमिमात्रके
॥१८॥उत्तरादिग्विशेषेचस्नुषायामर्जुनस्यच॥विराटस्यसुते

ना स्यादूर्ध्वोदीच्यां त्तमे त्रिषु ॥१९॥ नपुंसकं प्रतिवाक्येऽथोद्गारश्चो
कृतावृणे ॥ ऋक्षरं वारिधारायामृक्षरश्चर्त्विजि स्मृतः ॥२०॥ एका
ग्रमन्यलिंगं स्यादेकतानेऽप्यनाकुले ॥ औशीरं शयनाशनचामर
दंडेऽप्युशीरजे प्रोक्तम् ॥२१॥ क्रकरः करीरवृक्षे दीने क्रकचे च पक्षि
भेदे च ॥ कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः ॥२२॥ कर्बुरं स
लिले हेम्नि कर्बुरः पापरक्षसोः ॥ कर्बुरा कृष्णवृंतायां शबले पुन
रन्यवत् ॥२३॥ कर्परः स्यात्कपाले च शस्त्रभेदे कटाहयोः ॥ कंधरो
वारिवाहे स्याद्ग्रीवायां कंधरा मता ॥२४॥ कर्बरः कथितो व्याघ्रे शि
वायामपि कर्बरी ॥ कंजारो जठरे सूर्ये विरिंचौ वारणे मुनौ ॥२५॥ क
रीरो वंशांकुरेऽस्त्री वृक्षभिद्घटयोः पुमान् ॥ करीरी चीरिकायां च दं
तमूले च दंतिनाम् ॥२६॥ कटित्रं रसनायां च वर्मांगे कटिवाससि ॥
कच्छुरा शूकशिंब्यां च शटीदुःस्पर्शयोरपि ॥२७॥ कच्छुरः पुंश्चले-
वाच्यलिंगः स्यात्पामरेऽपि च ॥ कवरं लवणेऽम्ले स्त्री पृथ्वीतुंगीकचां
तरे ॥२८॥ कबुर्युमायां ना रक्षःपापयोर्भेषजांतरे ॥ कर्मारो जाति
भेदे च त्वचिसारे च पुंस्ययम् ॥२९॥ करेणुः कर्णिकारे च करिणीवे
श्ययोः स्त्रियाम् ॥ कत्वरं कुत्सिते वाच्यलिंगं तक्रे नपुंसकम् ॥३०॥
कर्करी भांडभेदे ना दर्पणे कठिने त्रिषु ॥ कडारः पिंगले दासे कल
त्रं श्रोणिभार्ययोः ॥३१॥ दुर्गस्थाने नृपादीनां कटप्रुः पुंसि राक्षसे ॥
विद्याधरे महादेवे तथा स्यादक्षदेवने ॥३२॥ कंदरस्त्वंकुशे पुंसि
गुहायां न नपुंसकम् ॥ कर्चूरः स्यात्पुमाञ्छठ्यां स्वर्णे तु नपुंसक
म् ॥३३॥ काश्मीरं कुंकुमेऽपि स्याट्टंकपुष्करमूलयोः ॥ कावेरी स्या
त्सरिद्भेदे पण्यनारीहरिद्रयोः ॥३४॥ कांतारोऽस्त्री महारण्ये बिले दु
र्गमवर्त्मनि ॥ पुंसि स्यादिक्षुभेदेऽथ किशोरोऽश्वस्य शावके ॥३५॥
तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः ॥ किर्मीरो नागरंगे च
कर्बुरे राक्षसांतरे ॥३६॥ किंशारुर्ना सस्यशूके विशिखे कंकपक्षि
णि ॥ कुहरं गह्वरे छिद्रे क्लीबं नागांतरे पुमान् ॥३७॥ कुक्कुरः सार

मेयेनाग्रंथिपर्णेनपुंसकम्॥ कूर्परःस्यात्कफोणौचजानुदेशेच·
पुंस्ययम्॥३८॥कुंजरोऽनेकपेकेशेस्त्रीधातक्यांचपाटलौ॥ कु
मारःस्याच्छुकेस्कंधेयुवराजेऽश्ववारके॥३९॥बालकेवरुणद्रौना
नद्वयोर्जात्यकांचने॥ कुमारीशैलतनयानवमाल्योर्नदीभिदि॥
४०॥सहापराजिताकन्याजंबूद्वीपेषुचस्त्रियाम्॥कुठारुर्नाद्रुमे
कशेकुठारंकेवलेरते॥४१॥कुबेरःस्यात्पुंसिनदीवृक्षेपुण्यजने
श्वरे॥ कूबरस्त्रिषुचारौनाकुब्जकेऽस्त्रीयुगंधरे॥४२॥केसरंहिं
गुनिक्वाबकिंजल्केनस्त्रियांपुमान्॥सिंहच्छटायांपुंनागेबकुले
नागकेसरे॥४३॥केदारोद्रोशिवक्षेत्रेभूमिभेदालवालयोः॥ के
नारःपुंसिनरकेशिरःकपोलसंधिषु॥४४॥कोविदरःपुंसिनकुले
शक्रगोपकशक्रयोः॥कोट्टारोनागरेकूपेपुष्करिण्याश्चपाटके
॥४५॥खपुरःक्रमुकेभद्रमुस्तकेऽलसकेपिच॥खर्परस्तस्करे
धूर्त्तेशिक्षाभांडकपालयोः॥४६॥खर्जूरंरूप्यफलयोर्वृश्चिके
नाद्रुमेद्वयोः॥खदिरीशाकभेदेस्त्रीनाचंद्रेदंतधावने॥४७॥खं
डाभ्रमभ्रलेशेस्यात्तथादंतक्षतांतरे॥खिंखिरस्तुशिवाभेदे
खट्वांगेवारिधानके॥४८॥गणेरुःकर्णिकारद्रौकरिणीवेश्ययोः
स्त्रियाम्॥गर्गरोमीनभेदेस्त्रीमंथान्यामथगह्वरः॥४९॥गुहाग
हनदंभेषुनिकुंजेतुपुमानयम्॥गांधारःपुंसिसिंदूरेरागदेशप्र
भेदयोः॥५०॥गायत्रीत्रिपदादेवीछंदोभित्खदिरेषुच॥गोपुरं
द्वारिपूर्द्वारेकैवर्तीमुस्तकेपिच॥५१॥घर्घरोनाचलद्वारिद्वारोलू
कनदांतरे॥स्त्रीक्षुद्रघंट्यांवीणायाभेदेस्वरांतरेपिच॥५२॥च
मरंचामरेस्त्रीतुमंजरीमृगभेदयोः॥चंदिरोऽनेकपेचंद्रेचत्व
रंस्थंडिलेंगने॥५३॥चंक्रःस्यंदनेवृक्षेचातुरोनेत्रगोचरे॥
चाटुकारिणियंत्रोश्वत्रिषुदाक्ष्येतुचातुरी॥५४॥चक्रगंडोच·
पुंसिस्याच्चामरंचामरापिच॥दंडेचबालव्यजनेचिकुरस्तर
लागयोः॥५५॥पक्षिवृक्षभिदोःकेशेगृहबभ्रौसरीसृपे॥छिदि

रच्छेदन द्रव्ये धूर्ते वैरिणि च त्रिषु॥ जठरो नस्त्रियां कक्षौ दृढ कर्कटयोः स्त्रिषु॥५७॥ जर्जरं शैवले शक्र ध्वजे त्रिषु जरातुरे॥ जंबीरः प्रस्थपुष्पे स्यात्पुंसि दंतशठद्रुमे॥५८॥ जलेंद्रः पुंसि वरुणे जंभले च महोदधौ॥ झर्झरः स्यात्कलियुगे वाद्यभांडेन दांतरे॥५९॥ झल्लरी झल्लरी च हुडुक्के बालकुंतले॥ टट्टरी स्यान्मृषावादे लंपाप टहवाद्ययोः॥६०॥ टंकारो विस्मये पुंसि प्रसिद्धौ सिंजिनी ध्वनौ॥ टगरष्टंकणक्षारे हेलाविभ्रमगोचरे॥६१॥ नान्यवल्के कराक्षे स्यात् डिंगरो डंगरे पि च॥ क्षेपे तमिस्रं तिमिरे कोपे स्त्री तु तमस्तनौ॥॥६२॥ कृष्णपक्षनिशायां च त्वक्पत्रं तु वरांगके॥ स्त्रीकारव्यां च तिमिरं ध्वांते नेत्रामयांतरे॥६३॥ तीवरो नां बुधौ व्याधे तुंबुरी कुकुरस्त्रियाम्॥ धन्याके पि तुषारस्तु शीकरे शीतले हिमे॥६४॥ तुवरस्तु कषाये स्यात्काक्ष्याढक्योस्तु वर्यपि॥ तूवरो ऽश्मश्रुपुरुषे प्रोदाशृंगारके पि च॥६५॥ पुरुषव्यंजनत्यक्ते स्यात्कषायरसे पि च॥ दहरो मूषिकायां च स्वल्पभ्रातरि बालके॥६६॥ दंतुरस्तून्नतरदे तथोन्नतनते त्रिषु॥ दर्दरः पर्वते पुंसि त्रिषीषद्भग्नभाजने॥६७॥ दर्दुरस्तोयदे भेके वाद्यभांडाद्रिभेदयोः॥ दर्दुरा चंडिकायां स्याद्ग्रामजाले नपुंसकम्॥६८॥ दंडारो वहले मत्तवारणे शरयंत्रके॥ कुंभकारस्य चक्रे च द्वापारः संशये युगे॥६९॥ दासेरो दासिकापत्ये त्रिषु पुंसि क्रमेलके॥ दुर्धरः पुंसि नरकांतरे स्यादृषभौषधौ॥७०॥ दैत्यारिः पुंसि सामान्य देवे च गरुडध्वजे॥ धूसरी किन्नरी भेदे ना खरे त्रिषु पांडुरे॥७१॥ नरेंद्रस्तु महीपाले विषवैद्ये च पुंस्ययम्॥ नर्मरा तु दरी भस्त्रा सरलानिष्फलास्तु च॥७२॥ नागरं पुस्तके शुंठ्यां विदग्धे नगरोद्भवे॥ निकरो निवहे सारे न्याय्यदेयधने निधौ॥७३॥ निर्झरस्तु सहस्रांशुतुरंगे तुषपावके॥ निर्जरः स्यात्सुमान्देवे जरात्यक्ते च वाच्यवत्॥७४॥ निर्जरा तु गुडूच्यां च तालपर्ण्यामपि स्त्रियाम्॥ निकारः स्यात्परिभवे धान्यस्योत्क्षेपणे

पिच॥७५॥निर्दरं निर्भरे सारेऽन्यवत्तु कठिनेऽत्रये॥स्यान्नीवरो
वणिजके वास्तव्येऽपि पुमानयम्॥७६॥प्रवरः संततौ गोत्रे क्लीबं
श्रेष्ठे तु वाच्यवत्॥प्रावरो हयसन्नाहे कुक्कुरेऽश्वतरेऽपि च॥७७
॥पुंसि त्रिषु त्वंतस्वरे पवित्रं वर्षणे कुशे॥ताम्रे पयसि च क्लीबं मे
ध्ये स्यादभिधेयवत्॥७८॥प्रदरो रोगभेदे स्याद्विदारे शरभंगयोः
॥प्रकरः स्यात्पुमान्संघे विकीर्णकुसुमादिषु॥७९॥नपुंसकं जो
गके स्त्री नाट्यांगे च त्वरावलौ॥ पंकारः शैवले सेतौ सोपाने जल-
कुब्जके॥८०॥प्रस्तरो ग्रावणि मणौ प्रकारस्तुल्यभेदयोः॥पदा
रः पादधूलौ स्यात्पादालिंदेऽपि पुंस्ययम्॥८१॥प्रसरः प्रणये वेगे स्या
त्पाठीरस्क मूलके॥ देकारे वेणुसारे च वारिदेति तउन्यपि॥८२॥
स्याद्रंगे वातिके पुंसि पामरः खलनीचयोः॥पांडुरं स्यान्मरुब
के वर्णे नातद्वति त्रिषु॥८३॥पापरी भक्तसिक्थे स्यात्स्त्रीनाशीरा
जयक्ष्मणि॥जराटेऽपि कदंबस्य केसरे च गदांतरे॥८४॥प्रांतरं
विपिने दूरशून्यवर्त्मनि कोटरे॥पिठरः स्थाल्यां ना क्लीबं मुस्तामं
थानदंडयोः॥८५॥पिंजरोऽश्वांतरे क्लीबं स्वर्णे पीते च वाच्यवत्
॥पिंडारः क्षेपणे गोपे महिषीरक्षके द्रुमे॥८६॥पीवरः कच्छपे
स्थूले पुष्करं खेंऽबु पद्मयोः॥ तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रखां
डयोः॥८७॥कुष्ठौषधे द्वीपतीर्थभेदयोश्च नपुंसकम्॥नारोगना
गविहगनृपभेदेषु वारुणौ॥८८॥बंठरः स्थगिकारज्जौ लांगूले
कुक्कुरस्य च॥करीरकोशे तालस्य पल्लवे च पयोधरे॥८९॥बंधुरं
मुकुटे पुंसि स्त्री चंगतैलकल्कयोः॥ बंधूके बधिरे हंसे त्रिषु स्याद
न्नतनम्रयोः॥९०॥बंधुरा पण्ययोषायां स्त्रियां भून्मि च सक्तुषु॥
बंधुरः शोभने नम्रे वरत्रा रज्जुकक्ष्ययोः॥९१॥भ्रमरः कामु
के भृंगे भ्रामरं मधुनि स्मृतम्॥पुंसि प्रस्तरभेदेऽथ भास्करोऽग्नौ
प्रभाकरे॥९२॥भार्यारुः शैलभेदे स्यान्मृगभेदे च तत्र च॥क्रीड
या परभार्यायां पुत्रो येनोपपादितः॥९३॥भृंगारी झिल्लिकायां

स्यात्कनकालोपुनः पुमान्॥ मत्सरा मक्षिकायांस्यान्मात्सर्येक्रो-
धयोः पुमान्॥ ९४॥ असत्यपरसंपत्तौ कृपणे चाभिधेयवत्॥ म
धुरा शतपुष्पायां मिश्रेयानगरीभिदोः॥ ९५॥ मधुकर्कटिकामेदा
मधूली यष्टिकास्रुच॥ क्लीबं वा षेपुंसि रसे तद्वत्स्वादुप्रियेन्यवत्॥ ९६
मंदरस्तुपुमान्मंथशैलेमंदारपादपे॥ वाच्यवद्बहलेमंदे मंदारः
स्यात्सुरद्रुमे॥ ९७॥ पारिभद्रेर्कपर्णेच मंदारो हस्तिधूर्तयोः॥ मं
दिरं नगरेऽगारे क्लीबं नामकरालये॥ ९८॥ मंथरः कोशफलयो
र्बोधमंथानयोः पुमान्॥ कुसुंभ्यां नद्ययोर्मंदपृथौ वक्रेभिधेयव
त्॥ ९९॥ मकरो यादसो भेदेनिधिराशिप्रभेदयोः॥ मयूरो बर्हि
चूडायामपामार्गेशिखंडिनि॥ २००॥ महेंद्रः पर्वतेशक्रे मधुद्रो
ऽलीच कामुके॥ मंदुरा वाजिशालायां शयनीयार्थवस्तुनि॥ १॥
मसूरो मसुरा वाना वेश्याव्रीहिप्रभेदयोः॥ मसूरी पापरोगेस्या
दुपधानेपुनः पुमान्॥ २॥ मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ त-
था॥ पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि॥ ३॥ मंजरी ति
लकक्रूरुमुक्तयोर्वल्लरौ द्वयोः॥ मकुरः स्यान्मुकरवद्दर्पणे बकुल
द्रुमे॥ ४॥ कुलालदंडे माठारो व्यासेऽर्कपारिपार्श्विके॥ मार्जार ओ
तौ रवद्वाशे मिहिरः सूर्यवृद्धयोः॥ ५॥ मुद्गरं मल्लिकाभेदे पुंसि लो
ष्ठादिभेदने॥ मुदिरः कामुके मेघे मुहिरः काममूर्खयोः॥ ६॥ मुर्मु
रस्तु षवह्नौ स्यान्मन्मथे रविवाजिनि॥ मृगारिः स्यात्पुंसि कंठीरव
शार्दूलयोरपि॥ ७॥ रुधिरोंगारके पुंसि क्लीबं तु कुंकुमासृजोः॥
बदरा दृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां पुमान्॥ ८॥ कार्पासस्या
स्थि बदरी कोलौ क्लीबं तु तत्फले॥ बर्चरः कुक्कुटे पुंसि शठे च बशि
रः पुमान्॥ ९॥ क्लिणि ह्री हस्तिपिप्पल्योः क्लीबंऽब्धिलवणे स्मृतः
॥ बर्बरः पामरे केशे चक्कले नीवृदंतरे॥ १०॥ फंजिकायां पुमान्
शाकभेदपुष्पभिदोः स्त्रियाम्॥ बर्करः परिहासे स्याच्छागे पुवप
शावपि॥ ११॥ बल्लुरं शाद्वलक्षेत्रे गहनौषधयोरपि॥ बल्लूरा

त्रिषु संस्कृतमांसभूकरमांसयोः ॥१२॥ वार्दरं कृष्णला बीजदक्षि
णावर्तशंखयोः ॥ वीरेककाकचिंचायां भारत्यां च नपुंसकम् ॥१३॥
वागरः स्तुगताते केमुमुक्षौ वातवेष्टके ॥ विशारदे पि शाणो पि निर्ण
ये वारके पि च ॥१४॥ वासरस्तु पुमान्नागप्रभेददिनयोरपि ॥ वा
स्करा वासितायां स्याद्वासतेयस्तु विस्त्रियाम् ॥१५॥ विष्टरः कुशमु
ष्टौ स्यादासने पि महीरुहे ॥ विस्तरो वाक्प्रपंचे स्याद्विस्तारे प्रण
ये पि च ॥१६॥ विदुरो नागरे धीरे कौरवाणां च मंत्रिणि ॥ विधुरं स्या
त्प्रविश्लेषे न द्वयोर्विकले त्रिषु ॥१७॥ रसालायां स्त्रियां विदारो ज्वलोच्छ्र
साजिदारणे ॥ विदारी शालपर्ण्यां च रोगभेदेक्षुगंधयोः ॥१८॥ वि
वरं दूषणे गर्ते विसरः प्रसरे व्रजे ॥ विस्तारो विस्तृतौ स्तंबे विका
रो विकृतौ रुजि ॥१९॥ विहारो भ्रमणे स्कंधे लीलायां सुगतालये
॥ शबरो म्लेच्छभेदे च पानीये शंकरे पि च ॥२०॥ शंबरं सलिले पुं
सि मृगदैत्यविशेषयोः ॥ शंबरी चाखुपर्ण्यां स्याच्छर्वरी यामिनी
स्त्रियोः ॥२१॥ शर्करा खंडविकृतावुपलाकर्परांशयोः ॥ शर्करान्वि
तदेशे पि रुग्भेदे शकले पि च ॥२२॥ शक्करी च्छंदसो भेदे नदीमेखल
योरपि ॥ शारीरं शोणमध्यस्थे पुलिने ददरीतटे ॥२३॥ श्वशुरः
पूज्ये स्त्री श्वश्र्वां शारीरं देहजे वृषे ॥ शार्करः स्याद्दुग्धफेने शर्करा
न्वितदेशयोः ॥२४॥ शांकरस्तु बलीवर्दे छंदोभेदे नपुंसकम् ॥ शा
र्वरं त्वंधतमसे घातुके भेद्यलिंगकम् ॥२५॥ शालारं स्याद्धस्तिनखे
सोपाने पक्षिपंजरे ॥ शाबरी भूकशिंब्यां स्यात्पुंसि पापापराधयोः
॥२६॥ रोध्रे च शांकरिः पुंसि कार्तिकेये गणाधिपे ॥ शिखरो ऽस्त्री द्रु
माग्राद्रिशृंगे पुलककक्ष्ययोः ॥२७॥ पक्कदाडिमबीजाभमाणिक्य
शकलाग्रयोः ॥ शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु ॥२८॥ शि
लिंध्रं कदलीपुष्पे कवके ना झषांतरे ॥ द्रुभेदे स्त्री तु विहगीभेदगं
डूपदीमृदोः ॥२९॥ शीकरं शरले वातस्रुतांबुकणयोः पुमान् ॥ शु
षिरं वंशादिवाद्ये विवरे पि नपुंसकम् ॥३०॥ मूषिके ना स्त्रियां गर्ते

यन्होरंधान्वितेत्रिषु॥ शृंगारः करतेनाट्यरसेचगजमंडने॥३१॥नपुं सकं लवंगेपिनागसंभवचूर्णयोः॥ संबरो दैत्यहरिणमत्स्यशैलजिनांतरे॥३२॥ नपुंसकंतुसलिलबौद्धव्रतविशेषयोः॥ संकरोऽग्निचटत्कारेसंमार्जन्यचपूजिते॥३३॥ नवदूषितकन्यायांसंकरीपुनरुच्यते॥ संस्कारः प्रतियत्नेतुभवेमानसकर्मणि॥३४॥ संस्तरः प्रस्तरेयज्ञेसंगरोयुधिचापदि॥ क्रियाकारेविषेचांगीकारेक्लीवंशमीफले॥३५॥ संसारः संभृतौसंघेसामुद्रं देहलक्षणे॥ समुद्रजेऽन्यलिंगोऽथसावित्रः शंकरे वसौ॥३६॥ सावित्री सत्यवत्पत्न्यांब्रह्मपत्न्युमयोरपि॥ सिंदूरस्तरुभेदेस्यात्सिंदूरंरक्तचूर्णके॥३७॥ सिंदूरी रोचनीरक्तचेलिकाधातकीषुच॥ सुनारस्तुशुनीस्तन्येसर्पांडकलविंकयोः॥३८॥ सुंदरी तनुभिन्नारीभिदोः स्त्रीरुचिरेऽन्यवत्॥ सैरंध्री परवेश्मस्थशिल्पकृत्स्ववशास्त्रियाम्॥३९॥ वर्णसंकरसंभूतस्त्रीमहल्लिकयोरपि॥ सौवीरं कांजिकेस्रोतोंजनेचबदरीफले॥४०॥नातुनीवृति हारिद्रं हरिद्रारंजितेत्रिषु॥नानीपवृक्षेहिंडीरः फेनवार्ताकुपूरुषे॥४१॥ ॥रचतुः॥ ॥अरुष्करोव्रणकृतित्रिषुभल्लातकेपुमान्॥भवे दभिमरोयुद्धे बधेस्वबलसाधने॥४२॥ अनुत्तरंत्रिषुश्रेष्ठेप्रतिजल्पविवर्जिते॥ अलंकारस्तुहारादावुपमादावलंकृतौ॥४३॥ अवहारः पुमांश्चोरे घूतयुद्धादिविश्रमे॥ निमंत्रणोपनेतव्यद्रव्येग्राहारव्ययादसि॥४४॥ अवतारोऽवतरणेपुष्करिण्यादितीर्थयोः॥ अवस्करोपिवर्चस्केगुह्येऽथावसरः पुमान्॥४५॥ प्रस्तावेमंत्रभेदेच वर्षणेचापिकीर्तितः॥उपलादावकूपारः कूर्मराजेमहोदधौ॥४६॥ असिपत्रः खङ्गकोशेपुमानिक्षौचनारके॥ भवेदश्वतरो नागांतरे वेगसरेपिच॥४७ अभिहारोऽभियोगेचचौर्येसन्नहनेपिच॥४८॥ अग्निहोत्रोग्निहविषोरर्धचंद्रो नखक्षते॥४८॥ गलहस्ते बाणभेदे कृष्णात्रिहृतितुस्त्रियाम्॥ आडंबरस्तूर्यपक्ष्मसंरंभेगजगर्जिते॥४९॥ आत्मवीरः प्राण

पतिश्यालकेचविदूषके॥ इंदीवरंकुवलये शतावर्यांतुयोषिति॥५०
उदुंबरस्तु देहल्यांप्लक्षभेदेचषंडके॥कुष्ठभेदेपिचपुमांस्ताम्रात्तु
स्यान्नपुंसकम्॥५१॥उपह्वरंसमीपेस्यादेकांतेपिनपुंसकम्॥
उद्दंतुरस्त्रिषूत्तुंगेकरालोत्कटदंतयोः॥५२॥उपकारश्चोपकृतौ
विकीर्णकुसुमादिषु॥औदुंबरः श्राद्धदेवेरोगभेदेनपुंसकं॥५३
॥अथकर्मकरोभृत्येवेतनाजीविनित्रिषु॥ कीनाशेपुंसिमूर्च्छायां
बिंबिकायामपिस्त्रियाम्॥५४॥ कलिकारस्तुधूम्याटेकरंजेपीत
मस्तके॥ कर्णिकारःपुमानारग्वधेचद्रुमोत्पले॥५५॥ कर्णपूरः
शिरीषेस्यान्नीलोत्पलवसंतयोः॥ करवीरःकृपाणेस्याद्दैत्यभेदा
श्वमारयोः॥५६॥ करवीर्यदितिश्रेष्ठगवीपुत्रवतीषुच॥ कदंभ
राप्रसारण्यांरोहिण्यांगजयोषिति॥५७॥ कलंबिकायांगोलायां
वर्षाभूमूर्वयोरपि॥ कादंबरस्तुदध्यग्रेमद्यभेदेनपुंसकम्॥५८
॥स्त्रीवारुणीपरभृताभारतीशारिकासुच॥ कालंजरोयोगिचक्रे
मेलकेभैरवेगिरौ॥५९॥कुंभकारीकुलथ्यांचपुल्लिंगोघटकारके
॥ कृष्णसाराशिंशपायांपुंसिस्नुह्यांमृगांतरे॥६०॥ गिरिसारःपु
मांल्लोहेरंगेमलयपर्वते॥ घनसारस्तुकर्पूरेदक्षिणावर्तपारदे॥
६१॥ चराचरंवाच्यलिंगमिंगेजगतिनद्वयोः॥ चर्मकारःपादुकृ
तिस्त्रियांचर्मकषौषधौ॥६२॥अथचक्रधरोऽजेऽहौनात्रिषुग्राम
जालिनि॥ चित्राटीरोविधौभालसंकितयेनतत्रच॥६३॥ घटाक
र्णोपहारायहृतच्छागास्त्रबिंदुषु॥ तालपत्रंतुताटंकेरंडायांताल
पत्र्यपि॥६४॥ तुंगभद्रानदीभेदेस्त्रियांपुंसिनदोत्कटे॥ तुंडिकेरी
तुकार्पास्यांबिंबिकायामपिस्त्रियाम्॥६५॥ तुलाधारस्तुलाराशौ
पुंसिवाणिजकेत्रिषु॥अथतोयधरोमुस्तासुनिषण्णौषधौघनौ
॥६६॥ दंडयात्रादिग्विजयेसंपानवरयात्रयोः॥अथोदेशपुरंदे
शेपूरेपिस्यान्नपुंसकम्॥६७॥ दंडधारःपुमान्पृथ्वीनाथेप्रेताधि
पेपिच॥ दिगंबरःस्यात्क्षपणेनग्नेतमसिशंकरे॥६८॥ दुरोदरं

द्यूतभेदे द्यूतकृत्पणयोः पुमान्॥ देहयात्रा यमपुरीगमने भोजने
ऽपि च॥६९॥ हैमातुरो जरासंधवारणाननयोः पुमान्॥ धराधरो
हरौ शैले धाराधरोऽसिमेघयोः॥७०॥ धाराङ्कुरस्तु नाशीरे शीक
रेऽपि घनोपले॥ धार्तराष्ट्रोऽसितास्यांघ्रिहंसे कौरवसर्पयोः॥७१
धुंधुमारः शक्रगोपे गृहधूमे पदालिके॥ धुरंधरो धवद्रौ ना वाच्य
लिंगस्तु धूर्वहे॥७२॥ धृतराष्ट्रः सराज्ञि स्यान्नागक्षत्रियभेदयोः
धृतराष्ट्री हंसपत्न्यां नभश्चरो विहंगमे॥७३॥ विद्याधरे घनवाते
निशाचरस्तु रक्षसि॥ फेरुपेचकसर्पेषु पांशुलायां निशाचरी॥
७४॥ निषद्वरस्तु जंबाले निशायां तु निषद्वरा॥ नीलांबरः प्रलंब
घ्ने कौणपे च शनैश्चरे॥७५॥ भवेत्परिकरः संघे पर्यंकपरिवारयोः
॥प्रगाढगात्रिकाबंधे समाचारविवेकयोः॥७६॥ अथ पक्षचरश्चं
द्रे पृथक्चारिगजेऽपि च॥ भवेत्प्रतिसरो मंत्रभेदे माल्ये च कंकणे॥
७७॥ व्रणशुद्धौ च मूपृष्ठे पुंसि न स्त्री तु मंडने॥ आरक्षे करसूत्रे च नि
योज्ये त्वन्यलिंगकः॥७८॥ भवेत्परिसरो मृत्यौ विधावपि च पुंस्य
यम्॥ परंपरो मृगभेदे प्रपौत्रे तनयस्य च॥७९॥ परंपरा परिपा
ट्यां हिंसासंतानयोरपि॥ पयोधरः कोषकारे नालिकेरे स्तनेऽपि च
॥८०॥ कशेरुमेघयोः पुंसि प्रभाकरोऽग्निसूर्ययोः॥ प्रतीहारो द्वा
रि द्वाःस्थे द्वाःस्थितायां तु योषिति॥८१॥ परिवारः परिजने खड्गको
षे परिच्छदे॥ पारावारः समुद्रे ना तटद्वये नपुंसकम्॥८२॥ पात्रटी
रस्तु पुल्लिंगो युक्तव्यापारमंत्रिणि॥ लोहकांस्यरजत्यात्रेसिंघाणेपा
घकेऽपि च॥८३॥ पारिभद्रस्तु मंदारे निंबद्रौ देवदारुणि॥ पीतांबरस्तु
शैलूषे पुंसि कैटभसूदने॥८४॥ पीतसारो मलयजे गोमेदकम
णावपि॥ पूर्णपात्रं वस्तुपूर्णपात्रे वर्द्धापकेऽपि च॥८५॥ बलभ
द्रा त्रायमाणा कुमार्योः पुंसि सीरिणि॥ ब्रह्मपुत्रः क्षेत्रभेदे नदभे
दे च पुंस्ययम्॥८६॥ बकनक्रस्तु पिशुने तथैव बकपक्षिणि॥ बा
र्वटीरो रंगआम्रास्थ्यंकुरे गणिकासुते॥८७॥ वारकीरस्तु पुंसि

स्याद्दूरग्राहिणि वाडवे॥ पूकायांरोलरोधिन्यां नीराजनहयेपिच॥
८८॥ बिंदुतंत्रः पुमान्शारिफलकेचतुरंगके॥ वीरभद्रोऽश्वमेधा
श्वे वीरश्रेष्ठे चवीरिणे॥ ८९॥ स्याद्धीरतरं वीरणे वीरश्रेष्ठे शवेचना
॥ महावीरस्तु गरुडे शूरे सिंहमखवालये॥ ९०॥ वज्रेश्वेततुरंगेच
संचानविहगेपिच॥ महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे॥
९१॥ मणिच्छिद्रातुमेदायामृषभाख्यौषधेपिच॥ महेश्वरो महा
देवे कथितो धीश्वरेपिच॥ ९२॥ मृगनेत्रा रात्रिभेदे विशेषेयोषित
स्तथा॥ रथकारस्तु माहिष्यात्कारणीजेच तक्षणि॥ ९३॥ रागसूत्रं
तुलासूत्रे पट्टसूत्रे नपुंसकम्॥ लंबोदरः स्यादुद्धाने गणानामधि
पेपिहि॥ ९४॥ लक्ष्मीपुत्रः स्तु पुल्लिंगः कामदेवेतुरंगमे॥ व्यवहा
रो द्रुभेदे स्यान्यासेपिचगणस्थितौ॥ ९५॥ अथव्यतिकरः पुंसि व्य
सनव्यतिषंगयोः॥ वातपुत्रो महाधूर्ते भीमसेने हनूमति॥ ९६॥
विश्वंभरोच्युते शक्रे पुंसिविश्वंभरा भुवि॥ विश्वकद्रुस्त्रिषु खलेध्वा
नाख्ये ढशुनोः पुमान्॥ ९७॥ विभावरी निशारात्र्योः कुट्टन्यांचकयो
षिति॥ विवादवस्त्ररंड्यांचविभाकरोग्निसूर्ययोः॥ ९८॥ वीतिहो
त्रोऽनलेऽर्केच शलपत्रः शिखंडिनि॥ दार्वाघाटे सारसेच कमलेतुन
पुंसकम्॥ ९९॥ शतावरीतु शक्र्यांस्यादिंदीवर्यामपिस्त्रियाम्॥ शि
शुमारोंबुसंभूतजंतौतारात्मकाच्युते॥ ३००॥ भवेत्सहचरोझिंट्यां
सूत्योरनुचरेत्रिषु॥ समुद्रारुः पुमान्ग्राहे सेतुबंद्धेतिमिंगिले॥ १॥
संप्रहारोगतौयुद्धे स्थिरदंष्ट्रो भुजंगमे॥ धिराहाकृतिविष्णौच-
कुसुमारो मृदौत्रिषु॥ २॥ पुंसिपुंड्राभिधाने क्षौ सूत्रधारः शचीप
तौ॥ नानाधंतरसंचारिपारिपात्रप्रभेदयोः॥ ३॥ ॥ रपं
च॥ ॥ तमालपत्रं तापिच्छे तिलके पत्रकेपिच॥ तालीश
पत्रं भूम्यामलकीतालीशयोः स्मृतम्॥ ४॥ स्यात्पांशुचामरः पुं-
सिदूर्वान्वितलटीभुवि॥ वर्द्धापके प्रशंसायां पुरोटौ धूलिगुच्छके
॥ ५॥ स्यात्त्यादन्चतुरश्छागे सेकते पिप्पलेपिच॥ करकेपरदोषे

कभवरूपुरुषेपिच॥६॥पीतकावेरमित्येतत्कुंकुमेपित्तलेपिच॥
स्याद्राजबदरंरक्तमेलकेलवणेपिच॥७॥वस्वौकसारेंद्रपुरे
कुवेरनलिनीपुरोः॥धिग्प्रतीसार उद्दिष्टःकौकृत्येनुशयेरुषि॥८॥
भवेत्समभिहारस्तुपौनःपुन्यभृशार्थयोः॥सर्वतोभद्र इत्युक्तःका
व्यचित्रेगृहांतरे॥९॥निंबेनासर्वतोभद्रागंभारीनटयोषितोः॥
॥ ॥इतिरांतवर्गः॥ ॥१८५३॥लैकम्॥ ॥लःश्ल
क्ष्णेलातुदानेस्याद्ग्रहणेपिनिगद्यते॥लीश्लेषणेचचपलेग्लौर्धर
ण्यांनिशापतौ॥१॥ ॥लद्विः॥ ॥अम्लोरसस्यभेदे
स्यादम्लीचांगेरिकौषधौ॥अलिःसुरापुष्पलिहोःपुंस्यालिर्विशदा
शये॥२॥ विषुस्त्रियांवयस्यायांसेतौपंक्तौचकीर्तिता॥आलुर्गलंति
कायांस्त्रीक्लीबंमूलेचभेलके॥३॥ इला कलत्रेसौम्यस्यधरित्र्यांगवि
वाचिच॥ओल्लस्तुभूरणेपुंसिस्यादार्द्रेवाच्यलिंगकः॥४॥कलास्या
न्मूलरैवृद्धौशिल्पादावंशमात्रके॥षोडशांशेचचंद्रस्य कलनाकल
मानयोः॥५॥कलंशक्रेत्रिषजीर्णेनाव्योक्तमधुरध्वनौ॥कलिः
स्त्रीकलिकायांनाभूराजिकलहेयुगे॥६॥कालोमृत्यौमहाकाले
समयेयमकृष्णयोः॥कालातुकृष्णात्रिवृतामंजिष्ठानीलिकासुच
॥७॥काली गौर्याक्षारकीटेकालिकामातृभेदयोः॥कीलोलेशेद्व
योःशस्त्रज्वालाकफोणिशंकुषु॥८॥कुलंजनपदेगोत्रेसजातीय
गणेपिच॥भवनेचतनौक्लीबंकंटकार्यौषधौकुली॥९॥अथकू
लंतटेस्तूपेसैन्यपृष्ठतडागयोः॥कोलंकोलिफलेक्लीबेपिप्पली
चव्ययोःस्त्रियाम्॥१०॥नाकंपालेशनौचित्रेवराहेलंगभेलके॥खलं
भूस्थानकल्केषुनीचक्रूराधमेत्रिषु॥११॥खल्लःपक्षिप्रभेदेस्या
द्वर्तेचर्मणिचातके॥खल्लीतुहस्तपादावमर्दनाख्यरुजिस्त्रियाम्
॥१२॥खिलमप्रहतेक्लीबंसारसंक्षिप्तवेधसोः॥गुडःसर्जरसेकं
ठेगुलःस्याद्देक्षवेपुमान्॥१३॥गुलीतुगुटिकारोगभिदोःस्तुर्द्धा
गुलीस्मृता॥गोलागोदावरीसख्योःकुनटीदुर्गयोःस्त्रियां॥१४॥

पत्रांजनेमंडलेचालिंजरेबालखेलने॥चल्लालक्ष्म्यांपुमान्कंपेकं
पनेत्वभिधेयवत्॥१५॥चिल्लाःपुमान्क्लिन्ननेत्रेक्लिन्नाक्षेप्यभिधे
यवत्॥आततायिनितत्प्रोक्तश्चिल्लीस्यात्स्कद्वास्तुके॥१६॥चुल्ली
चितायामुद्धानेचोलःकूर्पासकेपुमान्॥नपुंसकंतुवसनेछल्लं
स्वल्कितशाठ्ययोः॥१७॥छल्लीवीरुधसंतानेवल्कलेकुसुमांतरे॥
जलंगोकलनेनीरेह्रीबेरेप्यन्यवज्जडे॥१८॥जालंगवाक्षआना
येक्षारकेदंभवृंदयोः॥जालोनीपद्रुमेजालीपटोलिकौषधौस्त्रिया
म्॥१९॥झल्लास्यादातपस्योर्मौदुहितर्यपिचस्त्रियाम्॥झिल्लीची
र्यामपरूषोर्वर्त्यामुद्वर्तनांशके॥२०॥तलंस्वरूपेनूध्वोंस्त्रीक्लीबं-
ज्याघातवारणे॥काननेकार्यबीजेचपुंसितालमहीरुहे॥२१॥च
पेटेचत्सरौतंत्रीघातेसव्येनपाणिना॥तल्लीतरुण्यांतल्लस्तुजला
धारांतरेपुमान्॥२२॥तालःकरतलेंगुष्ठमध्यमाभ्यांचसंमिते॥गी
तकालक्रियामानेकरास्फालेद्रुमांतरे॥२३॥वाद्यभांडेचकांसस्य
त्सरौतालीजटौषधौ॥क्लीबंतुहरितालेस्यात्तुलासादृश्यमानयोः
॥२४॥गृहाणांदारुबंधायपीठिकायामपीष्यते॥राशौपलशतेभां
डेतुलंस्याद्ब्रह्मदारुणि॥२५॥आकाशेथपिचौनस्त्रीदलमुत्सेधखं
डयोः॥शस्त्रीच्छदेप्यषड्द्व्येपत्रेप्यथदुलिःस्त्रियाम्॥२६॥कमठ्यां
नामुनौदोलामील्यांयानांतरेपिच॥नलःपोटगलेराज्ञिपितृदेवे
कपीश्वरे॥२७॥कमलेपिकुनल्यांचक्रमेणक्लीबयोषितोः॥नाला
ननापद्मदंडेनालीशाककडंबके॥२८॥नीलंतुनीलीरक्तेनानि
ध्यद्रिवानरांतरे॥नीलीरुग्भेदनीलिन्योःपल्लसुन्मानमांसयोः॥
२९॥पल्ल्यस्त्वग्रामकुट्टिन्योःपल्लुःस्थूलकुसूलके॥पालिःकर्णल
ताग्रेऽश्रौपंक्तावंकप्रभेदयोः॥३०॥छात्रादिदेयेस्त्रीपालीयूकास
श्मश्रुयोषितोः॥पिल्लःपुमान्क्लिन्ननेत्रेक्लिन्नाक्षेपुनरन्यवत्॥३१॥
पीलुःपुमान्प्रसूनेस्यात्परमाणौमतंगजे॥अस्थिखंडेचतालस्य
कांडपादप्रभेदयोः॥३२॥पुलःस्यात्पुलकेपुंसिविपुलेप्यन्यलिंग

कः॥ फलं जातीफले सस्ये हेतूत्थे व्युष्टिलाभयोः॥ ३३॥ त्रिफलायां च कक्कोले प्रियंगौ तु फली स्मृता॥ फालः पुंसि महादेवे फालिं दीभेदने पि च॥ ३४॥ क्लीबं सीरोपकरणे त्रिषु कार्पासवाससि॥ बलिर्दैत्यप्रभेदे च करचामरदंडयोः॥ ३५॥ उपहारे पुमान् स्त्री तु जरयाश्लथचर्मणि॥ गृहदारुप्रभेदे च जठरावयवेपि च॥ ३६॥ बलं गंधरसे रूपे स्थामनि स्थौल्यसैन्ययोः॥ पुंस्यन्हलायुधे दैत्यप्रभेदे वायसेपि च॥ ३७॥ बलयुक्तेऽन्यलिंगः स्याद्वाला लंके तु योषिति॥ वल्ली स्यादजमोदायां व्रततयामपि योषिति॥ ३८॥ बालो नाकुंतले श्वस्य करिणश्चापि वालधौ॥ नालिकेरे हरिद्रायां मल्लिकाभिद्यपि स्त्रियाम्॥ ३९॥ वाच्यलिंगोर्भके मूर्खे न्हीबेरं तु नपुंसकम्॥ अलंकारांतरे मध्ये बालीवाला त्रुटिस्त्रियोः॥ ४०॥ वेला कालेच सीमायामब्धेः कूलविकारयोः॥ अक्लिष्टमरणे रागे ईश्वरस्य च भोजने॥ ४१॥ भल्लः स्यात्पुंसि भल्लूके शस्त्रभेदे तु न द्वयोः॥ भल्ला तक्यां स्त्रियां भल्ली भालं तेजो ललाटयोः॥ ४२॥ भेलः प्लवे मुनौ पुंसि भीरावज्ञे च वाच्यवत्॥ मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्॥ ४३॥ मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि॥ माला क्षेत्रे स्त्रियां पुष्पस्रजोर्जात्यंतरे तु मान्॥ ४४॥ मालुः पत्रलतानार्योः स्त्रियां मूलं शिफाद्ययोः॥ मूलवित्तंति के वा ना मेला स्यान्मेलके मसौ॥ ४५॥ मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्॥ ना शोकद्रौ स्त्रियां भूमौ लीला केलिविलासयोः॥ ४६॥ शृंगारभावचेष्टायां लोलः स्याद्वाच्यलिंगकः॥ सतृष्णेचंचले लोला जिव्हाकमलयोस्त्रियाम्॥ ४७॥ व्यालो दुष्टगजे सर्पे श्वापदेऽमान्यवत्खले॥ बिलं छिद्रे गुहायां च पुमांस्तु नैः श्रवो हये॥ ४८॥ शलः स्फृशलले पुंसि भृंगिसेनाभिदोर्विधौ॥ शालुः कषायद्रव्ये स्याच्चोरकाख्यौषधौ पुमान्॥ ४९॥ शालिस्तु कलमादौ च गंधमार्जारके पुमान्॥ शाखा तु स्कंधशाखायां गृहगेहैकदेशयोः॥ ५०॥ नाझ्ययेशिलमुंछे स्यादूंडूपद्यां शिलीमता

स्तंभशीर्षे शिलाशिल्यो शिला तु प्रस्तरे मता ॥ ५१ ॥ तथा मनःशिलायांच द्वारधस्थित दारुणि ॥ शीलं स्वभावे सद्वृत्ते शुक्लो योगांतरे सिते ॥ ५२ ॥ नपुंसकं तु रजते शूलोऽस्त्री रोग आयुधे ॥ मृत्युकेतनयो गेषु शूला स्यात्पण्ययोषिति ॥ ५३ ॥ शूलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके ॥ सालः पादपमात्रे स्यात्प्राकारे सर्जपादपे ॥ ५४ ॥ स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलोखयोः ॥ स्थूलं कूटेऽथ निष्प्रज्ञे पीवरे प्यन्यलिंगकः ॥ ५५ हालो हले पुमान्हाला मदिरायांच योषिति ॥ हेला स्त्रियामवज्ञायां विलासे वरयोषिताम् ॥ ५६ ॥ ॥ लत्रिः ॥ ॥ अनलो वसुभेदे ग्ना वनिलो वसुवातयोः ॥ अर्गला त्रिषु कल्लोले दंडेऽतरकपाटयोः ॥ ५७ ॥ अरालः कुटिले सर्जरसे समददंतिनि ॥ अंगुली करशाखायां कर्णिकायां गजस्य च ॥ ५८ ॥ अचला वसुधायां स्यादचलः शैलकीलयोः ॥ अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु ॥ ५९ ॥ अंजलिस्तु पुमान्हस्तसंपुटे कुडवेपि च ॥ अवेलस्त्वपलापे स्यादवेला पूगचर्वितं ॥ ६० ॥ आभीलं नद्योः कृच्छ्रे वाच्यलिंगं भयानके ॥ इल्वला तारकाभेदे नाभेदे दैत्यमत्स्ययोः ॥ ६१ ॥ उत्पली तु पचपर्ण्यां क्लीबं कुष्ठमसूलयोः ॥ उपलः प्रस्तरे रत्ने शर्करायां तु योषिति ॥ ६२ ॥ उज्वलो दीप्तश्रृंगारविशदेषु विकाशिनि ॥ उत्फुल्लं करणे स्त्रीणां मुक्ता लेपि विकस्वरे ॥ ६३ ॥ उत्तालः उत्कटे श्रेष्ठे विकराले सुवंगमे ॥ कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे ॥ ६४ ॥ मृगभेदे तु कमलः कमला श्री वरस्त्रियोः ॥ कपिला रेणुकायांच शिंशपागोविशेषयोः ॥ ६५ ॥ पुंडरीककरिण्यां स्त्री वर्णभेदे त्रिलिंगकम् ॥ नानले वासुदेवे च मुनिभेदे च कुक्कुरे ॥ ६६ ॥ कंबलो नागराजे स्यात्सास्ना प्रावारयोरपि ॥ कृमावप्युत्तरासंगे सलिले तु नपुंसकम् ॥ ६७ ॥ करालो दंतुरे तुंगे भीषणे चाभिधेयवत् ॥ ससर्जरसतैले ना क्लीबं कृष्णकुठरके ६८

कदलं त्रिषु कपाले स्युपरागे नवांकुरे॥ कलध्वनौ कंदली तु मृग
गुल्मप्रभेदयोः॥६९॥ कदला कदली पृश्न्यां कदली कदली पुनः॥
रंभावृक्षेऽथ कदली पताकामृगभेदयोः॥७०॥ कदला डिंबिका
यां च शाल्मली भूरुहेपि च॥ कपालोऽस्त्री शिरोस्थ्नि स्याद्घटादेः
शकले व्रजे॥७१॥ कंठीला तु द्वयोर्द्रोणीप्रभेदे नाक्रमेलके॥ क
ल्लोलः पुंसि हर्षे स्यादुल्लोले वैरिणोरपि॥७२॥ कामला रोगभेदे
वा नाना मरुवसंतयोः॥ कामुके वाच्यलिंगोथ कालोलं नरकांतरे
॥७३॥ नाकुलाले द्रोणकाके विषभेदे तु न स्त्रियाम्॥ काहला
वाद्यभांडस्य भेदे चाप्सरसां भिदि॥७४॥ काहली तु तरुण्यां स्यात्
काहलश्चरणायुधे॥ शब्दमात्रेपि पुल्लिंगस्त्रिषु शुष्के भृशे रवले॥
७५॥ किट्टालः पुंसि ताम्रस्य कलशे लोहगूथके॥ कीलालं रुधि
रे तोये कुशलः शिक्षिते त्रिषु॥७६॥ क्षेमे च सत्कृते चापि पर्यासो
च नपुंसकम्॥ कुवलं चोत्पले मुक्ताफलेपि बदरीफले॥७७॥ कु
ड्मलो मुकुले पुंसि नर्हयो नरकांतरे॥ कुटिला नगरे पापे स्त्री भु
ग्ने वाच्यलिंगकः॥७८॥ कुंतलश्चषके बाले जवे पुंभूम्नि नीवृति॥
कुलालः कुक्कुभे कुंभकारे स्त्री त्वंजनांतरे॥७९॥ कुंभिलः शाल
मीने च चौरे श्लोकार्थचौरयोः॥ कुद्दालः स्यात्तु माभूमिदारणे यु
गपत्रके॥८०॥ कुचेला बिन्दुपर्ण्यां स्त्री वाच्यवत्तु कुवाससि॥ कु
लूलं शंकुसंकीर्णश्वभ्रे ना तु तुषानले॥८१॥ कुंडलं कर्णभूषायां
पाशेपि वलयेपि च॥ कांचनद्रुगुडूच्योः स्त्री केवलः कुहने पुमान्॥
८२॥ नपुंसकं तु निर्णीते वाच्यवत्त्वेककृत्स्नयोः॥ केवलो ज्ञानभे
देथ कोमलं मृदुले जले॥८३॥ कोहलो वाद्यभेदे स्यान्नाट्यशा
स्त्रप्रवक्तरि॥ ग्रंथिलस्तु करीरद्रौ विकंकततरौ पुमान्॥८४॥
सग्रंथौ त्रिषु गंधाली भद्रशाठ्योश्च योषिति॥ गरलं तृणपूले च
विषे माने नपुंसकम्॥८५॥ गोपालो नृपगोपेशौ गोकुले मुसले
हले॥ गोरिलस्तु पुमान्लोहचूर्णे स्याद्गौरसर्षपे॥८६॥ चपलः

पारदेमीनेचोरकेप्रस्तरांतरे॥ चपलाकमलाविद्युत्पुंश्चलीपिप्पलीषु च॥८७॥ नपुंसकंतु शीघ्रेस्यादाच्यवत्तरलेचले॥ चत्वालो होमकुंडेस्यात्पुंसि दर्भेपिदृश्यते॥८८॥ चंडिलःपुंसिवास्तूकशाकेभर्गेचनापिते॥ चंचलाचतडिल्लक्ष्म्योश्चंचलः कामुकेनिले॥८९॥ चूडालातूच्चटायांस्त्रीचूडावतिचवाच्यवत्॥ छगलंनीलवस्त्रेनाच्छागेस्त्रीवृद्धदारके॥९०॥ जंबालःशैवलेपंकेजगलोमदनद्रुमे॥ मेदकेपिष्टमद्येचपुंसिधूर्तेऽभिधेयवत्॥९१॥ जटिलापिप्पलीमांस्योर्जटायुक्तेतुवाच्यवत्॥ जंगलंनिर्जनस्थानेत्रिलिंग्यांपिशितेस्त्रियाम्॥९२॥ जंभलःपुंसिजंबीरेबुद्धदेवांतरेपिच॥ जंबूलस्तुपुमान्जंबूविटपेकेतकच्छदे॥९३॥ जांगलीविषविद्यायांजांगलंजालिनीफले॥ जांगलीशूकशिंब्यांस्त्रीजांगलोनाकपिंजले॥९४॥ तरलंचंचलेपिद्भेभास्करेपित्रिलिंगकम्॥ हारमध्यमणौपुंसियवागूसुरयोःस्त्रियाम्॥९५॥ तंडुलःस्याद्विडंगेचधान्यादिनिकरेपुमान्॥ तमालस्तिलकेखड्गेतापिच्छेवरुणद्रुमे॥९६॥ तांबूलीनागवल्ल्यांस्त्रीक्रमुकेतुनपुंसकम्॥ तातलोरुजिपाकेचलोहकूटेमनोजवे॥९७॥ तुमुलःकलिवृक्षेनाक्लीबंतुरणसंकुले॥ तैतिलोगंडकेपुंसिक्लीबंतुकरणांतरे॥९८॥ दुकूलंश्लक्ष्णवस्त्रेस्यात्क्षौमेचधवलागवि॥ वृषश्रेष्ठेपुमान्वाच्यलिंगःशुक्लेचसुंदरे॥९९॥ नकुलीकुक्कुटीमांस्योःपशौपांडवयोःपुमान्॥ नाकुलीकुक्कुटाकंदेरास्नायांचविकेस्त्रियाम्॥१००॥ नाभीलंवंक्षणेनार्याःकृच्छ्रगर्भांडयोरपि॥ निचूलस्तुनिचोलेस्याद्विज्जलाख्यमहीरुहे॥१॥ निर्मलंस्यात्तुनिर्माल्येवाभ्रकेचनपुंसकम्॥ मलहीनेऽन्यलिंगंचनिस्तलंवर्तुलेचले॥२॥ निष्कलंतुकलाभ्रष्टेनष्टवीर्येचवाच्यवत्॥ नेपालीतुनवमालीकुनटीसुवहासु च॥३॥ पललंतिलचूर्णेचपंकेमांसेनपुंसकम्॥ नाराक्षसे

ऽथ पटलं पिटके च परिच्छदे ॥४॥ छदिर्दृग्रोगतिलके क्लीबं व्रजे
पुनर्नवा ॥ प्रतलं पातालभेदे ततांगुलिकरे पुमान् ॥५॥ पटोलं
वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति ॥ प्रवालोऽस्त्री किसलये-
वीणादंडे च विद्रुमे ॥६॥ पांचाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि
नीवृति ॥ पांसुलः पुंश्चले शंभोः खट्वांगे स्त्र्यसतीभुवोः ॥७॥ पाक
लं कुष्ठभेषज्ये पुंसि स्यात्कुंजरज्वरे ॥ पाचालं पाचने नाऽग्नौ वाध
नद्रव्यवातयोः ॥८॥ पाटला पाटलोऽस्त्री स्यादस्य पुष्पे पुनर्नना
॥ आशुधान्ये पुमान्श्वेतरक्तवर्णेपि वाच्यवत् ॥९॥ पातालं ना
गलोके स्याद्विवरे वडवानले ॥ पाताली वागुरायां स्यान्नारी पात्र
प्रभेदयोः ॥१०॥ पिप्पलं सलिले वस्त्रछेदभेदे च नातरौ ॥ निरंशु
के पक्षिभेदे कणायां पिप्पली स्मृता ॥११॥ पिच्चुलो झबुकेपि स्या
दिज्जले जलवायसे ॥ पिंगलो नागभिद्रुद्रचंडांशुपारिपार्श्विके ॥
१२॥ निधिभेदे कपावग्नौ पुंसि स्यात्कपिलेऽन्यवत् ॥ स्त्रियां वेश्यावि
शेषे च करिण्यां कुमुदस्य च ॥१३॥ पित्तला तोयपिप्पल्यां स्त्र्यन्य
वत्पित्तसंयुते ॥ क्लीबं तु तैजसद्रव्ये पिच्छलो विज्जिनेऽन्यवत् ॥
॥१४॥ स्त्री पोतिकाशिंशपयोः शाल्मलीसिंधुभेदयोः ॥ पुद्गलः
सुंदराकारे त्रिषु पुंस्यात्मभेदयोः ॥१५॥ पेशलो रुचिरे दक्षे फेनि
लोऽरिष्टपादपे ॥ नासफेने त्रिषु क्लीबं कोलीमदनयोः फले ॥१६
बहुला नीलिकायां स्यादेलायां गवि योषिति ॥ कृत्तिकासु स्त्रियां भू
म्नि विहायसि नपुंसकम् ॥१७॥ पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्रा
ज्यकृष्णयोः ॥ वरला वारला चापि गंधोली हंसकांतयोः ॥१८॥
वार्दलं दुर्दिने मेलानंदायां वार्दलः स्मृतः ॥ मंगला सितदूर्वाया
मुमायां पुंसि भूमिजे ॥१९॥ नपुंसकं तु कल्याणे सर्वार्थरक्षणेपि
च ॥ मंडलं परिधौ कोठे देशे द्वादशराजके ॥२०॥ क्लीबेऽथ निवहे-
बिंबे त्रिषु पुंसि तु कुक्कुरे ॥ मंजुलं त्रिषु मंजौ ना जलरंकौ नपुंसक
म् ॥२१॥ जलांचले निकुंजे च महिला फलिनी स्त्रियोः ॥ मातुलो

ग्रीहिभिन्मात्स्याभ्रोश्वमदनद्रुमे ॥ २२ ॥ धुस्तूरे मातुलो वंदिचौरे
चयाहरोगयोः ॥ मुसलं स्यादयोग्रे तु पुंनपुंसकयोः स्त्रियाम् ॥ २३
॥ तालमूल्यामाखुपर्णीगृहगोधिकयोरपि ॥ मृणालं नलदे क्ली
बं स्त्रीनपुंसकयोर्बिसे ॥ २४ ॥ मेखला खड्गबंधे स्यात्कांचीशैलनि
तंबयोः ॥ यमलं युगले क्लीबे यमली चोटिकाद्वये ॥ २५ ॥ रसाला
रसना दूर्वाविदारीमार्जितासु च ॥ रसालं सिल्हके बोले रसाल-
श्चेक्षुचूतयोः ॥ २६ ॥ रामिलो रमणे कामे लांगुलं पुच्छशेफसोः ॥
लांगली तोयपिप्पल्यां क्लीबं तु कुसुमांतरे ॥ २७ ॥ गोदारणे तृणरा
जगृहदारुविशेषयोः ॥ लोहलः शृंखलाचार्ये ऽव्यक्तवाजिनि च त्रि
षु ॥ २८ ॥ वंजुलः पुंसि तिनिशवेतसाशोकयोरपि ॥ वंडालो युद्धभे
दे च नौकायां च खनित्रके ॥ २९ ॥ वातूलः पुंसि वात्यायां वाच्यवन्मा
रुतासहे ॥ वामिलो दांभिके वामे त्रिषु स्याद्विमला स्त्रियाम् ॥ ३० ॥
शातलायां भुवो भेदे निर्मले त्वभिधेयवत् ॥ विपुलः पृथुले गाधे
मेरुपश्चिमभूधरे ॥ ३१ ॥ विदुलस्तु पुमानंबुवेतसे वेतसेपि च ॥
बिडालो नेत्रपिंडे स्याद्वृषदंशकके पुमान् ॥ ३२ ॥ विशाला त्विंद्र
वारुण्यामुज्जयिन्यां तु योषिति ॥ मृगपक्षिभिदोः पुंसि पृथुले त्व
भिधेयवत् ॥ ३३ ॥ वृषलो गृंजने शूद्रे चंद्रगुप्ते च राजनि ॥ शकलं
त्वचि खंडे स्याद्रागवस्तुनि वल्कले ॥ ३४ ॥ शंबलोऽस्त्री संबलव
त्कूलपाथेयमत्सरे ॥ शयालुः स्यादजगरे निद्राशीले च कुक्कुरे ॥
३५ ॥ श्रद्धालुर्दोहदिन्यां स्त्री श्रद्धायुक्ते तु वाच्यवत् ॥ श्यामलः
पिप्पले कृष्णे शार्दूलो राक्षसांतरे ॥ ३६ ॥ व्याघ्रे च पशुभेदे च सत्त
मे तूत्तरस्थितः ॥ शाल्मलिस्तरुभेदे स्याद्द्वीपभेदेपि च द्वयोः ॥
३७ ॥ श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम् ॥ शीवलं
स्याच्छैवाले शैलेये च नपुंसकम् ॥ ३८ ॥ शीतलं पुष्पकाशीशे शै
लजे मलयोद्भवे ॥ पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिंगकम् ॥
३९ ॥ शृगालो वंचके दैत्यभेदे नाडमरे स्त्रियाम् ॥ शृंखला पुंस्क

दीवस्त्रबंधेच्चनिगडेत्रिषु॥४०॥शैवलंपद्मकाष्ठेस्याच्छैवालेपि
पुमानयम्॥शौष्कलःशष्कमांसस्यपणकेपिशिताशिनि॥४१॥षं
डालीतैलमानेचसरसीकामुकस्त्रियोः॥सरलःपद्मकाष्ठेनाऽथो
दारावक्रयोस्त्रिषु॥४२॥संकुलंत्रिषुविस्पष्टवाचिव्याप्तेऽथसस
ला॥वनमालीच्चर्मकषागुंजासुपाटलोस्त्रियाम्॥४३॥संधिला
तुसुरुंगायांनदीमंदिरयोःस्त्रियाम्॥सिध्मलामत्स्यविकृतौवाच्य
वत्तुकिलासिनि॥४४॥सुवेलःप्रणतेशांतेत्रिषुनापर्वतांतरे॥स्थू
लस्थोट्टालिकाबंधनागलोकप्रभेदयोः॥४५॥हिंगुलोवर्णकद्रव्ये
नाभंठास्यात्तुहिंगुली॥हेमलःस्वर्णकारेस्यात्ककलासेशिलां
तरे॥४६॥ ॥लचतुः॥ ॥अक्षमालाऽक्षसू
त्रेस्यादरुंधत्यामपिस्त्रियाम्॥अंकपालीपरीरंभेधात्रीवेदिकयोः
स्त्रियाम्॥४७॥अथाऽतिबलःप्रबलेत्रिषुस्त्रीत्वौषधीभिदि॥उदू
खलंगुग्गुलौस्यादुलूखलेपिनद्वयोः॥४८॥एकाष्ठीलावनतिक्ति
कौषधौपुंसिबकपुष्पे॥कलकलउक्तःकोलाहलेतथासर्जनिर्या
से॥४९॥अथकर्मफलंकर्मरंगकर्मविपाकयोः॥कंदरालःपुमा
न्गर्दभांडेप्लक्षतरावपि॥५०॥कमंडलुःस्यात्करकेनस्त्रीनाप्लक्षपा
दपे॥कुतूहलंकौतुकेस्यात्प्रशस्तेपिचदृश्यते॥५१॥खतमाल
स्तुपुल्लिंगोधूमेपिचबलाहके॥गंडशैलोललाटेस्याच्च्युतस्थूलो
पलेगिरेः॥५२॥गंधफल्यपिगुंडायांचंपकस्यचकोरके॥चक्रवा
लोऽद्रिभेदेस्याच्चक्रवालंतुमंडले॥५३॥जलौजलंस्वतोवारिनि
र्गमेशैवलेपिच॥दलामलंमरुबकेदमनेपिनपुंसकम्॥५४॥
ध्वनिनालातुवीणायांवेणुकाहलयोरपि॥स्यात्परिमलोऽति
मर्दातिमनोहरगंधयोश्चापि॥५५॥सुरतोपमर्दविकसच्छरीररा
गादिसौरभेपुंसि॥अथपोटगलःपुंसिनलेचकाशमत्स्ययोः॥
५६॥भवेद्बहुफलोनीपेनाऽमलक्यांतुयोषिति॥भस्मतूलंग्रा
मकूटेपांसुवर्षेहिमेपिच॥५७॥भद्रकालीतुगंधोल्यांकात्याय

न्यामपिस्त्रियाम्॥ महाकालो महादेवे किंपाके प्रथमांतरे॥५८॥ भवेन्मदकलो मत्ते भे मदाव्यक्तवाचिनोः॥ महाबलं सीसके ति बला थां स्त्री बलोत्कटे॥५९॥ त्रिलिंगं मणिमाला तु हारे दंतक्षतांतरे॥ महानीलो भृंगराजे मणिनागविशेषयोः॥६०॥ मुक्ताफलं तु कर्पूरे मौक्तिके लवलीफले॥ स्यान्मृत्स्यफला कदल्यां महाकालफले पुमान्॥६१॥ भवेद्यवफलो वेणौ मांसीकुटजयोरपि॥ रजस्वला पुष्पवत्यां स्त्रियां स्यात्सैरभे पुमान्॥६२॥ वातकेलिः कलालापे षड्‌दंतक्षते पुमान्॥ अथ वायुफलं शक्रकार्मुके करकेपि च॥६३॥ भवेद्वृश्चिकिलो मल्लीप्रभेदे मदने पुमान्॥ बृहन्नला गुडाकेशे महापोटगले पुमान्॥६४॥ सदाफलः स्कंधफले नारिकेले पुदुंबरे॥ सिनीवाली तु दृष्टेंदुकलामादुर्गयोः स्त्रियाम्॥६५॥ अथ सौवर्चलं सर्जक्षारे च लवणांतरे॥ हस्तिमल्लोऽभ्रमातंगे शंखनागे विनायके॥ ६६॥ हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः॥ हलाहलो ब्रह्मसर्पे अंजनायां विषे स्त्रियाम्॥६७॥ ॥ लपंच॥ ॥

आस्फोतीबल आख्यातः कन्यापालकयज्वनोः॥ उदंडपालः पुंसि स्यात्सर्वमत्स्यप्रभेदयोः॥६८॥ एककुंडल आख्यातो बलभद्रे धनाधिपे॥ कपीटपाल उद्दिष्टः केलितालसमुद्रयोः॥६९॥ स्यात् पांडुकंबलः श्वेतप्रावारग्रावभेदयोः॥ भवेत्स्फुरत ताली तु दूतिकायां शिरः स्रजि॥७०॥ ॥ इति लांतवर्गः॥ ॥

२०२३॥ ॥ वैकम्॥ ॥ वः सांत्वने च वाते च वरुणे च निगद्यते॥ वं प्रचेतसि जानीयादिवार्थे च लदव्ययम्॥१॥ स्वः स्यात्पुंस्यात्मनि ज्ञातावत्रिघात्मीये धने स्त्रियाम्॥ ॥ वद्विः॥ ॥

अर्चिर्नार्थे र्वीमषे शैले मूषिककंबले॥ २॥ अश्वः पुंजातिभेदे च तुरगे च पुमानयम्॥ ऊर्ध्वं स्यादुच्छ्रिते तुंगे चापरिष्टादपि स्मृतम्॥३॥ क्षवः क्षुते राजिकायां कविर्वाल्मीकिशुक्रयोः॥ स्रुवो काव्यपुरे पुंसि स्खलीने स्याज्जु योषिति॥४॥ कण्वं पापे मुनौ पुंसि किण्वं वी

जेचश्रीधुनः॥पापेक्लीबंनपुंसकेशंडेऽन्यवदविक्रमे॥५॥स्यात्तुग्री
वाकंधरायांतच्छिरायांचयोषिति॥चार्वीतुशोभनाबुद्धोज्योत्स्ना
धनदभार्ययोः॥६॥छविःशोभारुचोर्योषिज्जवोवेगवतित्रिषु॥पुंल्लिं
गस्तुभवेद्गेचोंड्रपुष्पेजवास्मृता॥७॥जीवःप्राणिनिवृत्तौचवृक्ष
भेदेबृहस्पतौ॥जीवाजीवंतिकामौर्वीवचाशिंजितभूमिषु॥८॥
नस्त्रीतुजीवितेतत्वंस्वरूपेपरमात्मनि॥स्यात्रिलंवितनृत्येचद्रवः
प्राद्रवनर्मणोः॥९॥रसेपिवदवोवोतुवनवन्हौवनेष्वुभौ॥द्वंद्वंर
हस्यकलहेतथामिथुनयुग्मयोः॥१०॥दार्वीदारुहरिद्रायांतथागो
जिह्विकौषधौ॥द्यौःस्त्रीस्वर्गेचगगनेदिवंक्लीबंतयोःस्मृतम्॥११॥
देवोमेघेसुरेराज्ञिस्यान्नपुंसकमिंद्रिये॥देवीकृताभिषेकायांते
जनीपृक्कयोरपि॥१२॥धवःपुमान्धवेधूर्तेनरयोवृक्षांतरेपिच॥ध्रु
वःशंकौहरेविष्णौवटेचोत्तानपादजे॥१३॥वसुयोगभिदोःपुंसि
क्लीबंनिश्चिततर्कयोः॥स्त्रीमूर्वाद्वयोःशालपर्ण्यांगीतिस्तुभेदयो
स्त्रिषु॥१४॥संततेशाश्वतेचाथनवनव्येपुमान्स्तुतौ॥नीवीपरि
पणेस्त्रीणांकटीवसनबंधने॥१५॥पक्वंपरिणतेपिस्याद्विनाशाऽ
भिमुखेत्रिषु॥प्लवःस्यात्प्लवनेभेलेभकेऽवौश्वपचेपपौ॥१६॥जल
काकेचकुलकेप्रवणेपर्कटीद्रुमे॥कारंडवाख्यविहगेशब्देप्रतिना
तोपुमान्॥१७॥कैवर्त्तीमुस्तकेगंधतृणेपिस्यान्नपुंसकम्॥पार्श्वं
कक्षांतरेचक्रोपांतेपर्शुगणेपिच॥१८॥प्राध्वंतुप्रणतेचातिदूर
वर्त्मनिबंधने॥पृथ्वीभूमौमहत्यांचत्वक्पत्र्यांकृष्णजीरके॥१९॥
भवःक्षेमेशसंसारेसत्तायांप्राप्तिजन्मनोः॥भावःसत्तास्वभावाभि
प्रायचेष्टात्मजन्मसु॥२०॥क्रियालीलापदार्थेषुविभूतिबुधजंतुषु
॥रत्यादौचाथरेवास्यान्नील्यांरत्यांनदीभिदि॥२१॥लवोलेशेविना
शेचछेदनेरामनंदने॥लड्वाकरंजभेदेस्यात्फलेपाद्येखगांतरे॥
२२॥लध्वीलाघवयुक्तायांप्रभेदेस्यंदनस्यच॥विश्वावतिविषा
यांस्त्रीजगतिस्यान्नपुंसकम्॥२३॥ननाथंक्ष्वांपुंसिदेवभेदेष

सिलेत्रिषु॥बिल्वंफलेश्रीफलेनाशवःस्यात्कुणपेपुमान्॥२४॥न
पुंसकंतुपानीयेशिवभूर्जेनृपेपुमान्॥शिवोमोक्षेमहादेवेकील
कग्रहयोगयोः॥२५॥वालुकेगुग्गुलौवेदेपुंडरीकद्रुमेपुमान्॥सु
खक्षेमजलेक्लीबंशिवाझाटामलौषधौ॥२६॥अभयामलकीगौरी
फेरुसहृत्फलासुच॥शिवस्तुभूर्जपत्रेस्यात्तथोदारमहीपतौ॥२७
शुल्वंताम्रेयज्ञकर्मण्याचारेजलसन्निधौ॥सत्वंगुणेपिशाचादौ
बलेद्रव्यस्वभावयोः॥२८॥आत्मत्वेव्यवसायासुचित्तेथस्त्रीतुजंतु
षु॥सत्वोयज्ञेचसंधानेसांत्वंदाक्षिण्यसामनोः॥२९॥स्रुवाहूयोहोम
पात्रेशल्लकीमूर्वयोःस्त्रियाम्॥ह्वआज्ञाध्वराह्वानेह्रस्वोन्यकु
खर्वयोस्त्रिषु॥३०॥ ॥वत्रि॥ ॥अक्षीवंवशिरे
शिग्रौनामत्तेपुनरन्यवत्॥अभावोमरणेसत्वेआहवोयुद्धय-
ज्ञयोः॥३१॥आर्तवंस्त्रीरजेपुष्पेक्लीबंस्यादृतुजेत्रिषु॥आश्रवों
गीकृतौक्लेशेनान्यवहूचनस्थिते॥३२॥उद्धवोयादवभिदिमहे
चक्रतुपावके॥उत्सवोमहउत्सेकेइच्छाप्रसवकोपयोः॥३३॥का
रवीमधुरादीप्यत्वक्पत्राकृष्णजीरके॥कितवस्तुपुमान्मत्तेवंच
केकनकाह्वये॥३४॥केशवोऽजेचपुन्नागेपुंसिकेशवतित्रिषु॥कै
तवंतुछलेद्यूतेकैरवःकितवेरिपौ॥३५॥नपुंसकंचकुमुदेचंद्रिका
यांतुकैरवी॥गांडीवोगांडिवश्चाऽस्त्रीकार्मुकेऽर्जुनकार्मुके॥३६
॥गालवस्तुमुनौलोध्रेतांडवोऽस्त्रीतृणांतरे॥भवेदुद्धतनृत्येच
त्रिदिवासरिदंतरे॥३७॥पुंसिस्वर्गेद्यौदिविर्नाधिषणेऽन्नेतदस्त्रि
याम्॥निष्पावःशूर्पपवनेराजमेषेकडंगके॥३८॥पवनेशिंबिका
धान्यानिर्विकल्पेऽन्यलिंगकः॥निन्हवःपुंसिनिकृतावविश्वासा
पलापयोः॥३९॥पल्लवोऽस्त्रीकिसलयेविटपेविस्तरेवने॥शृंगा
रेऽलक्तरागेस्त्रीप्रभावःशांतितेजसोः॥४०॥पंचत्वंपंचानांभावे
प्राणानामत्ययेपिच॥प्रभवोजन्ममूलेस्याज्जन्महेतौपराक्रमे॥
४१॥ज्ञानस्यचादिमस्थानेप्रसवोगर्भमोचने॥उत्पादेस्यादपत्ये-

पिफलेच कुसुमेपिच ॥ ४२ ॥ प्रसेवः पुंसि वीणांगे स्यूतेच पार्थिवो नृपे पार्थिवी तु सीतायां पृथिव्या विकृतौ त्रिषु ॥ ४३ ॥ पुंगवः स्याद्बली वर्दे प्रभेदेप्यौषधस्यच ॥ उत्तरस्थः पुनः श्रेष्ठे फेरवो जंबुके रुपे ॥ ४४ ॥ बल्लवः सूपकारे स्यात् भीमसेनेच गो दुहि ॥ बांधवो बंधुसुहृदोर्भार्गवो गजधन्विनोः ॥ ४५ ॥ शुक्रेपरशुरामेच भार्गवी पार्वतीश्रियोः ॥ दूर्वायां भैरवः पुंसि शंकरेपीषणे त्रिषु ॥ ४६ ॥ माधवोऽजे मधौ राधे माधवे नास्त्रियां मिसौ ॥ मधुशर्करा वासंति कुट्टनी मदिरासु च ॥ ४७ गोमहिष्यादिसंपत्तौ यादवः पुंसि केशवे ॥ राजीवं नलिने ना तु भेदे हरिणमीनयोः ॥ ४८ ॥ राघवो ब्धेर्महामीनभेदे च रघुवंशजे ॥ रौरवो नरके घोरे वडवा द्विजयोषिति ॥ ४९ ॥ अश्वायां कुंभदास्यांच नारीजात्यंतरेपिच ॥ वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम् ॥ ५० ॥ पाताले नस्त्रियां पुंसि ब्राह्मणे वडवानले ॥ विभवो रैमोक्षेश्वर्ये विद्रवो विद्रुतौ धियि ॥ ५१ ॥ विभावः स्यात्परिचये रसस्योद्दीपनादिषु ॥ शात्रवं भावसंहत्योः शत्रूणां शात्रवो द्विषि ॥ ५२ ॥ षाडवो नागरसयोः सचिवो मंत्रिचेटयोः ॥ सहाये संभवो हेतावुत्पत्तौ मेलकेपिच ॥ ५३ ॥ आधारानतिरिक्तत्वेप्याधेयस्य निगद्यते ॥ सुग्रीवो वासुदेवस्य हयेशारवा मृगेश्वरे ॥ ५४ ॥ सुषवी कारवेल्ले स्यात्कृष्णजीरकजीरयोः ॥ सैंधवोऽस्त्री माणिमंथे नाश्वे सिंधुभवे त्रिषु ॥ ५५ ॥ ॥ वचतुः ॥

॥ अनुभावः प्रभावे स्यान्निश्चये भावबोधके ॥ भवेदभिषवः स्नाने मद्यसंधानयज्ञयोः ॥ ५६ ॥ अपन्हवस्तु पुल्लिंगः स्मृतः स्नेहापलापयोः ॥ आदीनवः पुमान्दोषे परिक्लिष्टदुरंतयोः ॥ ५७ ॥ उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि ॥ कुशीलवस्तु वाल्मीकौ नटयोश्च कयोरपि ॥ ५८ ॥ जलबिल्वः कर्कटे स्यात्स्यांगोज लचत्वरे ॥ जीवंजीवश्चकोरे स्याद्द्रुमभेदेपि पुंस्ययम् ॥ ५९ ॥ धामार्गवस्तु पुंसि स्यादपामार्गेच घोषके ॥ पारिप्लवश्चाकुले स्याच्चंचलेच पराभवः ॥ ६० ॥ तिरस्कारे विनाशेच पुंसि पारशवः पुमान् ॥

परस्त्रीतनयेशस्त्रेद्विजात्क्षूद्रासुतेपिच॥ ६१॥ पुंदग्रीवस्तुपुल्लिंगो गर्गशेलाम्रकुंभयोः॥ बलदेवोबलेवातेन्यायमार्गोपयोधौस्त्रियाम्॥ ६२ रंतिदेवस्तुनृपतेभेदेचगरुडध्वजे॥ रोहिताश्वस्त्रिवकृशानौहरिश्चंद्रनृपात्मजे॥ ६३॥ अथशीतशिवंक्लीबंशैलेयमणिमंथयोः॥ पुंसिसक्तुफलावृक्षेतथामधुरिकौषधौ॥ ६४॥ सहदेवाबलादंडोत्पलयोः शारिवौषधौ॥ सहदेवस्तुसर्पाक्ष्यांपुंसिस्यात्पांडवेपुनः॥ ६५॥ ॥ प्रपंच॥ ॥आशितंभवमन्नाद्येतृप्तावप्याशितंभवा॥ ॥ ॥इतिवांतवर्गः॥ ॥शद्विकं॥ ॥अंशुः प्रभाकिरणयोर्नाशोंतृष्णादिशोःस्त्रियाम्॥ आशुःधान्यांतरेशीघ्रे पीशालांगलदंडके॥ १॥ ईशःप्रभौमहादेवेकाशीवाराणसीपुरे॥ नस्त्रियांतृणभेदेस्यात्कीशोदिगंबरेकपौ॥ २॥ कुशीफालेकुशारज्ज्वांत्रिषुपापिष्ठमत्तयोः॥ योक्त्रराभसुतद्वीपेनादर्भेऽस्त्रीकुशंजले॥ ३॥ केशःस्यात्पुंसिवरुणेन्हीबेरेकुंतलेपिच॥ क्लेशोदुःखेपिकोपेपिव्यवसायेपिदृश्यते॥ ४॥ कोशोस्त्रीकुड्मलेपात्रेदिव्येखड्गपिधानके॥ जातिकोशेर्थसंघातेपेश्यांशब्दादिसंग्रहे॥ ५॥ दर्शस्तुस्यात्सूर्यचंद्रसमागमेदावलोकने॥ दंशःकीटविशेषेचवर्मदंशनयोः पुमान्॥ ६॥ दशावस्थादीपवर्त्योर्वस्त्रांतेभूम्नियोषिति॥ दृक्स्त्रियांदर्शनेनेत्रेबुद्धौचत्रिषुवीक्षके॥ ७॥ नाशःपलायनेपिस्यान्निधनानुपलंभयोः॥ निशादारुहरिद्रायांस्यात्त्रियामाहरिद्रयोः॥ ८॥ पशुःमृगादिदेवाजेनाव्ययंपश्यदर्शने॥ पाशःकेशादिपूर्वस्यात्कलापेकर्णपूर्वकः॥ ९॥ स्यकर्णेचस्वसामर्थ्यान्मृगपक्ष्यादिबंधने॥ पांशुर्धूलौचसस्यार्थेचिरसंचितगोमये॥ १०॥ पेशीस्यात्पक्वकलिकेमांस्यांखड्गपिधानके॥ मांसपिंड्यामंडभेदेराशिर्मेषादिपुंजयोः॥ ११॥ पुंसिवंशःकुलेवेणौपृष्ठावयववर्गयोः॥ वशावंध्यासुतायोषास्त्रागवीकरणीषुच॥ १२॥ अधीनायत्तेक्लीबमायत्तत्वेवेच्छाप्रभुत्वयोः॥ विट्पुंसिमनुजेवैश्येवेशोवेश्यागृहेगृहे॥ १३॥

नेपथ्येच शशो बोले लोध्रनृपशशभेदयोः॥ स्पर्शो रुजायां दानेच स्पर्शने स्पर्शकेपिच॥१४॥ स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम्॥ ॥शत्रिः॥ ॥आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि॥१५॥ उड्डीशो ग्रंथभेदे स्यादुड्डीशश्चंद्रिकापतौ॥ उपांशुजपभेदे स्यादुपांशु विजनेऽव्ययम्॥१६॥ कपिशा स्त्रियुस्त्रीवा स्त्री माधव्यां सिल्हके पुमान्॥ कर्कशः काशमर्दे क्षु कांपिल्ये च व्यसौ पुमान्॥१७॥ त्रिषु साहसिके क्रूरे दृढायस्तृणनिर्दये॥ कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्॥१८॥ यमेना कुलिशो नस्त्री दंभोलौ ना झषांतरे॥ गिरीशोऽद्रिपतौ वाचस्पतिशंकरयोः पुमान्॥१९॥ तुंगीशस्तु पुमान्गौरीवल्लभे हिमदीधितौ॥ दुःस्पर्शो धन्वयासे ना कंटकार्यां स्त्रियां त्रिषु॥२०॥ खरस्पर्शे थ निस्त्रिंशः खड्गे ना निर्दये त्रिषु॥ निर्वेशस्तु पुमान्भोगे वेतने मूर्च्छनेपिच॥२१॥ निवेशः पुंसि विन्यासे शिबिरोद्वाहयोरपि॥ निर्देशः शासनेपि स्यात्कथनोपांतयोरपि॥२२॥ नीकाशो निश्चये तुल्ये पलाशं छदने मतम्॥ शटीकिंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु॥२३॥ प्रकाशस्तु स्फुटे ख्यातः प्रहासातपयोरपि॥ प्रदेशो देशमात्रे स्यात्तर्जन्यंगुष्ठसम्मिते॥२४॥ भित्तावपि च पिंगाशी नालिकायां नपुंसकम्॥ जात्यस्वर्णे पुमान्पल्लीपतौ मत्स्यांतरेपि च॥२५॥ बालिशश्च शिशौ मूर्खे भूकेशः शैवले वटे॥ भूकेशय वल्गुजे पि स्याल्लोमशो मुनिमेषयोः॥२६॥ लोमान्विते स्त्रियां काकजंघामांसी वचासु च॥ शूकशिंबिमहामेदा काशीशे शाकिनीभिदि॥२७॥ विवशस्त्रिषु वश्यात्मारिष्टदुष्टधियोरपि॥ विकाशः पुंसि विजने प्रकाशे सदृशं समे॥२८॥ उचिते चाऽथ संवेशः स्वापस्त्रीरतबंधयोः॥ स्करवाशो वरुणे राजति निशोक्रस्वभोजने॥२९॥ हताशो निर्दये चाशारहिते पिशुने पिच॥ ॥ शांततुः॥ ॥अपदेशः पुमांल्लक्ष्ये निमित्तव्याजयोरपि॥३०॥ अपभ्रंशस्तु पतने भाषाभेदापशब्दयोः॥ आभ्रयासः पुमान्वन्हौ

त्रिषुस्याश्रयनाशके॥३१॥उपस्पर्शःस्पर्शमात्रेस्नानाचमनयोरपि
॥उपदंशोपिदंशेचमेढ्ररोगांतरेपिच॥३२॥क्रूरदृक्पिशुनेवाच्य
लिंगःपुंसिशनैश्चरे॥खंडपरशुःपरशुरामेशंकरेचूर्णलेपिनि॥३३॥
खंडामलकभैषज्येसिंहिकातनयेपिना॥जीवितेशोयमेपुंसित्रिषु
स्याज्जीवितेश्वरे॥३४॥नागपाशःपुमान्स्त्रीणांकरणेवरुणायुधे॥
पंचदशीत्वमावास्यापौर्णमास्योश्चयोषिति॥३५॥प्रतिष्कशःसहा
येस्याद्वार्ताहरपुरोगयोः॥परिवेशोवेष्टनेस्यात्परिधानेपिपुंस्यय
म्॥३६॥पादपाशीखट्टिकायांशृंखलायामपिस्त्रियाम्॥पुरोडाशो
हविर्भेदेचमस्यांपिष्टकस्यच॥३७॥हुतशेषेचभूमिस्पृक्पुंसिमा
नववैश्ययोः॥ ॥इतिशांतवर्गः॥ ॥षैकं॥ ॥
षःकचेपुंसिविज्ञंचश्रेष्ठेस्यादभिधेयवत्॥क्षःसंवर्तेराक्षसेचनर
सिंहेचविद्युति॥१॥क्षेत्रेनाशेक्षेत्रपालेक्षितिर्निवासेगतौक्षये॥ ॥
षद्विः॥ ॥अक्षोज्ञातार्थशकटव्यवहारेषुपाशके॥२॥रुद्रा
क्षेंद्राक्षयोःसर्पेविभीतकतरावपि॥चक्रेकर्षेपुमान्क्लीबंतुत्थेसौव
र्चलेंद्रिये॥३॥उषाबाणसुतारात्र्योरुषःकामिनिगुग्गुलौ॥रात्रिशे
षेउषायांतुकेचिदाहुस्तदव्ययम्॥४॥ऊषःक्षारमृदिप्रोक्तंप्रभा
तेपिपुमानयम्॥तत्संध्यायांचरंध्रेचचंदनाद्रौचवोविले॥५॥ऋषि
र्वेदेवसिष्ठादौदीधितौचपुमानयम्॥ऋक्षःपर्वतभेदेस्याद्भल्लूके
शोणकेपुमान्॥६॥क्लृतवेधनेऽन्यलिंगंनक्षत्रेपुन्नपुंसकम्॥क-
क्षास्यादंतरीयस्यपश्चादंचलपल्लवे॥७॥स्पर्धापदेनादोर्मूलेक
क्षवीरुत्तृणेषुच॥कर्षोनाकर्षणेमानप्रभेदेपुन्नपुंसकम्॥८॥क
र्षूःपुमान्करीषाग्नौस्त्रियांकुल्येष्टिखातयोः॥काक्षीतुघरिकायां
चसौराष्ट्रमृद्यपिस्त्रियाम्॥९॥कोषोऽस्त्रीकुड्मलेपात्रेदिव्येखड्ग
पिधानके॥जातिकोशेऽर्थसंघातेपेश्यांशब्दादिसंग्रहे॥१०॥घोष
आभीरपल्ल्यांस्याद्गोपालध्वनिघोषके॥कांस्येचांबुदनादेनाघोषा
मधुरिकौषधौ॥११॥चोक्षोगीतेशुचौदक्षेतथाऽभीक्ष्णमनोज्ञ

योः॥ झषानागबलायांस्त्री तापमस्त्यारवीषुमा॥१२॥नर्षौऽलिप्सो
दन्ययोस्त्विट्कांतौवाचिरुचौस्त्रियाम्॥तुषो धान्यत्वग्बिभीतकद्रोस्तृषा
लिप्सातृषोः स्त्रियाम्॥१३॥तृट्लिप्सायांसुदन्त्यायांस्मरपुत्र्यामपि
स्त्रियाम्॥दक्षस्त्रिषुपटौपुंसिताम्रचूडेप्रजापतौ॥१४॥मुनिभेदे
हरवृषेद्रुमभेदेस्त्रियांभुवि॥दोषःस्याद्दूषणेपापे दोषारात्रौभुजेपि
च॥१५॥ध्वांक्षोमत्स्याशवर्गेकाकेतक्षकेभिक्षुकेपिच॥ध्वांक्षीकक्को
लिकायांस्यान्न्युक्षंकात्स्न्र्येतृणेपिच॥१६॥क्लीबेऽथपुंसिमहिषेनिकृष्ट
पुनरन्यवत्॥प्लक्षोजटीगर्दभांडद्वीपभित्कुंजराग्भने॥१७॥पक्षोमा
सार्द्धकेपार्श्वगृहेसाध्यविरोधयोः॥केशादेःपरतोवृंदेबलेसखिस
हाययोः॥१८॥चुल्लीरंध्रेपतत्रेचराजकुंजरपार्श्वयोः॥प्रेक्षानृत्ये
क्षणेबुद्धौप्रेषःक्लेशेचमर्दने॥१९॥उन्मानेप्रेषणेपौषोमासेतत्पूर्णि
मातिथौ॥स्त्रियांभिक्षाभृतौयाञ्चासेवाभिक्षितवस्तुषु॥२०॥माषो
धीत्वंतरेमूर्खेमानत्वग्दोषभेदयोः॥मिषंव्याजेस्पर्धनेनामेषोराश्यं
तरेस्त्वभे॥२१॥भेषजभिदिमोक्षस्तुमुक्तिपाटलिमोचने॥यक्षोगु
ह्यकमात्रेचगुह्यकाधीश्वरेपिच॥२२॥रक्षाजतुरक्षणयोरूक्षस्त्व
प्रेम्णयचिक्कणे॥लक्षानपुंसिसंख्यायांक्लीबंव्याजशरव्ययोः॥२३॥
वर्षोऽस्त्रीभारतादौचजंबूद्वीपाब्दवृष्टिषु॥प्रावृट्कालेस्त्रियांभू
म्नि विट्स्त्रीव्यापनविष्ठयोः॥२४॥विषंतुगरलेतोयेऽतिविषायांच
योषिति॥वृषोधर्मेबलीवर्देशृंग्यांपुंराशिभेदयोः॥२५॥श्रेष्ठेस्यादु
त्तरस्थश्चव्यासमूषिकशक्कले॥तथावास्तुस्थानभेदेपुमानेषप्रकी
र्तितः॥२६॥वृषामूषिकपर्ण्यांचयतीनामासनेवृषी॥व्योषंस्या
न्त्रिकटुद्रव्येकरिभेदेपुमामयम्॥२७॥शष्पिःशोषेबिलेस्त्रीस्यात्
श्लेषःसंकर्षणेवधे॥अनंतेनाप्रसादेनस्वनिर्माल्यार्पणेस्त्रियाम्
॥२८॥उपयुक्तेतरेनस्त्रीशोषोयक्ष्मणिशोषणे॥ ॥ष
त्रिः॥ ॥अध्यक्षोऽधिकृतेपुंसिस्यात्प्रत्यक्षेऽभिधेयव
त्॥२९॥अभीषुःप्रग्रहेरश्मौनाकर्षोद्यूतइंद्रिये॥पाशकेशारिफ

लकेकोदंडाभ्यासखल्कनि॥३०॥आकर्षणेपिपुंसिस्यादामिषंपुन्नं-
पुंसकम्॥भोग्यवस्तुनिसंभोगेप्युत्कोचेपललेपिच॥३१॥उष्णी
षंतुशिरोवेष्टेकिरीटेलक्षणांतरे॥उत्प्रेक्षानवधानेपिकाव्यालंक
रणांतरे॥३२॥कल्मषंकिल्बिषेक्लीबंपुंसिस्यान्नरकांतरे॥कल्मा
षोयातुधानेचकृष्णपांडवकृष्णयोः॥३३॥कलुषंत्वाविलेपापेकि
ल्बिषंपापरोगयोः॥अपराधेपिकुल्माषंकांजिकेयावकेपुमान्॥३४
॥गंडूषोमुखपूर्तौभिपुष्करप्रसृतोन्मिते॥गवाक्षीशक्रवारुण्यांग
वाक्षोजालकेकपौ॥३५॥गोरक्षोनागरंगेस्याद्गवांचपरिरक्षके॥
जिगीषाजेतुमिच्छायांव्यवसायप्रकर्षयोः॥३६॥तवीषीशक्रकन्या
यांपुंसिस्वर्गेमहोदधौ॥ताविषीचंद्रकन्यायांनास्वर्गेबुधिकांचने
॥३७॥नहुषोनागभेदेस्यात्सोमवंशनृपेपिच॥निकषःशाणफल
केनिकषायातुमातरि॥३८॥निमेषनिमिषौकालप्रभेदेऽक्षिनि
मीलने॥परुषंकर्बुरेरूक्षेनिष्ठुरोक्तौचवाच्यवत्॥३९॥प्रदोषःस
मयेदोषेप्रत्यूषोहर्मुखेवसौ॥पीयूषंसप्तदिवसावधिक्षीरेतथाऽ
मृते॥४०॥पुरुषःपूरुषेसांख्यज्ञेचपुन्नागपादपे॥पौरुषंपुरुषस्य
स्याद्भावेकर्मणितेजसि॥४१॥ऊर्ध्वविस्तृतदोःपाणिनृमानेत्वभिधे
यवत्॥महिषीकृताभिषेकासैरिभ्योरोषधीभिदि॥४२॥मारिषः
शाकभिद्यार्येनाट्योक्त्यापुंसियोषिति॥दक्षांबायांमृगाक्षीतुविशा
लामृगनेत्रयोः॥४३॥रक्ताक्षःकासरेक्रूरेपारावतचकोरयोः॥रोहिषं
कत्तृणेक्लीबंपुंसिस्याद्धरिणांतरे॥४४॥विश्लेषोविधुरेयोगेशुश्रूषा
स्यादुपासने॥कथनेश्रोतुमिच्छायांशैलूषोनटबिल्वयोः॥४५॥सं
घर्षस्तुपुमान्धृष्टौस्पर्धायांचप्रभंजने॥समीक्षातुस्त्रियांतत्वेबु
द्धावपिनिभालने॥४६॥

॥षचतुः॥

॥अनु
कर्षोरथाधःस्थदारुण्यप्यवकर्षणे॥अंबरीषंरणेभ्राष्ट्रेक्लीबंपुं
सिनृपांतरे॥४७॥नरकस्यप्रभेदेचकिशोरेभास्करेपिच॥आम्रात
केऽनुतापेचानिमिषोमत्स्यदेवयोः॥४८॥अनुतर्षःसुरापानपा

त्रे तृष्णाऽभिलाषयोः॥ अहिर्हिंडुकुंडे शङ्के मयूरे नकुले पुमान्॥ ४९॥ अलंबुषा महस्ते च छर्दने राक्षसांतरे॥ अलंबुषा तु मुंडीर्यां स्वर्गवारांगनांतरे॥ ५०॥ अथ किंपुरुषो लोकभेदे किन्नरयोः पुमान्॥ देववृक्षः सप्तपर्णे मंदारादिषु गुग्गुलौ॥ ५१॥ नंदिघोषोऽर्जुनरथे घोषे बंदिजनस्य च॥ परिवेषस्तु पुल्लिंगः परिधौ परिवेषणे॥ ५२॥ परिघोषो निनादे स्यादवाच्ये जलदध्वनौ॥ पलंकषा गोक्षुरके रास्नायां गुग्गुलु किंशुके॥ ५३॥ मुंडीरीलाक्षयोश्च स्त्री राक्षसे तु पलंकषः॥ वीरवृक्षस्तु भल्लातककुभद्रुमयोः पुमान्॥ ५४॥ भूतवृक्षस्तु शाखोटद्रुमे स्योनाकपादपे॥ महाघोषा तु कर्कटशृंग्यां पुंस्यतिघोषणे॥ ५५॥ क्लीबं हट्टे राजवृक्षः स्याद्वर्णालिपियालयोः॥ वातरूषस्तु वातूलोत्कटयोः शक्रकार्मुके॥ ५६॥ विशालाक्षो हरे ताक्ष्यें नासुनेत्रेऽभिधेयवत्॥ सकटाक्षो वराक्षे भाकटाक्षसहिते त्रिषु॥ ५७॥ ॥

इति षांतवर्गः॥ ॥सद्वि०॥ ॥कंसोऽस्त्री तैजसद्रव्ये कांस्ये माने सुरे तु ना॥ कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम्॥ १॥ गुच्छः स्यात्स्तबके स्तंबे हारभिद्ग्रंथिपर्णयोः॥ गोसो बोलोषसोश्चास इक्षुपक्षिभिदोः पुमान्॥ २॥ त्रासो भये मणेर्दोषे दासी वाणाशुजिष्ययोः॥ दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे॥ ३॥ नासा तु नासिकायां च दारोर्ध्वे दारुणि स्त्रियाम्॥ प्रसूरश्वाजनन्योश्च कंदलीवीरुधोः स्त्रियाम्॥ ४॥ वस्कर्मो देवभेदाग्निभायोश्च यकराजस॥ क्लीबे स्वर्गौषधेऽश्वे च रे रत्नमधुरे त्रिषु॥ ५॥ भासः पुंसि प्रभायां स्यान्हि शोषे विहगस्य च॥ भाः प्रभावे मयूखे स्त्री मा श्चंद्रमासयोः पुमान्॥ ६॥ मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्॥ मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः॥ ७॥ मृत्स्ना काक्ष्यां श्रेष्ठमृदि रसो गंधरसे जले॥ शृंगारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः॥ ८॥ देहधातुप्रभेदे च पारदस्वादयोः पुमान्॥ स्त्रियां तु रसना पाठा शल्लकी कंगुभूमिषु॥ ९॥ रासः कोलाहले ध्याने भाषाशृंखलकेपि च॥

क्रीडाभेदे च गोपानां वत्सः पुत्रादिवर्षयोः ॥ १० ॥ तर्णके नोरसि क्लीबं व्यासो नाविस्तृते मुनौ ॥ शंसा वचसि वांछायां हंसः स्यान्मानसौकसि ॥ ११ ॥ निर्लोभनृपविष्ण्वर्कपरमात्मनि मत्सरे ॥ योगिभेदे मंत्रभेदे शरीरमरुदंतरे ॥ १२ ॥ तुरंगमप्रभेदेपि हिंसा चौर्यादिघातयोः ॥ ॥ सत्रिः ॥ ॥ अलसा हंसपद्यां नापादरोगद्रुभेदयोः ॥ १३ ॥ क्रियामंदेत्रिषथाऽर्चिर्मयूरवशिखयोर्नना ॥ अदः परस्मिन्नत्र स्यादभ्यासोऽभ्यसनेऽतिके ॥ १४ ॥ आगोऽपराधे पापे स्यादाश्वासः पुंसि निर्वृतौ ॥ आख्यायिकापरिच्छेदे चाशीर्दंसे मरुद्रुजाम् ॥ १५ ॥ हितस्याशंसने स्त्रीस्यादिष्वासः कार्मुके पुमान् ॥ त्रिषु स्यात्क्षेपके चैषो कृच्छ्रासः प्राणनेपि च ॥ १६ ॥ आख्यायिकापरिच्छेदेप्याश्वासेपि पुमानयम् ॥ उत्तंसः कर्णपूरेपि शिखरेपि च न स्त्रियाम् ॥ १७ ॥ उषः प्रत्यूषसि क्लीबं पितृप्रस्वां च योषिति ॥ उरो वक्षसि च श्रेष्ठे प्येनः पापापराधयोः ॥ १८ ॥ ओजो दीप्तावष्टंभे प्रकाशबलयोरपि ॥ ओकआश्रयमात्रे च मंदिरे च नपुंसकम् ॥ १९ ॥ कीकसः कृमिजातौ स्यात्पुंसि कुल्ये नपुंसकम् ॥ चमसो यज्ञपात्रस्य भेदे स्त्रीपिष्टके स्त्रियाम् ॥ २० ॥ छंदः पद्ये च वेदे च स्वैराचाराभिलाषयोः ॥ ज्यायो वृद्धेति प्रशस्ते ज्योतिरग्नौ दिवाकरे ॥ २१ ॥ पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः ॥ तरो बले च रोगे च तपो लोकांतरेपि च ॥ २२ ॥ चांद्रायणादौ धर्मे च पुमान् शिशिरमाघयोः ॥ तमो ध्वांते गुणे शोके क्लीबं बालाविधुंतुदे ॥ २३ ॥ तामसी निशि दुर्गायां तामसो भुजगे खले ॥ तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः ॥ २४ ॥ धनुः पियाले नानस्त्री राशिभेदे शरासने ॥ धनुर्धरे त्रिषु नभः क्लीबं व्योम्नि पुमान्घने ॥ २५ ॥ घ्राणश्रावणवर्षासु बिसतंतौ पतद्ग्रहे ॥ पनसः कंटकिफले कंटके वानरांतरे ॥ २६ ॥ स्त्रियां रोगप्रभेदे स्यात्पयः स्यात्क्षीरनीरयोः ॥ पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः ॥ २७ ॥ पुक्कसी कलिकानील्योः पुक्कसः श्वप

चेऽधमे ॥ बीभत्सो नार्जुने क्रूरघृणात्मविकृतेत्रिषु ॥ २८ ॥ भूयां
स्त्रिषु बहुतरे पुनरर्थे त्वदोऽव्ययम् ॥ मनश्चित्ते मनीषायां महउ
त्सवतेजसोः ॥ २९ ॥ मानसं सरसि स्वांते रभसो हर्षवेगयोः ॥ रहस्त
त्वे रते गुह्ये रजः क्लीबं गुणांतरे ॥ ३० ॥ आर्तवे च परागे च रेणुमात्रे च दृ
श्यते ॥ राक्षसो यातुधाने स्याच्चंडायां राक्षसी स्मृता ॥ ३१ ॥ रेपाः
स्यादधमे क्रूरे कृपणेप्यभिधेयवत् ॥ रेतः शुक्रे पारदे च रोदश्च रोद
सीति च ॥ ३२ ॥ दिविभूमौ पृथक्कस्यात्सहोक्त्याप्येतयोस्तथा ॥ लालसौ
त्सुक्यतृष्णातिरेकयाञ्चासु च द्वयोः ॥ ३३ ॥ वयः पक्षिणि बाल्यादौ
यौवने च नपुंसकम् ॥ वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि ॥ ३४ ॥
पुंसि चंद्रस्य तनये बर्हिः पुंसि हुताशने ॥ नस्त्री कुशे वपुः क्लीबं तनौ
शस्ताकृतावपि ॥ ३५ ॥ वतंसस्तु पुमान्कर्णपूरशेखरयोरपि ॥ वा
हसो जलनिर्याणे शयालौ स्कनिषण्णके ॥ ३६ ॥ वायसोऽगुरुवृक्षे च
श्रीवासध्वांक्षयोः पुमान् ॥ काकोदुंबरिकायां च काकमाच्यां च वाय
सी ॥ ३७ ॥ विद्वानात्मविदि प्राज्ञे पंडिते चाभिधेयवत् ॥ विलासो
हावभेदे स्याल्लीलायामपि पुंस्ययम् ॥ ३८ ॥ वितंसो बंधनोपाये मृगा
णां पक्षिणामपि ॥ तेषामपि च विश्वासहेतोः प्रावरणेपि च ॥ ३९ ॥ वे
धाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि ॥ शिरः प्रधाने सेनाग्रे शिखरे
मस्तकेपि च ॥ ४० ॥ श्रीवासो वृकधूपेपि पंकजे मधुसूदने ॥ श्रेयो
मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् ॥ ४१ ॥ श्रेयसी करिपिप्पल्या
मभयापाठयोरपि ॥ सहो बले ज्योतिषि च पुंसि हेमंतमार्गयोः ॥ ४२
॥ सरसी विश्वकासारे सरो नीरतडागयोः ॥ स्यात्समासस्तु पुल्लिं
गः संक्षेपे च समर्थने ॥ ४३ ॥ सारसः पक्षिभेदे द्वोः क्लीबं तु सरसीरुहे
॥ साहसं तु बलात्कारकृतकार्ये दमेपि च ॥ ४४ ॥ सुरसस्तु त्रिषु स्वा
दौ पर्णाशे तु नपुंसकम् ॥ स्त्री रास्नानागमात्रोश्च स्रोतोऽम्बुवेग इंद्रि
ये ॥ ४५ ॥ हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम् ॥ ॥ स
चतुः ॥ ॥ अधिवासो निवासे स्यात्संस्कारे धूपनादिभिः ॥

॥४६॥ **अवध्वंसः** परित्यागे निंदनेप्यवचूर्णने॥ **अवतंसो** नस्त्रियंस्या त्कर्णपूरेचशेखरे॥ ४७॥ **अगोकाः** पुंसिशरभेपक्षिपंचास्ययोरपि॥ **उदर्चिः** रुद्रभेवाच्यलिंगः पुंसि हुताशने॥ ४८॥ **कलहंसस्तु** कादंबे राजहंसेनृपोत्तमे॥ **कनीयान**तियूनिस्यादत्यल्पानुजयोस्त्रिषु॥४९ **कुंभीनसः** क्रूरसर्पेस्त्रियांलवणमातरि॥ भवेद्दु**नरसः** सांद्रेनिर्या सेमोरटेंबुनि॥ ५०॥ कर्पूरेपीलुपर्ण्यांचसम्यक्सिद्धरसेपिच॥ **चंद्रहा सो**दशग्रीवकरवालेऽसिमात्रके॥ ५१॥ **जटायुः** पुंसिसंपातेःकनी यसिचगुग्गुलौ॥ अथ**तामरसं**पद्मेताम्रकांचनयोरपि॥ ५२॥ **त्रिस्रो ता**जन्हुकन्यायांस्रोतस्वत्यंतरेस्त्रियाम्॥ **दिवौकाश्च**दिवौकाश्चपुं सिदेवेचचातके॥ ५३॥ **दीर्घायुः** शाल्मलीवृक्षवायसेजीवकद्रुमे ॥मार्कंडेयेचपुंसिस्याच्चिरजीविनिवाच्यवत्॥ ५४॥ **नगौकाः** पुंसि शरभेपक्षिपंचास्ययोरपि॥ **निश्श्रेयसं**तुकल्याणमोक्षयोःशंकरेपु मान्॥ ५५॥ **नीलांजसा**प्सरोभेदेसरिद्भेदेचविद्युति॥ **प्रचेताः** पा शिनिमुनौनाम्नकृष्टहृदित्रिषु॥ ५६॥ **पुनर्वसुः** नासुनिभिद्यजेद्विले तुमांतरे॥ **पौर्णमासः** पुमान्यज्ञभेदेस्त्रीपूर्णिमातिथौ॥ ५७॥ **महा रसः** स्यात्खर्जूरेकोशकारकशेरुणोः॥ **मल्लीमसस्तु**मलिनेपुष्प काशीसलोहयोः॥ ५८॥ भवे**न्मधुरसा**द्राक्षामूर्विकादुग्धिकासुच ॥ **यमस्वसा**तुदुर्गायांयमुनायामपिस्त्रियाम्॥ ५९॥ **यवीयान्तु** जेपिस्यादतियूनिचवाच्यवत्॥ **रासेरसस्तु**गोष्ठ्यांस्याद्रासभृंगा रयोरपि॥ ६०॥ **रससिद्धि**रसावासपक्षीजागरकेपिच॥ **राजहंसस्तु** कादंबेकलहंसेनृपोत्तमे॥ ६१॥ **वरीयान्**योगभिद्ध्रेष्ठवरिष्ठयतियू निच॥ **विहायाः** शकुनेपुंसिगगनेपुन्नपुंसकम्॥ ६२॥ **विभावसुः** पुमान्सूर्येहारभेदेचपावके॥ **स्वःश्रेयसं**चकल्याणेपरमात्मनिश र्मणि॥ ६३॥ अथ**सर्जरसो**वाद्यभांडभेदेचधूणके॥ **सप्तार्चिः** पाव केपुंसिक्रूरचक्षषितुत्रिषु॥ ६४॥ **साधीयान**तिबाढेस्यादतिसाधौ चवाच्यवत्॥ **सिद्धरसो**रसेपुंसिधातुप्रभृतिषुत्रिषु॥ ६५॥ **सुमनाः**

पुष्पमालयोः स्त्रियांनाधीरदेवयोः॥स्कमेधास्कस्त्रियांज्योतिष्मत्यां
त्रिषुस्कबुद्धिनि॥६६॥ ॥सपंच॥ ॥दिव्यचक्षुः
स्कगंधस्यभेदेनांधेस्कलोचने॥स्यान्नभश्चमसश्चंद्रेचित्रापूपेंद्रजा
लयोः॥६७॥हिंगुनिर्यास इत्येषनिंबेहिंगुरसेपिच॥ ॥
सषट्॥ ॥हिरण्यरेताः पुंसिस्याद्दिवाकरहविर्भुजोः॥६८
॥ ॥इतिसांतवर्गः॥ ॥हैकम्॥ ॥हः
शिवेसलिलेशून्येधारणेमंगलेपिच॥गगनेनकुलीशेचरक्तेनाकेचव
र्ण्यते॥१॥ ॥हद्विः॥ ॥अहिर्वृत्रासुरेसर्पेपुंसीहो
द्यमवांछयोः॥कुहूःस्त्रीकोकिलालापेनष्टेंदुकलदर्शयोः॥२॥ग्रहो
नुग्रहनिर्बंधग्रहणेषुरणोद्यमे॥सूर्यादौपूतनादौचसैंहिकेयोप
रागयोः॥३॥ग्राहोग्रहेऽवहारेचगुहःषाण्मातुरेगुहा॥सिंहपुच्छ्यां
चगर्तेचपर्वतादेश्चगह्वरे॥४॥गृहंगृहाश्चपुंभूम्निकलत्रेपिच
सद्मनि॥नाहस्कबंधनेकूटेप्रोहोगजांघ्रिपर्वणोः॥५॥वाच्यव-
न्निपुणेतर्केबर्हंपिच्छेदलेस्त्रियाम्॥बहुस्यात्त्र्यादिसंख्यास्कवि
पुलेप्यभिधेयवत्॥६॥महीनद्यंतरेभूम्नोमहउत्सवतेजसोः॥अ
थमोहोन्यलिंगःस्यादविद्यायांचमूर्च्छने॥७॥लोहोऽस्त्रीशस्त्रके
लौहेजोंगकेसर्वतैजसे॥वहःस्याद्वृषभस्कंधेवाहेगंधवहेपिच॥
८॥वाहोभुजेपुमान्मानभेदाश्ववृषवायुषु॥ब्रीहिःसामान्यधा
न्येस्यादाशुधान्येतुपुंस्ययम्॥९॥व्यूहःस्याद्बलविन्यासेनिर्माणे
वृंदतर्कयोः॥सहोबलेनस्त्रियांस्यात्स्त्रियांतुनखभेषजे॥१०॥दं
डोत्पलामुद्गपर्णीकुमारीपृथिवीषुच॥सिंहःकंठीरवेराशौसत्तमे
चोत्तरस्थितः॥११॥सिंहीतुकंटकार्यांस्याद्वार्ताकीवासकेपिच॥स्ने
हःस्यात्पुंसितैलादिरसद्रव्येचसौहृदे॥१२॥ ॥हत्रिः
॥ ॥अत्यूहोनालिकायांस्त्रीकालकंठखगेपुमान्॥आ
ग्रहोनुग्रहासक्त्योराक्रमेग्रहणेपिच॥१३॥आरोहस्त्ववरोहेच
वरारोहाकटावपि॥आरोहणेगजारोहेदीर्घत्वेचसमुच्छ्रये॥१४

उत्साहस्तूद्यमे सूत्रे कटाहः कूर्मकर्परे॥ द्वीपस्य च प्रभेदे स्यात्तैला
देःपाकभाजने॥१५॥जायमानविषाणाग्रमहिषीशावकेपि च॥
कलहं युद्धकालेना खड्गकोशे च मंडने॥१६॥दात्यूहस्तु पुमान्काल
कंठचातकपक्षिणोः॥ निग्रहो भर्त्सनेपि स्यान्मर्यादायां च बंधने॥
१७॥निर्व्यूहः शिखरे द्वारे निर्यासे नागदंतके॥ निरूहो बस्तिभेदे स्या
दूहशून्ये च निश्चिते॥१८॥प्रग्राहस्तु तुलासूत्रे वृषादिप्रग्रहेपि च॥
पटहो ना समारंभे आनके पुन्नपुंसकम्॥१९॥प्रवहस्तु बहिर्या
त्रामातरिश्वप्रभेदयोः॥प्रग्रहस्तु तुलासूत्रे बंद्यां नियमने भुजे॥२०
॥हयादिरश्मौ रश्मौ च स्वर्णालुमहीरुहे॥प्रवाहस्तु प्रवृत्तौ स्याद
पिस्रोतसि वारिणः॥२१॥वराहः सूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः
॥वाराही मातृभेदे स्याद्विष्वक्सेनप्रियौषधौ॥२२॥राजार्हं जोंग
केक्लीबं राजयोग्येभिधेयवत्॥विग्रहः कायविस्तारे विभागे तार
णोस्त्रियाम्॥२३॥विदेहः कायशून्ये स्याज्जनकान्वयभूमिपे॥ वै
देही रोचना सीता वणिक्स्त्री पिप्पलीषु च॥२४॥संग्रहो वृहदुद्
गे ग्रहसंक्षेपयोरपि॥स्रुवहा शल्लक्यैलापर्णीगोधापदीषु वीणा
याम्॥२५॥रास्नाशेफालिकयोःस्त्री स्रुवहाल्येऽन्यलिंगः स्यात्॥
॥ ॥ हचतुः॥ ॥अवग्रहो वृष्टिरोधे प्रतिबं
धे गजालिके॥२६॥अभिग्रहोऽभिग्रहणेऽभियोगेपि च गौरवे॥
अवरोहो वलरणेप्यारोहे चलतोद्भमे॥२७॥अश्वारोहाऽश्वगंधा
यां स्त्रियां त्रिषु अश्ववाहके॥उपनाहो व्रणालेपपिंडे वीणानिबंधने
॥२८॥उपग्रहस्तु पुमान्बंद्यामुपयोगेनुकूलने॥स्याद्गंधवाहा नासा
यां पुल्लिंगो मातरिश्वनि॥२९॥तनूरुहं तु लोम्नि स्यात्पतत्रे च नपुं
सकम्॥तमोपहः सहस्रांशुमृगांकाजिनवह्निषु॥३०॥प्रतिग्रहः
स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे॥ द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहांत
रे॥३१॥परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः॥शापे परिबर्हो
राजयोग्यद्रव्यपरिच्छदे॥३२॥परीवाहो जलोच्छ्वासे महीभृद्यो-

ग्यवस्कनि॥ पितामहो विरिंचे स्यात्तातस्यजनकेपिच॥ ३३॥ महास
हायाषपर्ण्यामम्लानेऽपिच योषिति॥ ॥हपंच॥ ॥
प्रपितामह इत्येवंविधोपितृपितामहे॥ ३४॥ ॥इतिहां
तवर्गः॥ ॥अथाऽव्ययानिवक्ष्यंते व्यक्तं पूर्वोदितैःक्रमैः
अकाराद्यंतत्ताचास्मिंस्तस्मादव्यतिरिच्यते॥१॥ अ शब्दः स्यादभावे
पिस्वल्पार्थप्रतिषेधयोः॥ अनुकंपायांचतथा वाक्यदेवेत्यनन्वयः॥
२॥ आःप्रगृह्यंस्मृतोवाक्येऽनुकंपायांसमुच्चये॥ इ भेदेचरुषोक्तौचा
पाकरणानुकंपयोः॥३॥ ई विषादेनुकंपायां लक्ष्म्यांपुनरनव्ययम्
॥ उ संबंधनरोषोक्त्योरनुकंपानियोगयोः॥ ४॥ पदपूरणेच पादपूर
णेऽपिच दृश्यते॥ ऊ वाक्यारंभरक्षाऽनुकंपास्वपिच दृश्यते॥ ५॥ ऋ
शब्दो गर्हणे वाक्ये देवांबायांत्वनव्ययम्॥ ॠ वाक्यारंभरक्षायांव
क्षःस्मृत्योरनव्ययम्॥ ६॥ देवांबायां दनौचापि भैरवे दनुजे गतौ॥
लृकारो देवमातायां भुविकुध्रेच कीर्तितः॥ ७॥ ॡकारो देवनार्यांस्या
न्नार्यात्मन्यपि मातरि॥ ए स्मृतावव्यसूयानुकंपामंत्रणहूतिषु॥ ८
ऐशब्दो दृश्यते हूतौ स्मृत्यामंत्रणयोरपि॥ ओ संबोधन आह्वाने स्म
रणेचानुकंपने॥ ९॥ औ शब्दः कथितो हूतौ तथा संबोधनेपिच॥ स्त्री
तु विश्रंभरायांस्यात्तुमांस्तनिस्वने स्मृतः॥ १०॥ ॥कैकम्॥ ॥
कुपापे चेषदर्थेच कुत्सायांच निवारणे॥ ॥कद्विः॥ ॥
धिग्भर्त्सने च निंदायां॥ ॥कत्रिः॥ ॥मनागप्यल्प
मंदयोः॥ ११॥ हिरुक् शब्दोविनार्थेच मध्यार्थेपिच दृश्यते॥ ॥
गद्विः॥ ॥अंग संबोधने हर्षे संगमासूययोरपि॥ १२॥ ॥
ङद्विः॥ ॥आङ् सीमायामभिव्याप्तौ क्रियायोगेषु दर्थयोः
॥ ॥चैकम्॥ ॥चान्वाचये समाहारे प्यन्यो
न्यार्थे समुच्चये॥ १३॥ पक्षांतरे तथा पादपूरणे प्यवधारणे॥ ॥
चद्विः॥ ॥किंचारंभेच साकल्ये प्राक् पूर्वस्मिन्नवांतरे॥
१४॥ अग्रे प्रभाते तीते च देशे दिक्कालयोरपि॥ ॥चत्रिः

तिर्यक्तिरोर्थे वक्रे च विहंगादौ त्वनव्ययम्॥१५॥ ननु च प्रश्नदुष्टोक्त्योः सम्यक्कृद्दप्रशंसयोः॥ ॥अहिः॥ ॥नञभावे निषेधे च स्वरूपार्थे व्यतिक्रमे॥१६॥ ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः॥ ॥ठद्विः॥ ॥स्फुष्टुप्रशंसनेपि स्याद्दत्यर्थे च निगद्यते॥१७॥ ॥ठत्रिः॥ ॥अपष्ठु निरवद्ये च शोभनार्थे च दृश्यते॥ ॥णचतुः॥ ॥अंतरेण पदं विना हिनामध्यार्थयोरपि॥१८॥ ॥तैकम्॥ ॥तु पादपूरणे भेदे समुच्चये वधारणे॥ पक्षांतरे नियोगे च प्रशंसायां विनिग्रहे॥१९॥ ॥तद्विः॥ ॥अतिशब्दः प्रशंसायां प्रकर्षे लंघनेपि च॥ नितांतासंप्रतिक्षेपे वाचकोप्येष दर्शितः॥२०॥ अस्तु स्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि॥ प्रतिक्षेपे प्रशंसायां प्रकर्षे लक्षणेपि च॥२१॥ असंप्रत्यर्थ उद्दिष्टमिति हेतौ प्रकाशने॥ निदर्शने प्रकारे स्यात्प्रकृत्यनुकर्षयोः॥२२॥ समासौ च प्रकरणेऽप्युतात्यर्थे विकल्पयोः॥ समुच्चये वितर्के च प्रश्ने च पादपूरणे॥२३॥ उत स्यात्प्रश्ने वितर्के च वे कुत्सितप्रशंसयोः॥ पक्षांतरेप्यसाकल्ये जातु शब्दे विगर्हणे॥२४॥ कदाचिदर्थेपि तथान्येऽविकल्पनिषेधयोः॥ प्रति प्रतिनिधावित्थंभूताख्यानाभिमुख्ययोः॥२५॥ मात्रार्थभागवीप्सासु लक्षणप्रतिदानयोः॥ बतामंत्रणसंतोषखेदानुक्रोशविस्मये॥२६॥ स्वस्तिस्यान्मंगले पुण्येप्याशंसायामपि क्वचित्॥ स्वित्प्रश्ने च वितर्के च तथैव पादपूरणे॥२७॥ हंत वाक्यारंभखेदविषादे हर्षसंभ्रमे॥ ॥तत्रिः॥ ॥आरा दूरे समीपे च कच्चित्कामप्रवेदने॥२८॥ प्रश्ने हर्षे मंगले च किमुत प्रश्नवितर्कयोः॥ विकल्पेतिशयेपि स्यात्तावन्मानेवधारणे॥२९॥ संभ्रमे च परिच्छेदे तथा कार्त्स्न्याधिकारयोः॥ पश्य तस्यात्प्रशंसायां विस्मये च निगद्यते॥३०॥ पश्चात्प्रतीच्यां परमेप्यधिकारेपि दृश्यते॥ यद्वत् प्रश्ने वितर्के च यावत्कार्त्स्न्ये वधारणे॥३१॥ प्रसंसायां परिच्छेदे मानाधिकारसंभ्रमे॥ पक्षांतरेच्चश्र

श्चलस्यादात्मप्रश्नेचमंगले॥३२॥पुराकल्पेसदार्थेच पुनरर्थेच दृश्यते ॥सकृत् सहैवकारेस्यात्साक्षात्प्रत्यक्षतुल्ययोः॥३३॥ ॥तन्तुः॥ ॥अहोबतानुकंपायांखेदे संबोधनेपिच॥पुरस्तात् प्रथमेप्राच्यामग्रतोर्थपुरार्थयोः॥३४॥ ॥थद्विः॥ ॥ अथाथोसंशयेस्यातामधिकारेचमंगले॥विकल्पानंतरप्रश्नकार्त्स्न्यारंभसमुच्चये॥३५॥तथाभ्युपगमेपृष्टप्रतिवाक्येसमुच्चये॥ सदृशेनिश्चयेपिस्याद्यथातुल्यार्थमानयोः॥३६॥प्रशंसायांवृथा वंध्येनिष्कारणे॥ ॥थन्तिः॥ ॥ऽन्यथापुनः॥वितथेचापरार्थेचसर्वथा हेतुवादयोः॥३७॥ ॥दद्विः॥ ॥ उत्प्रकाशेविभागेचप्राबल्याऽस्वास्थ्यशक्तिषु॥प्राधान्येबंधनेभावेमोक्षेलाभोर्ध्वकर्मणोः॥३८॥यत् गर्हाहेत्ववधृत्योर्यद्विगर्हाविकल्पयोः॥ ॥धद्विः॥ ॥अधिःस्यादधिकारेचापीश्वरेचनिगद्यते॥३९॥ ॥नैकम्॥ ॥नस्यान्निषेधोपमयोर्निर्निवेशभृशार्थयोः॥नित्यार्थेसंशयक्षेपकौशलोपरमेषुच॥४०॥सामीप्याश्रयदानेषुमोक्षांतर्भावबंधने॥राश्यधोभावविन्यासेनुवितर्कोपमानयोः॥४१॥विकल्पानुनयातीतेप्रश्नहेत्वपदेशयोः॥ ॥नद्विः॥ ॥अनु हीनेसहार्थेचपश्चात्सादृश्ययोरपि॥४२॥लक्षणेत्थंभूताख्यानभागवीप्सास्वनुक्रमे॥आयामेचसमीपेचकिन्नुप्रश्नवितर्कयोः॥४३॥चनविस्मयेसाकल्येननुशब्दोविनिग्रहे॥अनुप्रश्नेपरकृतावधिकारेचसंभ्रमे॥४४॥आमंत्रणेप्यनुनयेप्रश्नाज्ञावधारणे॥नानाशब्दोविनार्थेपितथानेकोभयार्थयोः॥४५॥स्थानेतुकरणार्थेस्याद्युक्तसादृश्ययोरपि॥ ॥पद्विः॥ ॥अपस्यादपकृष्टार्थेवर्जनार्थवियोगयोः॥४६॥विपर्ययेचविकृतौचौर्येनिर्देशहर्षयोः॥अपिसंभावनाप्रश्नशंकागर्हासमुच्चये॥४७॥तथायुक्तपदार्थेपिकामकारक्रियासुच॥उपस्यादधिकार्थेचहीनार्था

सन्नयोरपि॥४८॥ ॥भद्विः॥ ॥अभीत्थंभूतकथने
चाभिमुख्याभिलाषयोः॥ ॥मैकम्॥ ॥मावारणे
विकल्पेचस्मातीतेपादपूरणे॥४९॥स्यान्मंगलेपरकृता॥ ॥
मद्विः चमांतिकसहार्थयोः॥आम् ज्ञाननिश्चयस्मृत्योरु
म्रोषेऽगीकृतावपि॥५०॥प्रश्नेपिस्यादूम्रुषोक्तौपृच्छायामोमुप
क्रमे॥प्रणवेचाप्युपगमेचापाकृतौचमंगले॥५१॥कम्पादपूर
णेतोयेमस्तकेचसुखेपिच॥किम्कुत्सायांवितर्केचनिषेधप्रश्न
योरपि॥५२॥किमुसंभावनायांस्याद्विमर्शेचापिदृश्यते॥ना
मकोपेभ्युपगमेविस्मयेस्मरणेपिच॥५३॥संभाव्यकुत्साप्राका
श्यविकल्पेपिचदृश्यते॥शम्कल्याणेसुखेसम्तुशोभनार्थ
समर्थयोः॥५४॥संगार्थेचप्रहृष्टार्थेसामिनिंदार्धयोर्मतम्॥ह
म्रुषोक्तावनुनयेहुम्स्मृतावप्यपाकृतौ॥५५॥अर्थप्रश्नेऽभ्यनु
ज्ञायांहूम्स्यात्प्रश्नवितर्कयोः॥ ॥मत्रिः॥ ॥
अलम्भूषणपर्याप्तिवारणेषुनिरर्थके॥५६॥शक्तावेवम्प्रका
रेस्यादंगीकारेवधारणे॥अर्थप्रश्नेपरकृतावुपमापृच्छयोरपि
॥५७॥कथम्हर्षेचगर्हायांप्रकारार्थेचसंभ्रमे॥प्रश्नेसंभावना
यांचकामम्चानुमतौस्मृतम्॥५८॥प्रकाशेचव्यसूयायांतथा
नुगमनेपिच॥जोषम्सुखेप्रशंसायांतूष्णींलंघनयोरपि॥५९
॥नूनम्तुनिश्चितेतर्केस्मरणेवाक्यपूरणे॥परम्नियोगेक्षेमे
चप्राध्वम्नर्मानुकूलयोः॥६०॥सत्यम्प्रश्नेऽभ्युपगमे॥ ॥
मचतुः॥ ॥ऽवश्यम्नित्यप्रयत्नयोः॥ अभीक्ष्णम्मुहुर
श्रांतेशीघ्रप्रकर्षयोरपि॥६१॥इदानीम्वाक्यभूषायांसंप्रत्यर्थे
चदृश्यते॥तद्दिनम्दिनमध्येस्यात्तथैवप्रतिवासरे॥६२॥सां
प्रतंचाधुनार्थेस्यादुचितार्थेचदृश्यते॥ ॥यद्विः॥ ॥
अयिप्रश्नानुनययोस्तथासंबोधनेपिच॥६३॥अयेक्रोधविषा
देचसंभ्रमेस्मरणेपिच॥दिष्ट्याहर्षेमंगलेचपश्यशब्दस्तुविस्म

ये॥६४॥ प्रशंसायामपितथा यत्रिः समयां
तिकमध्ययोः॥ ॥रेकम्॥ ॥प्रप्रकर्षेगताद्यर्थे
र्गाद्विः प्यरेप्राकृत्यसूययोः॥६५॥उर्यूरीचाप्युभौशब्दौवि
स्तारेंगीकृतावपि॥ दुर्निषेधेचदुष्टेचनिर्निर्णयनिषेधयोः॥६६॥प
रिस्यात्सर्वतोभावेवर्जनेव्याधिशेषयोः॥ इत्थंभूताख्यानभागवी
प्सालिंगनलक्षणे॥६७॥दोषाख्यानेनिरसनेपूजाव्याप्त्योश्चभू
षणे॥ पराविमोक्षप्राधान्यप्रातिलोम्येषुधर्षणे॥६८॥आभिमुख्ये
भृशार्थेचविक्रमेचगतौवधे॥पुरापुराणेनिकटेप्रबंधातीतभावि
षु॥६९॥स्वःप्रेत्यव्योम्निनाकेचा॥ ॥रत्रिः॥ ॥
प्यंतःस्वीकारमध्ययोः॥अंतरापिविनार्थेस्यान्मध्यार्थनिकटार्थ-
योः॥७०॥उररर्यूररर्यूररीचविस्तारेंगीकृतौत्रयम्॥नकिर्निषेधो
पमयोःप्रादुःप्राकाश्यइष्यते॥७१॥संभाव्येचप्रवृत्तौचपुनरप्रथ
मेमतम्॥अधिकारेचभेदेचतथापक्षांतरेपिच॥७२॥ ॥
लद्विः॥ ॥किलशब्दस्तुवार्तायांसंभाव्यानुशयार्थयोः॥
खलुस्याद्वाक्यभूषायांजिज्ञासायांचसांत्वने॥७३॥वीप्सामानेनि
षेधेषुपूरणेपादवाक्ययोः॥ ॥वैकम्॥ ॥वा-
स्याद्विकल्पोपमयोर्वितर्केपादपूरणे॥७४॥समुच्चयेचविश्रंभेना
नार्थातीतयोरपि॥ विनिग्रहेनियोगेचतथैवपादपूरणे॥७५॥नि
श्चयेसहनेहेतावव्याप्तिविनियोगयोः॥ ईषदर्थेपरिभवेशुद्धाव
लंबनेपिच॥७६॥विज्ञाने॥ ॥वद्विः॥ ॥ऽथेवचौ
पम्येनियोगेवाक्यपूरणे॥अवधारणेचचारनियोगेचविनिग्रहे
॥७७॥ ॥षद्विः॥ ॥उषारात्रौमदंतेचदो
षारात्रौचतन्मुखे॥ मंक्षुशीघ्रेभृशार्थेच॥ ॥षत्रिः॥ ॥
निकषांतिकमध्ययोः॥७८॥ ॥सैकम्॥ ॥स्त्र
पूजायांभृशार्थानुमतिकृच्छ्रसमृद्धिषु॥ ॥सद्विः॥ ॥
आस्मरणेपाकरणेकोपसंतापयोरपि॥७९॥ ईदुःखभावने

कोपे निर्निर्बंधे च निश्चये॥ साकल्यातीतयोर्भोस्तु संबोधनविषाद
योः॥ ८०॥ ॥ सत्रिः॥ ॥ अंजसा शब्द आख्यातः
स्तत्वतूर्णार्थयोरपि॥ तिरोऽन्तर्द्धौ तिर्यगर्थे ना चेस्स्वैराल्पयोर्मतम्॥
८१॥ पुरोऽग्रे प्रथमे भूयोऽधिकारे च पुनःपुनः॥ मिथोऽन्योन्ये रहोऽर्थे
च शनैःस्वैरे शनैश्चरे॥ ८२॥ ॥ सचतुः॥ ॥ अभि
तः शीघ्र साकल्य संमुखोभयतोऽन्तिके॥ अग्रतः प्रथमे चाग्रे पुर
तः प्रथमाग्रयोः॥ ८३॥ पूर्वेद्युः प्रातः काले स्यात्तथैव गतवासरे॥
॥ ॥ हैकम्॥ ॥ हः स्यात्संबोधने पादपूरणे च विनि
ग्रहे॥ ८४॥ नियोगे चाक्षिपायां स्यात्कुत्सायामपि दृश्यते॥ हा विषादे
च शोके च कुत्सादुःखार्थयोरपि॥ ८५॥ हि पादपूरणे हेतौ विशेषेऽव
धारणे॥ प्रश्नहेत्वपदेशे च संभ्रमासूययोरपि॥ ८६॥ ही दुःखहे
त्वाख्याना विषादे विस्मये पि च॥ हे संबोधन आह्वानेप्यसूया
दौ च दृश्यते॥ ८७॥ है संबोधन आह्वाने हो हो शब्दौ तथैतयोः
॥ ॥ हद्विः॥ ॥ अह प्रशंसाक्षिपयोर्नियोगे
च विनिग्रहे॥ ८८॥ अहो धिगर्थे शोके च करुणार्थ विषादयोः
॥ संबोधने प्रशंसायां विस्मये पादपूरणे॥ ८९॥ असूयायां वितर्के
स्यात् हाह क्षेपनियोगयोः॥ आहो प्रश्ने विचारे च सह साकल्य
इष्यते॥ ९०॥ विद्यमाने च सादृश्य योगपद्य समृद्धिषु॥ संबंधे
च तथा हीही शब्दो विस्मय हास्ययोः॥ ९१॥ हे हे संबोधने हूतौ हो
हो शब्दस्तथैतयोः॥ ॥ हत्रिः॥ ॥ अह
ह त्यद्भुते खेदे परिक्लेश प्रकर्षयोः॥ ९२॥ संबोधनेऽपि चोताहो
प्ररिप्रश्न विचारयोः॥ ॥ इत्यव्ययानेकार्थव
र्गः॥ ॥ २३७८॥ ॥ उत्पलिनीशब्दार्ण
व संसारावर्तनाममालाख्यान्॥ भागुरि वररुचि शाश्वत बो
पालिनरंतिदेव हरकोषान्॥ १॥ अमरशशांक हलायुध गोव
र्धन रभस पालकृतकोषान्॥ रुद्रामर दत्ताजय गंगाधर धर

णिकोषांश्च॥ हारावल्यभिधानंत्रिकांडशेषंचरत्नमालांच॥अपि
बहुदोषंविश्वप्रकाशकोषंचस्फविचार्य॥३॥वाग्भटमाधववाच-
स्पतिधर्मव्याडितारपालाख्यान्॥ अपिविश्वरूपविक्रमादित्य-
नामलिंगानिस्फविचार्य॥४॥कात्यायनवामनचंद्रगोमिरचितानि
लिंगशास्त्राणि॥पाणिनिपदानुशासनपुराणकाव्यादिकंचस्फ
निरूप्य॥५॥षट्शतगाथाकोषप्रणयनविख्यातकौशलेनाय
म्॥ मेदिनिकरेणकोषःप्राणकरसूनुनारचितः॥६॥ ॥
इतिमेदिनिकृतानेकार्थकोषःसमाप्तः॥ ॥शंभंभवतु॥ ॥

॥इतिमेदिनिकोशःसमाप्तः॥

---

## ॥अथएकाक्षरीकोशःप्रारभ्यते॥

श्रीगणेशायनमः॥ ॥अकारोवासुदेवःस्यादाकार
स्तुपितामहः॥ पूजायामपिमांगल्येआकारःपरिकीर्तितः॥१॥
इकारउच्यतेकामोलक्ष्मीरीकारउच्यते॥उकारःशंकरःप्रोक्त
ऊकारश्चापिलक्षणे॥२॥रक्षणेचापिऊकारऊकारोब्रह्मणि
स्मृतः॥ऋकारोवेदमातास्यात्ॠकारोदनुजप्रसूः॥३॥ऌ
कारोदेवजातीनांमातासद्भिःप्रकीर्तिता॥ॡकारःस्मर्यतेपूर्वैर्ज
ननीशब्दकोविदैः॥४॥एकारउच्यतेविष्णुरैकारःस्यान्महेश्वरः
॥ओकारस्तुभवेद्ब्रह्माऔकारोनंतउच्यते॥५॥अंस्याच्चप
रंब्रह्मअःस्याच्चैवमहेश्वरः॥कःप्रजापतिरुद्दिष्टोकोर्कवाय्व
नलेषुच॥६॥कश्चात्मनिमयूरेचकःप्रकाशउदाहृतः॥कंशिरो
जलमाख्यातंकंसुखंचप्रकीर्तितम्॥७॥पृथिव्यांकुःसमाख्या
तःकुःशब्देपिप्रकीर्तितः॥खमिंद्रियेखमाकाशेखःस्वर्गेपिप्रकी

र्तितः॥ ८॥ सामान्येच तथाशून्येरवशब्दःपरिकीर्तितः॥ गोगणेशः समुद्दिष्टोगंधर्वोगः प्रकीर्तितः॥ ९॥ गंगीतंगाच गाथास्यात् गौश्च धेनुःसरस्वती॥ घा घंटाथसमारव्याता घो घनश्च प्रकीर्तितः॥ १०॥ घंटीशेहननेधर्मेघुर्घोणा घूर्ध्वनावपि॥ ङःकारोभैरवःख्यातोङ्कारोविषयस्पृहा॥ ११॥ चश्चंद्रमाःसमारव्यातोभास्करेतस्करेमतः॥ निर्मलं छं समारव्यातंतरले छःप्रकीर्तितः॥ १२॥ छेदके छःसमारव्यातोविद्वद्भिः शब्दकोविदैः॥ जकारो गायने प्रोक्तोजयनेजः प्रकीर्तितः॥ १३॥ जेताजश्च प्रकथितः सूरिभिः शब्दशासने॥ रवो झकारः कथितोनष्टे झश्चोच्यतेबुधैः॥ १४॥ झकारश्च तथावायौ ने पथ्ये समुदाहृतः॥ ञकारोगायनेप्रोक्तोञकारो झर्झरध्वनौ॥ १५॥ टोधरित्र्यांचकरके टोध्वनौच प्रकीर्तितः॥ ठकारोजनतायांस्यात् ठोध्वनौचशठेपिच॥ १६॥ ठोमहेशःसमारव्यातोठश्चशून्ये प्रकीर्तितः॥ बृहध्वनौच ठःप्रोक्तस्तथाचंद्रस्यमंडले॥ १७॥ डकारः शंकरेत्रासे ध्वनौभीमेनिरुच्यते॥ ढकारः कीर्तिता ढक्का निर्गुणेनिर्धनेमतः॥ १८॥ णकारः सूकरे ज्ञानेनिश्चयेनिर्णयेपि च॥ तकारः कीर्तितश्चौरेक्रोडपुच्छ प्रकीर्तितः॥ १९॥ शिलोच्चये थकारः स्याथ्थकारोनयरक्षणे॥ दकारोभ्रेकलत्रेच्छेदेदाने चदातरि॥ २०॥ धंधनेसधनेधःस्यात्द्धिधातरिमनावपि॥ धिषणा धीःसमारव्याता धूश्चैवंभारवित्तयोः॥ २१॥ नेतानश्च समारव्यातास्तरणौ नः प्रकीर्तितः॥ नकारःसोगतेबुद्धोस्कतो वृक्षे प्रकीर्तितः॥ २२॥ नशब्दःस्यागतेबंधौ वृक्षेसूर्येच कीर्तितः॥ पःकुबेरःसमारव्यातः पश्चिमेच प्रकीर्तितः॥ २३॥ पवनेपःसमारव्यातःपःस्यात्पानेच पातरि॥ फफेवाते फकारःस्यात्तथाऽह्वानेप्रकीर्तितः॥ २४॥ फूत्कारेपिचफःप्रोक्तस्तथानिष्फलभाषणे॥ बकारो वरुणःप्रोक्तःकलशे बः फलेपिच॥ २५॥ वक्षस्थलेच बःप्रोक्तोगदायांसमुदाहृतः॥ नक्षत्रेभंबुधाःप्राहुर्भवनेभः प्रकीर्तितः॥ २६॥ दीप्तिर्भास्या

त्रभूर्भूमिर्भीर्भयंकथितंबुधैः॥ मःशिवश्चंद्रमावेधामा लक्ष्मीचप्र कीर्तिता॥२७॥ माचमातरिमानेचबंधनेमःप्रकीर्तितः॥ यशोयः क थितःप्राज्ञैर्योवायुरितिशब्दितः॥२८॥ यानेयातरियस्त्यागेकथितः शब्दवेदिभिः॥ रश्चरामेऽनिलेवन्हौभूमावपिधनेपिच॥२९॥ इंद्रि येधनरोधेच रुर्भयेचप्रकीर्तितः॥ लोदातोथालश्चभूमोभयेचा ल्हादनेपिच॥३०॥ लोवातेलवणेचस्यात्लोदानेचप्रकीर्तितः॥ लःश्लेषेवाशयेचैवप्रलयेसाधनेपिलः॥३१॥ मानसेवरुणेचैवलं कारःसांत्वनेपिच॥ विश्चपक्षीनिगदितोगगनंप्रतिकीर्तितं॥३२॥ शंसुखंशंकरःश्रेयः शाश्चसीम्निनिगद्यते॥ शयनेशुःसमाख्यातो हिंसायांशोनिगद्यते॥३३॥ षःकीर्तितोबुधैःश्रेष्ठेषश्चगंभीरलोच ने॥ उपसर्गेपरोक्षेचषकारःपरिकीर्तितः॥३४॥ सःकोपेवरपोसः स्यात्तथाभूलिनिकीर्तितः॥ साचलक्ष्मीबुधैःप्रोक्तागौरीसाचसई श्वरः॥३५॥ हूःकोपेवारणेहूश्चतथाभूलीप्रकीर्तितः॥ हिःपद्मावर णेप्रोक्तोहिःस्याद्द्विलधारणे॥३६॥ क्षःक्षेत्रेवक्षसिप्रोक्तोबुधैःक्षः शब्दशासने॥ क्षिःक्षेत्रेक्षत्ररक्षेचनृसिंहेचप्रकीर्तितः॥३७॥ आ गमेभ्योभिधानेभ्योधातुभ्यःशब्दशासनात्॥ एवमेकाक्षरंनामा भिधानंक्रियतेमया॥ ३८॥ ॥७॥ ॥छ॥

---

## इत्येकाक्षरकोशःसमाप्तः

---

श्रीगणेशायनमः॥ ॥श्रीवज्रयोगिन्यैनमः॥ भुजगपतिविमुक्त
स्वच्छनिर्मोकवल्लीविलसितमनुकुर्वन्यस्यगंगाप्रवाहः॥ शिरसि
सरसभास्वन्मालतीदामलक्ष्मींलघयतिहिमगौरः सोस्तुवःसाध्य
सिध्यै॥१॥ कल्पावसानसमयेस्थितयेकवीनांदेहांतरंकिमपियासृ
जतिप्रसन्ना॥ यस्याःप्रसादपरमाणुरपिप्रतिष्ठामभ्येतिकामपि
नमामिसरस्वतींताम्॥२॥ निर्मत्सराःसुकृतिनःखलुयेविविच्य
कर्णेगुणस्यकणमप्यवतंसयंति॥ येषांमनोनरमतेपरदोषवादे
तेकेचिदेवविरलाभुविसंचरंति॥३॥ मुक्तामयातिमधुरामसृणावदा
तच्छायाधिरागतरलामलसद्गुणश्रीः॥ साध्वीसतांभजतुकंठमसौ
प्रियेवहारावलीविरचितापुरुषोत्तमेन॥४॥ किन्नैवसंतिसुधिया
मभिधानकोशाःकिंतुप्रसिद्धविषयव्यवहारभाजः॥ गोष्ठीषुवा
दपरमोहफलासुकेषांहारावलीनविदधातिविदग्धमानं॥५॥
एकंतमेवगणयंतिपरंविदग्धावाचांविदग्धिमनिमज्जतियस्य
लोकः॥ गोष्ठीषुयःपरमशाब्दिकदुर्गमासुदुर्बोधशब्दगतसंशयमु
च्छिनत्ति॥६॥ आव्याधशब्दतःश्लोकैरर्धैरातलिनात्ततः॥ शब्दाःपादै
र्विबोद्धव्याःप्रागनेकार्थतस्ततः॥७॥ ॥विषमनयनशंभूचंद्र
मौलिर्भगालीवृषभगतिगणेशौरेरिहाणोवृषांकः॥ त्रिपुरदहनभूलि
स्थाणुखट्वांगिहिंडिप्रियतमशितिकंठाभर्ग्यकल्माषकंठौ॥१६॥८
॥ शतधामाचतुष्पाणिःपृश्निगर्भोगदाग्रजः॥ गदीकौस्तुभवक्षा
श्चपांचजन्यधरोच्युतः॥८॥ ९॥ वैनतेयःपक्षिसिंहःशाल्मली
हरिवाहनः॥ अमृताहरणस्तार्क्ष्योनागाशनखगेश्वरौ॥८॥१०॥ ख
गपतंगवियन्मणिभानवोहरिभगेननिदाघकराद्रयः॥ किरणमा
लिविरोचनहेलयोदिनमणिस्तरणिश्चदिनप्रणीः॥१५॥११॥ श्रुत
श्रवानुजःक्रोडोमंदश्छायासुतःशनिः॥ सप्तार्चिर्नीलवसनःपातंगिः

---

शिवस्य१६(८)विष्णोः८(९) गरुडस्य८(१०) सूर्यस्य१५(११)शनेश्चरस्य९(१२

क्रूरलोचनः॥ ९॥ १२॥ दाक्षायणीपतिवलक्षगुपक्षजन्मतुंगीशराज्ञि मणिदर्शविपत्क्रधांगः॥ राजासमुद्रनवनीततमोनुदो माग्लौरिंदुरेणतिलकोहरिरोहिणीशौ॥१६॥१३॥महामृगःपुष्कर दीर्घमारुती विलोमजिह्वोजलकांक्षिसिंधुरो॥ द्विपायिसूर्पश्रुतिकुंभिसामजामहामदःपंचकिपद्मिपल्लवः॥१४॥१४॥ दर्वीकरोविषधरःश्वसनासनोहिश्चक्री फणाभरविषायुधदीर्घपृष्ठाः॥ कुंभीनसहिरसनोसमकोलदंष्ट्रिगोकर्णकुंडलिलतारसनाविषास्यः॥१६॥१५॥ मयास्योपकृतंपूर्वमयंचोपकरिष्यति॥ इतियःक्रियतेसंधिःप्रतीहारःसउच्यते॥१॥१६॥ शेषमक्षरमादायप्रतिश्लोकंक्रमेणयत्॥ अन्योन्यंपठ्यतेश्लोकःप्रतिमालेतिसामता॥१॥१७॥ नभश्चरोवायुदारुर्वनदोगगनध्वजः॥ व्योमधूमोजलमसिःखतमालःपयोधरः॥८॥१८॥ हर्षादुत्सवकालेयद्वलंकालांबरादिकम्॥ आकृष्यगृह्यतेपूर्णपात्रंपूर्णानकंचतत्॥२॥१९॥ स्फुरतेकर्णदेशेषुयच्चदेशीयभाषया॥ दंपत्योर्जल्पितंमंदंमन्मनंतद्विदुर्बुधाः॥१॥२०॥ यद्दीयतेतुदेवेभ्योमनोराज्यस्यसिद्धये॥ उपयाचितकंदिव्यदोहदंतद्विदुर्बुधाः॥२॥२१॥ नक्तंनिर्गत्ययत्किंचिच्छुभाशुभकरंवचः॥श्रूयतेतद्विदुर्धीरादेवप्रश्नमुपश्रुतिम्॥२॥२२॥ तृन्द्रसूत्रकमित्याहुरिंद्रतूलंमनीषिणः॥ ग्रीष्महासंवंशकफंवाततूलंमरुध्वजं॥६॥२३॥ दशेंधनोगृहमणिःस्नेहाशःकज्जलध्वजः॥ जटाज्वालोदशाकर्षःकथितोबहुरश्मिभिः॥६॥२४॥ गोमयच्छत्रिकामाहुर्दिलीरंचशिलींध्रकम्॥ उर्व्यंगंचबशारोहंगोलासमपरेविदुः॥६॥२५॥ हिमवान्१हेमकूटश्च१निषधो१मेरु१रेवच॥ चैत्रः१ कर्णिच१श्रृंगी१च

चंद्रमसः१६(१३)गजस्य१४(१४)सर्पस्य१६(१५)मत्युपकारार्थकृतसमंजसः१(१६)
अंत्याक्षरक्रमेणश्लोकपाठस्य१(१७)मेघस्य८(१८)हर्षेवर्षाद्याकर्षणस्य२(१९)
दंपत्योःशनैःकथनस्य१(२०)इष्टार्थेदेवेभ्योदीयमानद्रव्यस्य२(२१)आकाशवाण्याः
२(२२)आकाशउड्डीयमानसूत्रस्य६(२३)प्रदीपस्य६(२४)गोमयच्छत्रिकायाः६(२५)

सतेते वर्षपर्वताः॥ २६॥ इति श्लोकावधिः॥ ॥व्याधो मृगवधाजीवो निषादः पुल्कसः प्लवः॥५॥ बालवायजमिच्छंति वैदूर्यमणिमुत्तमाः॥२७॥ कालग्रंथिः समाः संवत्मास मानो युगांसकः॥५॥ मासो वर्षांशकः श्रामो वर्षांगः स्यादहर्गणः॥५॥२८॥ मदयोगविधानं तु व्यस्तारं १ करिणां विदुः॥ पृष्ठवंशस्य यन्मांसं तत्सनं १ तस्य चक्षते॥ २९॥ कर्णवेधानिका प्रोक्ता नालिके १ ति विषाणिनाम्॥ प्रवेष्ट १ मंतः स्वेदानां मंदमांसं विदुर्बुधाः॥ ३०॥ कुमारभृत्या १ गर्भिण्याः परिचर्याभिधीयते॥ नवोढावस्त्रमानंदपट २ मिच्छंति सूरयः॥ ३१॥ कर्णीसुतो मूलदेवो मूलभद्रः कुलांकुरः॥ ४॥ ज्येष्ठामूलीयमिच्छंति मासमाषाढपूर्वजम्॥ १॥ ३२॥ नित्यकर्मसमाचारनिष्ठुरत्वेकदुंकता १ वीणानुबंधोधीमद्भिरुपनाहो २ ऽभिधीयते॥ ३३॥ स्यात्पालिका कुंतलिका २ दध्यादिच्छेदनात्तु या॥ वैशाखो दधिचारः स्यात्तर्काटः करघर्षणः॥ ४॥ ३४॥ स्यादाषाढभवो भौमो नवार्चिर्गगनोल्मुकः॥ ४॥ पंचार्चिर्श्चश्रविष्ठाजो ज्ञ एकांगः प्रहर्षणः॥ ५॥ ३५॥ दीर्दिविर्ह्रोशार्चिः स्याज्जीवः प्राक्फाल्गुनीभवः॥ ४॥ काव्यो दैत्यपुरोधाः स्यात्षोडशार्चिर्मघाभवः॥ ४॥ ३६॥ उपप्लवो कचः केतुराश्लेषाभव आह्निकः॥ ५॥ ज्योतीरथो ग्रहोधारो ध्रुव उत्तानपादजः॥ ४॥ ३७॥ स्वर्भानुर्ग्रहकल्लोलं विदुरभ्रपिशाचकम्॥ ३॥ वर्नीपकोयाचनको वस्कर्कोटो मुखंपचः॥ ४॥ ३८॥ जायमानविषाणाग्रेकटाह्नो १ महिषीशिशौ॥ छेदो हस्तेन सस्यानां कटभंग १ उदाहृतः॥ ३९॥ जलभाजंगमकुटीकावारीमूर्द्धकर्परी॥ ४॥ उष्णवारणमत्कूटश्चकांगं च पुटोटजं॥ ४॥ ४०॥ मुनी

सप्तवर्षपर्वतानां प्रत्येकमेकैकं (२६) व्याधस्य ५ वैदूर्यस्य १ (२७) संवत्सरस्य ५ मासस्य ५ (२८) करिणां मदयोगविधानस्य १ गजपृष्ठमांसस्य १ (२९) गजकर्णवेधिन्याः १ गजदंतमांसस्य १ (३१) गर्भिणीपरिचर्यायाः १ नवोढावस्त्रस्य १ (३२) ग्रामप्रधानदेवतायाः ४) ज्येष्ठमासस्य १ (३२) नित्यकर्माशक्ततायाः १ वैरानुबंधस्य २ (३३) दध्यादिच्छेदिन्याः २ दधिमंथनदंडस्य ४ (३४) मंगलस्य ४ बुधस्य ५ (३५) बृहस्पतेः ४ शुक्रस्य ४ (३६) केतोः ५ ध्रुवस्य ४ (३७) राहोः ३ याचकस्य ४ (३८) जातशृंगस्य महिषीशिशोः १ हस्तेन सस्यच्छेदस्य १ (३९) जलभाजनायाः ४ छत्रस्य ४ (४०)

नींचचिताकुड्यांपर्णाटजसहोटजौ॥२॥कारोत्तरश्चवीनाहीभ्रहिरंधूर्ज
लंबिका४॥४१॥अलकूपीजलाढीलीतलकंपुष्करिण्यपि॥४॥असन्ना
स्तमयःकश्चिदुपधूपित१इष्यते॥४२॥तत्क्षणादित्यमुक्तांतुवदंत्यंगा
रिणींदिशम्॥अगारितं१पलाशानांकलिकानिर्गमोभवेत्॥४३॥गां
धारंरक्तचूर्णंतुसिंदूरंरक्तवालुकम्॥४॥कुसृत्याविभवान्वेषीपा
र्श्विकःसंधिजीविकः॥२॥४४॥अथश्वरोभवेच्चोरःकुसुमालःकुजंभलः
॥४॥प्रोक्तःकरिकुसंभस्तुनागकेसरचूर्णके॥२॥४५॥वर्बरंवर्बरीकंच
वर्बरीत्यपिचेष्यते॥३॥अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकं१॥४६
यमिनांयद्व्रतंगोप्यंतत्त्वंजनतरंविदुः॥१॥स्यादाचामनकःप्रोठःकट
कोलपतद्ग्रहः॥४॥४७॥मेलामंदामसिमणिमसिधानीमसिमसूः५
वालोपवीतंतुविदुःपंचावटमुरस्कटं॥३॥४८॥नारीणांमंडलीनृत्यंबु
धाहल्लीषकंविदुः॥मारीचोयाजकगजोराजहस्तीमदोत्कटः४॥४९॥अ
लंकारस्यवर्णंयत्तच्छृंगीकनकं१मतं॥रतिलक्षंनिधुवनंसंयोजनं३
मितिस्मृतं॥५०॥जीमूतकुटकुट्टारकुट्टाराःकंदराकरः॥४॥उद्देशोगंड
कूपस्तुपर्वतस्याभिधीयते॥५१॥वासिताधेनुकाचैववशाचकरेणा
१मता॥ब्रह्माग्रभूःक्रतुपशुःसिंहविक्रांतवाजिनौ॥४॥५२॥समुद्रगा
निर्झरिणीतलोदाजंबालिनीशैवलिनीतरंगिणी॥विपाठकाद्व
कपत्रवाहाःपत्रीखगोवीरतरोस्त्रकंटकः॥७॥५३॥वर्णदूतःस्वस्तिमुखो

---

मुनिचिताकुट्याः२ कूपस्य४(४१)पुष्करिण्याः४आसन्नास्तमयस्य१(४२)तत्क्ष
णादित्यभुक्तदिशः१ पलाशकलिकायाः१(४३॥)सिंदूरस्य४पिशुनस्य२(४४)
दिवाचौरस्य२नागकेसरचूर्णस्य२(४५)बर्बरस्य३अभावात्स्त्रीपरित्यागस्य
१(४६)यतीनांगोप्यमैथुनस्य१पतद्ग्रहस्य४(४७)मसिधान्याः५वालकपरिधा
नवस्त्रस्य३(४८)स्त्रीनृत्यस्य१ राजहस्तिनः४(४९)अलंकारस्वर्णस्य१
मैथुनस्य३(५०) पर्वतस्य४ पर्वतोच्चस्थलस्य१(५१) हस्तिन्याः४ अश्वस्य
४(५२) नद्याः६ शरस्य७(५३)

स्रोवाचिकहारकः॥४॥ लेखोनिबध्यतेयेनतत्रकाचनकाभिधा॥१॥
५४॥ क्षाराच्छंमाणिमंथंचविदुःसिंधूपलंबुधाः॥३॥ पिशितंपललं
मांसंक्रव्यमामिषसुह्रसं॥६॥५५॥ पारावारमहाकच्छौमहीप्राची
रदारदौ॥४॥ जिव्हादरःकीकशास्यश्चंचुमत्तरुशायिनौ॥४॥५६॥ इं
द्रक्रीडासरःप्राज्ञैर्नंदीसरइतिस्मृतम्॥५७॥ धूमोर्णापतिरुद्दिष्टोय
मोमहिषवाहनः॥३॥५७॥ पयोधनोमेघकफोघनोफलोमेघास्थिवी
जोदकतोयडिंभाः॥६॥ शंपाचिराभाचपलाछटाभान्हादिन्यधीरा-
घनवल्लिकाच॥७॥५८॥ पादालिंदीतरंडानौस्तरणिस्तारणिस्त
रिः॥६॥ किलाटःशोधितक्षीरपिंडःसूरिभिरिष्यते॥५९॥ कालाय
समयस्तीक्ष्णंगिरिसारंचशस्तकम्॥५॥ हय्यंगवीनंसरजंमंथजं
चकलंबुटं॥४॥६०॥ एकशफांघ्रिकंबंधमाहुर्दामांचलंबुधाः॥ वे
त्तास्त्रीपुंसयोश्चिन्हंसामुद्रिक१उदाहृतः॥६१॥ तिंतिलीकाऽस्थि
भिर्द्यूतक्रीडायांचुंचुलिर्भवेत्॥ वक्रालललाटगास्तिस्रोभस्मरेखा
स्त्रिपुंड्रकम्॥३॥६२॥ हालाकामालिकामंडाधीरास्यान्मदनीच
माध्वीच॥६॥ आहुश्चषकंतुपानपात्रंपारीमप्यनुतर्षणंकवीं
द्राः॥६३॥ कुसुंभःकरकश्चैत्यमुखःकमंडलुः४स्मृतः॥ असहा
योनर्तकश्चतालावचर१इष्यते॥६४॥ कथितःकौमुदीवृक्षोदीप
वृक्षःशिखातरुः॥३॥ कोजागरेतथासद्भिःकौमुदीचार२इष्यते६५

---

लिखनपत्रस्य ५ पत्रीबंधनस्य १ (५४) सैंधवलवणास्य ३ मांसस्य ६
(५५) समुद्रस्य ४ पक्षिणाः ४ (५६) इंद्रक्रीडासरसः १ यमस्य ३ (५७)
मेघप्रस्तरस्य ६ विद्युतः ७ (५८) नौकायाः ६ शोधितक्षीरपिंडस्य
२ (५९) लोहस्य ५ नवनीतस्य ४ (६०) एकखुरयुक्तचरणबंधनस्य
३ स्त्रीपुरुषचिन्हवेत्तुः १ (६१) अस्थिभिर्द्यूतक्रीडायाः २ ललाटस्थ
भस्मरेखायाः ३ (६२) सुरायाः ६ पानपात्रस्य ४ (६३) कमंडलोः ४ अ
सहायनर्तकस्य १ (६४) दीपवृक्षस्य ३ कोजागरायाः २ (६५)

समुद्रगृहमित्याहुर्जलयंत्रनिकेतनं ॥२॥ प्रेतादिभिर्गृहीतोयः स आविष्टो१ऽश्मन्वहिः ॥६६॥ हिमसिंदाग्निधूमश्च रवबाष्पोरजनीजलं॥४॥ येशिवाधृतनोत्सृष्टास्तेसंध्यावरुध्यो ३ वृषाः ॥६७॥ विषाक्तास्त्रहतस्याहुः पशोर्मांसंतुगृंजनं ॥१॥ धूमिकाधूममहिर्षा हिमझंटिः कुहेलिका ॥४॥६८॥ पोताच्छादनमाहुस्तकवरकमथवस्त्रकुट्टिमंकेमयः तंत्रविमुक्तंवासांनिष्प्रवाणिनिष्प्रवाणिं१च ॥६९॥ महाघोषंक्रयारोहंहट्टंपण्याजिरं४विदुः ॥ बहुमानुषसंकीर्णंनिर्घटंच करांगणम् ॥२॥७० ॥ शालभंजीदारुगर्भाकुरंटीदारुपुत्रिका ॥ ४॥ कादंबिनीनवोमेघः कालीस्यात्कालिका ३ पिच ॥७१॥ क्रोशध्वनिः क्रोशतालोढक्काविजयमर्दलः ॥ स्यान्मनिपत्तिःपटहोलंपापटह३ इत्यपि ॥७२॥ कुकूलंकायकलनं तनुत्रंदंशनंविदुः ॥ शिरस्त्रंशीर्षरक्षंचशीर्षण्यंशीर्षकं४चतत् ॥७३॥ स्याज्जालिकालोहमयीजालप्रायांगरक्षिणी ॥२॥ पन्नध्रीपादविरजाः कोशीपादरथा४भवेत् ॥७४॥ रुचकं लवणंक्षारंतीक्ष्णंजलरसं ३ विदुः ॥ ज्योतिर्बीजंचखद्योतंध्वांतोन्मेषंतमोमणिः ॥४॥७५॥ जलभूकरजलजिह्वोजलकेटकवार्भटौतथानक्रे ॥५॥ जलनकुलजलविडालौनीराखुजलप्लवावुद्रे ॥५॥७६॥ शिशुमारोजलकपिश्चपलांगोऽसिपुच्छकः ॥ ग्राहोजलकिराटश्चनक्राजोजलांटकः ॥४॥७७॥ मृतकांतकश्चभीरुहृंकधूर्तशयालुवंचकाभरु

---

जलयंत्रार्थगृहस्य २ प्रेतादिगृहीतस्य १ (६६) हिमस्य ४ शिवालयोत्सृष्टवृषस्य ३ (६७) विषाक्तास्त्राहतपशुमांसस्य १ कुहेलिकाया ४ (३६) पोताच्छादनस्य ३ तंत्रविमुक्तवाससः १ (६९) हट्टस्य ४ बहुनरसंकीर्णहट्टस्य २ (७०) काष्ठपुत्तलिकायाः ४ नूतनमेघजालस्य ३ (७१) ढक्कायाः ४ पटहस्य ३ (७२) वस्त्रांगरक्षिण्याः ४ शिरस्त्राणस्य ४ (७३) लोहवर्मणः २ उपानहः ४ (७४) क्षारलवणस्य ३ खद्योतस्य ४ (७५) नक्रस्य ५ उद्रस्य ५ (७६) शिशुमारस्य ४ ग्राहस्य ४ (७७)

अः॥ ७॥ शालामृगोस्थिभक्षांग्रामम्टगोमंडलः कपिलः॥५।७८॥ उ
ल्कामुखीशृगाल्यांदीप्तजिह्वेतिसामता॥ स्कंधवाहस्तुशंकश्चशृं
गीगोरक्षधूर्जिलः॥५॥ ७९॥ हरंबःकासरश्चैववरकाक्षःसैरिभ४स्तथा॥
रोमशोबहुरोमास्यादरणश्चपृथूदरः॥४।८०॥ इडिक्कस्तुबालवास्या
वनस्थागोनिरोमशः ४॥ वरणोधूम्रभृकःस्यादुष्ट्रःशृंरवलकस्तथा॥
८१॥ चक्रमुखःसूचिरोमावराहःस्थूलनासिकः॥४॥ कंठीरवस्तु
पारींद्रःकेसरीगजमाचलः॥४॥८२॥ नेत्रपिंडोवृषाहारोमेनादः
कुंदम४स्मृतः॥ गंधाखुर्गंधनकुलश्चुंचुःपुंवृषउच्यते॥८३॥ द्रो
णोरिष्टोनालिजंघआत्मघोषस्तुमोद्गलिः॥५॥ गोभंडीरःपंककी
रोहापुत्रीराजभद्रिका॥४॥८४॥ गंगाचिल्लीतुदेवद्रीविश्वकाजल
कुक्कुटी॥४॥ चिदूसारिकातुकुणपीगोराटीगोकिराटिका॥४।८५
मृगेंद्रचटकोघातिपक्षीग्राहकमारको॥ कुलालंकुक्कुटंप्राहुःकु
कुभंकुहकस्वरं॥४॥८६॥ कर्कराक्षःकलाटीनःखंजलेखस्तुखं
जनः॥४॥ प्रासादकुक्कुटोझल्लकंठोगृहकपोतकः॥३॥८७॥ ध्वांक्ष
पुष्टःकलकंठोमधुकंठःकुहूमुखः॥४॥ झंपाशीमत्स्यरंकःस्याज्जलम
द्रुर्मणीचकः॥४॥८८॥ कलविंकश्चित्रपृष्ठोगृहनीडोवृषायणः॥४॥
वरटाचित्रपादाचचित्रनेत्राचसारिका॥४॥८९॥ मयूरचटकोदक्षःकृक
वाकुर्निशाकरः॥४॥ शतपत्रःसितापांगःप्रचलाकीचचंद्रकी॥४॥९०

---

शृगालस्य ७ श्वनः ५(७८) उल्कामुखीशृगाल्याः १ शकटादिवाहक
वृषभस्य ५ (७९) महिषस्य ४ मेषस्य ४(८०) वृहद्वानरस्य ४ उष्ट्रस्य
४(८१) वराहस्य ४ सिंहस्य ४ (८२) बिडालस्य ४ छुछुंदर्याः ४(८३) द
ग्धकाकस्य ५ हापुत्राख्यपक्षिणः ४ (८४) गंगाचिल्याः ४ चिदूसारिका-
याः ४ (८५) श्येनस्य ४ वनकुक्कुटस्य ४(८६) खंजरीटस्य ४ कपोतस्य ३
(८७) कोकिलस्य ४ मत्स्यरंगस्य ४(८८) कलविंकस्य ४ सारिकायाः ४
(८९) ग्रामकुक्कुटस्य ४ मयूरस्य ४(९०)

किसलयमपि तरुरागं विदुर्लताया वकं प्रवालंच ॥४॥ कंटकसंज्ञा
स्तरुनखसिताग्रदलसूचिसांकिलद्रुमराः॥ ६॥ ९१॥ द्रोणीदलः सूचि
पुष्पांजंबूलः क्रकचच्छदः॥ ४॥ मंडातिष्यफला धात्रीवल्या पंचरसा
शिवा॥ ६॥ ९२॥ सहस्रवीर्याविरजाभार्गवीमंडलीरुहा॥ ५॥ प्रहर्षिणी
निशाख्याचलसागंधपलाशिका॥ ४॥ ९३॥ मृदुपुष्पः शूकतरुः शिरीषो
विषनाशनः॥ ४॥ वराहकालीकथितः सूर्यावर्त २स्तुशाब्दिकैः॥ ९४॥
वज्रयस्यास्थिसंहारो हस्तिशंडी वनालिका॥ ४॥ वनतिक्तस्त्रियां
ग्रीष्मातिरीटः पक्षस्कंदरः॥ ३॥ ९५॥ मधुपुष्पो मधूकश्च गुडपुष्पो
मधुद्रुमः॥ ४॥ वृत्तपुष्पः प्रावृषेण्यो हारिद्रस्तु हलिप्रियः॥ ४॥ ९६॥ ए
लात्वचिसुगंधाच पुटिकाचर्मसंभवा॥ ४॥ कूष्मांडकः पुष्पफलो घन
वासश्च वेष्टकः॥ ४॥ ९७॥ वेषणः कासमर्दश्च पत्रोपस्कर ३ इत्यपि॥
ओकोदशालीप्राचीरमो घोठिरवहालिका॥ ५॥ ९८॥ कल्पवर्तः प्रा
तराशः प्रातर्भोजनमिष्यते॥ शृगालिकाचडिंबंच डमरं विद्रवो ४
पिच॥ ९९॥ स्कंधफलः स्तुतुंगश्च नारिकेलः पटोदकः॥ ४॥ गुडदा
रुर्मधुतृणमसिपत्रो महारसः॥ ४॥ १०० ॥ राज्याकुलो महाकंदो मूलको
हस्तिदंतकः॥ ४॥ क्षुद्ररसातिक्तगुंजा सरया विरूप कर्टी॥ ४॥ १॥ क्षुद्रप
त्राचचांगेरीक्षुद्राम्लाचाम्ललोणिका॥ ४॥ प्राचीनामलकं रक्तंबदराम
लकं ३ तथा॥ ४॥ पिष्टसौरभमेकांगं श्रीखंडं मालयं ४ विदुः॥ मृगनाभि

---

नूतनपल्लवस्य ४ वृक्षकंटकस्य ६ (९१) केतकस्य ४ धात्र्याः ६ (९२) दू
र्वायाः ५ गंधपलासिकायाः ४ (९३) शिरीषस्य ४ सूर्यावर्त्तस्य २ (९४) अ
स्थिसंहारस्य ४ लोध्रस्य ३ (९५) मधूकवृक्षस्य ४ कदंबस्य ४ (९६) ए
लायाः ४ कूष्मांडस्य ४ (९७) कासमर्द्दस्य ३ भित्तेः ५ (९८) प्रातर्भो
जनस्य २ भीत्यापलायनस्य ४ (९९) नारिकेलस्य ४ इक्षोः ४ (१००)
मूलस्य ४ करंजस्य ४ (१०१) आम्ललोनिकायाः ४ प्राचीनामलकस्य
३ (१०२) श्रीखंडस्य ४ (१०३)

मृगमदो गंधशेखर ३ मित्यपि॥३॥ सिताभ्रं नरु सारं च घेरकं रस केसरं॥४॥ कालेयं वंशकं जोंगं कालीयं वरचंदनं॥५॥४॥ तृणसारा मृत्स्फलारं भा च कदली ४ भवेत्॥ ऊर्ध्वासितः परारुः स्यात्तथा राजपटोलकः॥३॥५॥ कुंकुमं पीतकावेरं घुसृणं कुसमात्मकं॥४॥ अरकोजलकेशश्च कावारं शेवलं ४ विदुः॥६॥ उन्मत्तः काहलापुष्पो बृहत्पाटलिघांटिकौ॥४॥ किंशुकः करकः पर्णी लाक्षा वृक्षः सुभीरवः॥४॥७॥ अमंड पंचांगुल वर्धमाना गंधर्वहस्तस्त्रिपुटीफल ५ श्च॥ रेणुः सतीलस्तृणकेतु मृत्युर्बीजो किलाटी च ततः स्फपर्वा॥६॥८॥ रुचमालोम रुद्रा हो धूमो मंभः शिखिध्वजः॥५॥ शाखा नगर १ माहुस्तद्यदा न्यर्णपुरांतरम्॥९॥ आहुर्जलकरंकश्च जलजं सूचिकामुखं॥३॥ उपजिह्विको त्यादिका च वादिरुद्दे हिकादिवी॥५॥१०॥ शुल्बमौदुंबरं रक्तं म्लेच्छास्यं ताम्रकं ५ विदुः॥ दुर्नामा दीर्घकोषी स्यात्पंकशुक्तिः सितालिका॥४॥११ आकाशमूली कुतृणं कुंभिका जलवल्कलम्॥ ४॥ शंबूको जलडिंबः स्याद्दुश्चरः पंकमंडुकः॥४॥१२॥ आटीलकं १ तर्णकानां स्थली स्फक्रीडनं मतम्॥ यष्टिः शब्दवती धीरैः खेरवीरक १ इति स्मृता॥१३॥ लेखा त्रयांकितं भालं त्रिपताकं १ विदुर्बुधाः॥ अर्धचंद्रं करेटं विदुरंगुलितोरणम्॥३॥१४॥ सिद्धजलं च गृहाम्लमवंतिसोमं तुषोदकं शुक्तं॥५॥ नग्नाटक निर्ग्रंथक भदंत

---

कस्तूर्याः ३ (१०३) कर्पूरस्य ४ अगुरु इति ख्यातस्य ५ (४) कदल्याः ४ पटोलस्य ३ (५) कुंकुमस्य ४ शैवलस्य ४ (६) धुस्तूरस्य ४ पलाशस्य ४ (७) एरंडस्य ५ वंशस्य ६ (८) धूमस्य ५ नगरांतिकपुरस्य १ (९) शंखस्य ३ उपजिह्विकायाः ५ (१०) ताम्रस्य ५ पंकशुक्तेः ४ (११) कुंभिकायाः ४ शंबूकस्य ४ (१२) तर्णकक्रीडनस्य १ शब्दध्वनीयष्ट्याः १ (१३) लेखात्रयांकितभालस्य १ गलेहस्ताधानस्य ३ (१४) कांजिकस्य ५

दिगंबरकानग्ने॥५॥१५॥ करपात्रं जलक्रीडाव्याल्युक्षीकरपत्रिका ४
शराणां पत्ररचना पत्रणा १ परिकीर्तिता॥१६॥ पंचभद्रा हया १
स्तेये पंच स्वंगेषु पुष्पिताः॥ यश्चारकोसुड्झ जांसस्या इङ्गभपाल
कः॥१॥१७॥ निगालस्थोयआवर्तः सहिदेवमणिः १ स्मृतः॥ तथाव
क्षसि वाहस्य श्रीवृक्षक १ उदाहृतः॥१८॥ बंधः पलाशपत्राणां
शीर्षे पत्रपिशाचिका॥१॥ स्फवसंतक १ शब्देन उच्यते मदनोत्स
वः॥१९॥ कर्वटं १ द्विशतग्राममध्ये ग्राममनोहरम्॥ तथा चतुःश
तग्राममध्ये द्रोणमुखं १ विदुः॥२०॥ यद्यात्रामंगलं साम तदप्रतिर
थं १ विदुः॥ शालाप्रासादशिखरे चंद्रशालेति १ कीर्तिता २१॥ ॥
इत्यर्धश्लोकावधिः॥ ॥ तल्लिनं तुच्छं २ मित्याहुर्गृहाम्भागृ
हकच्छपः॥ रवसंचारि पुरं सौधं १ रथ्या पांशुकुली २ भवेत्॥ एकं
नटः स्यात्कथको २ भंडश्चाटुपटुः स्मृतः॥ मक्षिका भस्मराली २ स्या
त्पांशुरो दंशकः २ स्मृतः॥२३॥ देवोद्यानं तु वैभ्राजं २ दीपाली दी
पशृंखला॥२॥ सुकुमारेपि सोमालं २ विषमे स्थपुटं २ विदुः॥२४
द्रुणहः खड्गपिधानं २ सारिणी च प्रणालिका॥२॥ यज्ञस्थानं यज्ञ
वाद २ स्तृष्णा धनपिशाचिका॥२॥२५॥ स्मृता बाल्वं गिरिर्वारुः २ स्कु

---

दिगंबरयोगिनः ५(१५) जलक्रीडायाः ४ शरपत्ररचनायाः १(१६) पं
चकल्याणघोटकस्य १ अश्वचारकस्य १(१७) अश्वगलोद्देशस्था
वर्तस्य १ अश्ववक्षःस्थावर्तस्य १(१८) पलाशपत्राणां शीर्षे बंधस्य १ म
दनोत्सवस्य २(१९) द्विशतग्राममध्यग्रामस्य १ चतुःशतग्राममध्यग्रा
मस्य १(२०) यात्राकाले सामवेदपाठस्य १ प्रासादशिखरस्थ शाला
याः १(२१) तुच्छस्य २ पेषणशिलायाः २ सौधस्य १ राजमार्गस्य २
(२२) कथकस्य २ भंडस्य २ मक्षिकायाः २ दंशस्य २(२३) देवोद्यान
स्य २ दीपावल्याः २ सुकुमारस्य २ विषमस्य २(२४) खड्गपिधानस्य
२ जलनिर्गममार्गस्य २ यज्ञस्थानस्य २ लोभस्य २(२५) इर्वारोः २(२६)

टिरिर्वारुशक्तिका॥२॥ नाराम्नस्तिमिषःसेदुः३ कौमारिका तुजालिका॥२॥२६॥ पुंजातुकः फलेल्लांकु२स्तृणता धनु२रिष्यते॥ केरातोदीर्घ हृक्षामाः३ सिंघाणं काचभाजनं॥२॥२७॥ दर्वदोदंडवादी२स्यात्स्तेनः शांकिकवर्णकः॥२॥ प्रारब्धिः करिबंध२स्स्यात्कष्टस्थानं तु वारकम्॥२॥२८॥ भोगावलीबंदिपाठः२सेतुःपूरणपिंडलो॥३॥ देवद्रोणी देवयात्रा२श्रूनाधोजिह्विका२मता॥२९॥ पालिःसमुत्थितश्मश्रु२र्मरुंडोज्वलल्लाटिका॥२॥ राका१ दृष्टरजाः कन्यापोटा१स्त्रीपुंसलक्षणा॥३०॥ महत्तरोग्रामकूटो२मर्म्मरो१ऽव्यक्तनिःस्वनः॥ शिवालयःपितृवनं२चिताकाष्ठमठीचितिः॥३१॥ कर्णवंशोभवेन्मंचः२श्रीग्रहः शकुनिप्रपा॥२॥ तांबूलदो वागुलिकः२सुरभिःफाल्गुनानुजः॥२॥३२॥ तांबूलरागोमसुर२स्तरुवारिः कृपाणकः॥२॥ स्वागतंकुशलप्रश्न२सामीचीवंदनोमता॥३३॥ समुद्गःसंपुटो२ज्ञेयो हयस्कंधो हयच्छदा॥२॥ पिंडारोमहिषीपाले२मसूरेचगभोलिकः॥२॥३४॥ काहलीतरुणी२मोक्ताछुरावुक्थितासुधा॥२॥ कांपिल्लिकारोचनिका२कालिकावस्करटिका॥२॥३५॥

---

स्फुटेः२ नाराम्नस्य ३ जालिकायाः २(२६) जीवनद्रवस्य २ धनुषः २ बलवत्पुरुषस्य ३ काचभाजनस्य २(२७) दंडवादिनः २ चोरस्य२ गजबंधनस्तंभस्य २ कष्टस्थानस्य २(२८) बंदिपाठस्य २सेतोः३ देवयात्रायाः२ उलूखलादिपंचभूनायाः२(२९) सम्मश्रुस्त्रियाः २उज्वभ्रूस्त्रियाः २ दृष्टरजः कन्यायाः १पुंसलक्षणायाः१(३०) महत्तरस्य २ अव्यक्तशब्दस्य १ श्मशानस्य२ चितायाः ३(३१) मंचस्य२ पक्षिणः पानीयशालायाः २ वसंतकालस्य २ तांबूलदातुः २(३२) तांबूलरागस्य २खड्गस्य २ कुशलप्रश्नस्य २ स्तुतेः २(३३) संपुटस्य २हयस्कंधस्य २ महिषीपालस्य २ बृहन्मसूरस्य २(३४) तरुण्याः२ लेपनद्रव्यस्य २रोचनिकायाः२ वृश्चिकायाः २(३५)

कालिका क्षीरकीटः २ स्याल्खंडपालस्तु खंडिकः ॥ २ ॥ पांशुरः पीठसर्पी २ स्याद्लुल्लो रोमशः २ स्मृतः ॥ ३६ ॥ पूगपात्रे फरुवकं २ कबंधोरुंड २ मुच्यते ॥ तूलिका स्यान्नवतिका २ स्यान्नमालस्य २ मुच्यते ॥ ३७ ॥ भाजने कमठं प्रोक्तं पुण्यश्लोको नलो २ मतः ॥ गौरवे मतिपत्तिः २ स्यान्हारिः पथिकसंहतिः ॥ २ ३८ ॥ यामकिन्यपि यामिस्त्री २ हाफिका च्चोपपुष्पिका ॥ २ ॥ वातपुत्रे विटधरो ३ निर्माल्यं निर्मलं २ मतं ॥ ३९ ॥ इंद्रासने मतागुंजा २ गुलुंचो गुच्छको २ मतः ॥ भोगावासो वासगृहं २ मेंठो हस्तिपकः २ स्मृतः ॥ ४० ॥ मायुः पलाग्निः पललं ३ ज्वरः स्यादजीर्णमंत्रं धमिरामयश्च ॥ ४ ॥ तृप्तिश्च सौहित्यसुदंतिका ३ स्यात्क्षुत्क्षारिका भोगपिशाचिका ३ च ॥ ४१ ॥ मोगो जलवरंटः २ स्यात्कणा कुंभीरमक्षिका ॥ २ ॥ वहलं वार्बटः पोत ३ स्तरालुश्चाहिपुत्रकः ॥ २ ४२ ॥ काहलस्तु महानादो २ मार्दगं पत्तनं २ विदुः ॥ स्याद्रित्रं नरिरथः २ पात्रपालस्तु लाधटः ॥ २ ॥ ४३ ॥ काकिनी पणतुर्यांशो १ ज्वलदंगारउल्मुकम् ॥ १ ॥ अयानं च स्वभावः २ स्यान्मंजिका वारसुंदरी ॥ २ ४४ ॥ नीलमणिर्मसारः २ स्याद्गुंजा पाठहिका २ मता ॥ भार्या पाणिगृहीती २ च दुकूलं

---

क्षीरकीटस्य २ मोदकस्य २ खंजनघोटकस्य २ बहुरोमयुक्तस्य २ (३६) पूगपात्रस्य २ कबंधस्य २ चित्रलेखिन्याः २ आलसस्य २ (३७) पात्रस्य २ नलराज्ञः २ गौरवस्य २ पथिकश्रेण्याः २ (३८) यामिकस्त्रियाः २ जृंभायाः २ महाधूर्त्तस्य ३ निर्माल्यस्य २ (३९) गांजेतिप्रसिद्धस्य २ गुलुंचस्य २ वासगृहस्य २ हस्तिपकस्य २ (४०) पित्तस्य ३ अंत्रस्य ४ तृप्तेः ३ क्षुधायाः ३ (४१) जलवसंतास्य ग्रणस्य २ कुंभारमक्षिकायाः २ पोतस्य ३ नौकाजलोत्सारकस्य २ (४२) वृहत्ढक्कायाः २ मृदंगस्य २ अरित्रस्य २ तुलाधटस्य २ (४३) पणान्तुर्याशस्य १ ज्वलदंगारस्य १ स्वभावस्य २ वेश्यायाः २ (४४) नीलमणेः २ गुंजायाः २ भार्यायाः २ (४५)

क्षौमं २ मुच्यते॥ ४५॥ ग्रंथस्यनिर्मितौशय्या १ वधूटी वधुटी जनी॥ २॥ बंदिचौरो माचलः २ स्यात्कुंभिलः संधिहारकः॥ २॥ ४६॥ अभ्रमु १ स्त्वभ्रनागस्य कुमुदस्य तु पिंगला॥ १॥ अनंगा १ वामनस्य स्यादंजन स्यांजनालि॥ १॥ ४७॥ कपिला पुंडरीकस्यानुपमा १ सुप्रतीकस्य॥ शोष स्यताम्रकर्णी १ च शुभ्रदंती १ सार्वभौमस्य ४८॥ सेवाचाटूक्तिरालोको २ मठो गंत्रीरथः २ स्मृतः॥ चिपिटो धान्यचमसः २ खानि कौलाजउलु षैः॥ ४९॥ अभ्यासो गुणनीयः २ स्यान्मादिः पत्रशिरा २ मता॥ भौतो देव लकः ख्यातः खेटकं वसुनंदके॥ २॥ ५०॥ पुरंदरा तु सुरला २ कावेरी चार्द्धजान्हवी॥ २॥ कौमुदः कार्तिको मासः २ सौभिकस्त्विंद्रजालि कः॥ २॥ ५१॥ प्रहेलकं वाचनकं २ वीक्षापन्नः सविस्मयः॥ २॥ कुटलं पटलं नीध्रं ३ वीथी गृहतटी २ मता॥ ५२॥ सर्ववेशी नटः प्रोक्तो २ मं दाक्षे तु नटांतिका॥ २॥ मृत्फली कुठिकः २ प्रोक्तः शाल्द्वरो वृष्टिभूः प्लवः ३॥ ५३॥ स्वेदः सिप्रस्तनुरस ३ स्त्वक्पुष्पं तु स्वंगंकुरः २॥ नवोढा नव वरिका २ दिक्करी नवयौवना॥ ५४॥ सौवर्चले च रुचकं २ हिंगुले रक्त पारदम्॥ २॥ रक्तोपलं गैरिके च २ पारदे सूतकं २ विदुः॥ ५५॥ साभूकः

---

पट्टवस्त्रस्य २ (४५) ग्रंथनिर्माणस्य १ नवीनस्नुषायाः २ बंदिचोरस्य २ संधिहारकस्य २ (४६) ऐरावतदिग्गजपत्न्याः १ कुमुददिग्गजपत्न्याः १ वामनदिग्गजस्त्रियः १ अंजनदिग्गजस्त्रियः १ (४७) पुंडरीकदिग्गज स्त्रियः १ सुप्रतीकदिग्गजस्त्रियः १ पुष्पदंतदिग्गजपत्न्याः १ सार्वभौम दिग्गजपत्न्याः १ (४८) सेवनस्य ३ शकटस्य २ चिपिटस्य २ लाजानां ३ (४९) अभ्यासस्य २ पत्रभंगस्य २ भूतसेवकस्य २ धनवृद्धिजीवकस्य २ (५०) गंगायाः २ कावेर्याः २ कार्तिकमासस्य २ इंद्रजालिकस्य २ (५१) महेलिकायाः २ विस्मितस्य २ समूहस्य ३ वीथ्याः २ (५२) नटस्य २ लज्जायाः २ कुष्ठारव्यौषधस्य २ भेकस्य ३ (५३) स्वेदस्य ३ रोमांचस्य २ नवोढायाः २ नवयौवनायाः ३ (५४) सौवर्चललवणस्य २ हिंगुलस्य २ गैरिकस्य २ पारदस्य २ (५५)

कंबलः १ख्यातईमालक्कंडुरोवणः॥३॥ कपटःपारिहार्यःस्या२दीर्ष्यालुःकुहनः२स्मृतः॥५६॥ऋणमोक्षेविगणनं२लग्नकेऋणमार्गणः॥२॥भिक्षाशित्वंतुपैभून्यं २मंडःपिच्छांधसस्तथा॥५७॥धातुकेतुःक्षितिकणःस्यादास्फालेझलज्झला॥१३॥नष्टाप्तिसूत्रेलोत्रंस्याद्याप्ययानंशिबीरथः२॥५८॥मल्लयात्रामाल्लवीस्या२न्निर्भर्त्सनमलक्कः॥२॥कौशलिकाप्राभृतक२मट्टकलासकं२विदुः॥५९॥स्वदोषाच्छादनंमक्ष२श्चूलीस्यान्मलकारिका॥२॥वाताश्वोभूमिपक्षःस्याद्वारुर्विजयकुंजरः॥२॥६०॥प्रभातेगोसर्गोसर्गो३वंजनीलेपकामिनी॥२॥उत्कटोगंडकुसमं२सिन्धुःसोमेधिकोमतः॥२॥६१॥वृषाकपिःशिखीकृष्मा३भस्मपार्धटमर्घटम्॥३॥उष्ट्रवाहीमीरथोध्युष्ट्रो२गंत्रीलघ्वीह्विवेशरा३॥६२॥कृकणःकृमिरुद्दिष्टः२कृशाक्लीटअन्यकारुका॥३॥भारवाहोभारिकःस्या२त्स्कंधचापोविहंगिका॥२॥६३॥उन्नतोअजगरः२प्रोक्तोह्विमुखवाहिरहीरणिः॥२॥पुरोटिःपुरसंस्कारे२हट्टीपुरतटी२मता॥६४॥मृणालिनीपुटकिनी२स्थासकोबुद्बुदो२भवेत्॥क

---

कंबलस्य२व्रणस्य३कटकस्य २ ईर्ष्यायुक्तस्य २(५६) ऋणमोक्षस्य२ लग्नकस्य २पैभून्यस्य २मंडस्य २(५७) धूलेः २आस्फालस्य२ चोरनीतद्रव्यस्यकिंचित्प्राप्तेः २शिबीरथस्य २(५८) मल्लयात्रायाः२ निर्भर्त्सनस्य २प्राभृतकस्य २ अट्टालिकायाः २(५९) स्वदोषाच्छादनस्य २ चुल्याः २ वाताश्वस्य २ विजयकुंजरस्य २(६०) प्रभातस्य३ लेपकामिन्याः२ संजातमदस्य हस्तिनः २छिद्रस्य २(६१) अग्नेः३ भस्मनः३ उष्ट्रयुक्तरथस्य २ लघुरथस्य ३(६२) कृमेः २ विष्ठायाः २ भारवाहस्य २ वंशादिनिर्मितशिक्याधानस्य २(६३) अजगरसर्पस्य २द्विमुखसर्पस्य २पुरसंस्कारस्य २ क्षुद्रहट्टस्य२(६४) पुटकिन्याः २ बुद्बुदस्य २(६५)

लाची तु प्रकोष्ठः स्या २द्धस्तपुच्छस्तकन्युषं॥२।६५॥उत्साहः सूत्रं तंतुः स्याद्वपिंडीरो नीरसः २स्मृतः॥ हरिणह्ट्दयोष्मीरुः २संदेशोक्तिस्तु वाचकं॥२।६६॥शालाजिरो बर्द्धमानं २ कुसीदं तु कलांबिका॥२॥ चर्वातलप्रहारः २स्यात्ककरं २मुद्गरं विदुः॥६७॥गोष्ठागारेऽपि गंजः २स्याच्छिता वेश्मनि दावंदं॥२॥ मानग्रंथिर्भवेन्मंतुर्निष्कुटो गृहवाटिका॥२।६८॥शैलस्य कटके दंत २स्तद्दिनं प्रतिवासरे॥२॥ सूत्रमेवं सूत्रतंतुः २कृशराऽपि तिलौदने॥२।६९॥स्यादासवोपि कुरसः २सरकं मद्यभाजने॥२॥निश्चुक्कणं दंतशाणं २ गोग्रंथिः शकृग्गोमये॥२।७०॥अष्टापदं नयपीठी २नयस्तु जतुपुत्रकः॥२॥ चिंदुतंत्रो भवेदक्षः पांचाली शालिभृंखला॥२।७१॥ प्रस्तारस्तलिनं शय्या ३रोमगुच्छः प्रकीर्णकं॥२॥शिवा लोपाशिको ज्ञेया सरमा तुंबरी शुनी॥३।७२॥ पादांगदी हंसकः २स्यात्प्रतिकर्म प्रसाधनं॥२॥ कर्णपाली तु कर्णांदू २रंगुलीयकमूर्मिका॥२।७३॥ खातभूः प्रतिकूपः २स्याल्लंभास्याह्वाटभृंखला॥२॥ कंधरा तोरणं कंठी ३ सूत्राली गलमेखला॥२।७४॥शासनं धर्मकीलः २स्या

---

विस्तृतकरस्य २ हस्तपुच्छस्य २(६५) उत्साहस्य २ रसशून्यस्य २ भयशीलस्य २ संदेशवाक्यस्य २(६६) शरावस्य २ कुसीदस्य २ तलप्रहारस्य २ मुद्गरस्य २(६७) गोष्ठागारस्य २ मंत्रणागृहस्य २ अपराधस्य २ गृहवाटिकायाः २(६८) शैलनितंबस्य २ प्रतिवासरस्य २ सूत्रस्य २ सतिलौदनस्य २(६९) मदिराभेदस्य २ मद्यभाजनस्य २ दंतशाणस्य २ शकृग्गोमयस्य २(७०) शारिफलस्य २ गुटिकायाः २ पाशकस्य २ शारिभृंखलायाः २(७१) शय्यायाः ३ चामरस्य २ भृगाल्याः २ कुक्कुरस्त्रियः ३ नूपुरस्य २(७२) वेषस्य २ ताटंकस्य २ अंगुलीयकस्य २(७३) परिखायाः २ वाटभृंखलायाः २ कंठ्याः ३ गलसूत्रस्य २ राजशासनस्य २(७५)

त्सकृतंभूद्रशासनं॥२॥पट्टोलिकाकूसकीला२सिंदुरंरक्तशासनं २।७५॥रासस्तगोदुह्यंक्रीडा२गीतिःपारावती२तथा॥वेणुर्यवफलोवंशो३नवीनेनवकालिका॥२।७६॥मुखघंटाहुलहुली२नलाची नलपट्टिका॥२॥नीपोधराकदंबःस्याद्वीरभद्रस्तवीरणं॥२।७७॥खड्डदस्तवृहत्काशं२कोशांगमित्कटं२विदुः॥गंडीरस्तसमंठःस्याद्धीबेरं वारि वालकं॥२।७८॥शितोत्पलंगंधसोमं२हरिमंथोतिमुक्तकः॥२॥कर्कारुकस्तकालिंगः२शृंगाटोजलकंटकः॥२॥७९॥हिलमोचीजलब्रह्मी२वायसीकाकमाचिका२॥पुंनागःकेसरश्चैव२चांपेयोनागकेसरः२।८०॥स्याद्दोलिकाचहिंदोला२स्यालावण्यंलवणं२मतं॥स्तरवाशोराजतिमिषः२कटुकोराजसर्षपः२।८१॥सितमाषोराजमाषो२मसूरो-व्रीहिकांचनः२॥मधुक्षीरस्तखर्जूरः२शालःशंकुतरु२र्मतः॥८२॥मुस्तोराजकशेरुः२स्याद्रोहिणश्चंदनद्रुमः२॥काकमद्गुर्जलरंकः२कोयष्टिर्यलकुक्कुभः२॥८३॥वर्तिकाविष्णुलिंगी२स्याद्दूनाखुःशशकः२स्मृतः॥ताम्रकृमिरिंद्रगोपो२गृहगोधागृहा

---

भूद्रशासनस्य २ पट्टाख्यपत्रस्य २ रक्तशासनस्य २ (७५) गोपक्रीडायाः २ गोपशिशुगीतस्य २ वंशविशेषस्य ३ नवीनस्य २ (७६) मुखवाद्यस्य २ नलिपट्टिकायाः २ धराकदंबस्य २ वीरणस्य २ (७७) बृहत्काशस्य २ गोशांगस्य २ गंडीरस्य २ ह्रीबेरस्य २ (७८) सीतोत्पलस्य २ अतिमुक्तस्य २ कर्कारुकस्य २ शृंगाटस्य २ (७९) हिलमोच्याः २ काकमाच्याः २ पुन्नागस्य २ नागकेसरस्य २ (८०) हिंदोलिकायाः २ सौंदर्यस्य २ स्तरवाशकस्य २ राजसर्षपस्य २ (८१) सितमाषस्य २ क्षुद्रमसूरस्य २ खर्जूरस्य २ सालवृक्षस्य २ (८२) मुस्तस्य २ रक्तचंदनस्य २ जलरंकस्य २ कारंडवपक्षिणः २ (८३) वर्तिकायाः २ शशकस्य २ ताम्रकृमेः २ (८४)

लिका।२।८४।। दिवांधोहरिनेत्रः२स्याद्रोनंदीलक्ष्मणा२मता।।
कुरंकुरःपुष्कराह्वो२वातुलिस्तरुतूलिका।२।८५।। कोलपुच्छस्तकं
कःस्याद्गर्गाटोयोगनाविकः।२।।ग्राम्यमद्गुरिकाशृंगी२राजशृंगस्तुमु
द्गुरः।।२।८६।।पंकग्राहस्तमकरः२शफरःश्वेतकोलकः२।।चिंगट
स्तमहाशल्कः२पोताधानंजलांडकं२।८७।। फलकीतुचित्रफली२
मत्स्यराजस्तरोहितः२।।काकोचिकस्तकाकोची२वकाचीवकचिं
चिका।।२।८८।। कवयीक्रकचपृष्ठी२खलेशस्तरवलेशयः२।।इल्लि
शोराजशफर२इंचाकोजलवृश्चिकः२।८९।।दंडपालोर्द्धशफरः२
कंकत्रोटोजलव्यथः२।।लघुगर्गस्त्रिकंटःस्यात्सितांकोवालुकाग
डः।।२।९०।। कनकपलःकुरुबिस्तः२करिकवलोविधानं२स्यात्
।।ब्राह्मीतुपंकगडकः२शकुलोदंडपालकः२।९१।।निचोलकंनि
चुलकं२मंदामणिरलिंजरः।।२।।वेदिःस्थंडिलसितकंपन्याटो-
निष्कुठः२स्मृतः।।लोपासिकारिंविरिवरीस्यात्पल्याटोनिष्कुटः२स्मृ
तः।।अंकेघेयांकमंगानि२स्मृतमुत्तानमुत्कटं२।९३।।स्यान्मार्जिता
रसाला२चबुक्कारःसिंहनादकः२।।कर्णगूथंकर्णमलं२सिंहाणना

---

मुशल्याः२(८४) पेचकस्य २ सारसयोषितः २ सारसस्य २ वातुलेः २
(८५) कंकपक्षिणः २ गर्गाटमत्स्यस्य २ शृंग्याः २ मुद्गरस्य २(८६)म
करस्य २ शफरस्य २ चिंगटस्य २ रोहितादिशिशोः २(८७) फलक्याः
२ रोहितस्य २ काकोचिकस्य २ वकचिंचिकायाः २(८८) क्रकचीमत्स्य
स्य २ खलेशयस्य २ इल्लिशस्य २ जलवृश्चिकस्य २(८९) अर्धशफ
रस्य २ जलव्यथस्य २ त्रिकंटस्य २ वालुकागडस्य २(९०) कनकप
लस्य २ करिकवलस्य २ पंकगडकस्य २ शकुलस्य २(९१) निचो
लस्य २ अलिंजरस्य २ वेद्याः २ उपवनस्य २(९२) रिंगरिंविरिकायाः
२ पल्याटस्य २ अंगस्य २ उत्तानशयस्य २(९३) नक्रस्य २ सिंह
नादस्य २ कर्णमलस्य २(९४)

सिकामलं२।९४॥दंतमलंपुष्पिका२स्यात्कुलुकंरसनामलं।२॥कारंधमीधातुवादी२दरिद्रोदुर्विधः२स्मृतः॥९५॥स्यान्मंत्रगंडकोविद्या२स्पक्षद्वारंरवडक्किका।२॥आर्द्रवस्त्रंजलार्द्रःस्याद्दोषश्चादीनवो२मतः॥९६॥योजनंमार्गधेनुः२स्यान्नल्वःकिष्कुचतुःशतम्२॥चोलकोवाणवारः२स्यात्कुर्पासस्त्वर्धचोलकः२।९७॥नागोदरमुरस्त्राणं२जंघात्राणंतुमंक्षणं२॥स्यात्प्रासादोदेवकुलं२तत्तुचैत्यं२विनासुरवं॥९८॥तृणपूलीतुचंचा२स्याद्यथार्थंतुयथातथ्यं२॥आघातनंवधस्थानं२कारावंधनवेश्मनि।२।९९॥स्कंधाग्निःस्थूलकाष्ठाग्नि२स्तृणाग्निस्तुभवेत्समः२॥इंगलस्तुकरीषाग्नि२र्ज्वराग्निस्त्वाधिमन्यवः२।२००॥श्वसुरःस्वामिजनकः२साधुधीर्वरवत्सला२॥भगसार्थस्तथाविन्द्रो२हेलाबुकोऽश्वविक्रयी२।२०१॥गृहवित्तोगृहपति२स्तुंबीपुष्पंलतांबुजं२॥लोहिकारवरसोनिःस्यान्निलिंपस्त्रिदशः२स्मृतः२॥गंडूपदीभूलता२स्यान्मंडरीघुर्घुरी२मता॥स्वच्छत्यंगुलिसंदेशो२लंघनंचापतर्पणं२॥३॥गजढक्कामदाम्नातः२भृंगारोगजमंडनं२॥प्रतिमोरणारंकः२स्यात्लंटकः

---

नासिकामलस्य २(९४) दंतमलस्य २ जिह्वामलस्य २ स्वर्णकारस्य २ दरिद्रस्य २(९५) विद्यायाः २ पक्षद्वारस्य २ आर्द्रवस्त्रस्य २ दोषस्य २ (९६) योजनस्य २ नल्वस्य २ कवचस्य २ कूर्पासस्य २(९७) उरस्त्राणस्य २ जंघात्राणस्य २ देवप्रासादस्य २ यज्ञस्थानभेदस्य २(९८) तृणपूल्याः २ यथार्थस्य २ वधस्थानस्य २ बंधनवेश्मनः २(९९) काष्ठाग्नेः २ तृणाग्नेः २ करीषाऽग्नेः २ ज्वराग्नेः २(२००) श्वशुरस्य २ श्वश्र्वाः २ कुटिलस्य २ अश्वविक्रयिणः २(२०१) गृहपतेः २ तुंबीपुष्पस्य २ लोहपुष्पस्य २ त्रिदशस्य २(२०२) भूलतायाः २ घुर्घुर्याः २ अंगुलिध्वनेः २ लंघनस्य २(३) गजढक्कायाः २ गजशृंगारस्य २ रणकालरस्य २(४)

कदरः भृणिः ३॥४॥ वीचीजललताभंडिः ३ फेणाग्रं बुद्बुदं २ बिंदुः॥ जंबालो जलकल्कः २ स्यादारणिः कुलहंडकः २॥५॥ विनाकृतं विरहितं २ गंडूषो मुखपूरणे २॥ काष्ठमल्लः शवयानं २ कषाय स्तुवरो रसः॥६॥ पर्वावधिः परग्रंथिः २ पिंजोला पत्रकाहला॥ गोहलं छगलं गोविट् ३ परियो द्वारकंटकः २॥७॥ कर्करं चूर्णखंडे २ स्यात् कर्कसारं करंभकं २॥ स्पर्धायामपि संहर्षः २ कठोरं कर्करं २ चिदुः ८॥ वंदी कवरकी २ माहुरासंदी लघुखट्टिका॥२॥ घटराजः स्मृतः कुंभो २ गर्गरी कलशी मता॥९॥ विड्वरं जन्यमुत्पातं २ निर्घाते व्योममुद्गरः २ पर्यंतिका गुणभ्रंशो २ गांगेष्टी कटशर्करा॥१०॥ उल्का कुल्का गुंजा २ स्यात् कुलक्कस्तालमर्दलः २॥ सूत्रकोणो डमरुकं २ सूत्रवीणा च लाबुकी॥११॥ मेलानंदो मसिमणि २ र्लेखनी वर्णतूलिका॥२॥ धातूपलः कठिनिका २ मेलापथ्यांजनं मसिः ३॥१२॥ तर्कुटी सूत्रला तर्कु ३ र्झल्लोलस्तर्कुलासकः २॥ वर्त्तुला तर्कुपाटी स्या २ त्संजिका तूलनालिका॥२॥१३॥ निर्वेष्टनं नाडिचीरं द्रघ्वेष्टका स्यात्प्रावकं॥ दोला प्रेंखा पुमान्प्रेंखो ३ वारासनं वास्सदनम्॥१४॥ पिष्टपर्वितु

---

अंकुशस्य २(४) तरंगस्य ३ फेनाग्रस्य २ जलकल्कस्य २ आरणेः २(५) विरहितस्य २ गंडूषस्य २ शवयानस्य २ कषायस्य २(६) अंगुलिपर्वणः २ पिंजोलायाः २ गोमयस्य ३ द्वारलगुडस्य २(७) कर्करस्य २ दधिसक्तोः २ स्पर्धायाः २ कठोरस्य २(८) कवर्याः २ लघुखट्वायाः २ कुंभस्य २ कलश्याः २(९) उत्पातस्य २ निर्घातस्य २ गुणभ्रंशस्य २ कटशर्करायाः २(१०) उल्कान्नेः २ करताल्याः २ डमरुकस्य २ सूत्रवीणायाः २(११) मसिमणेः २ कलमस्य २ धातूपलस्य २ मसेः ३(१२) तर्कुटूयाः ३ तर्कुलासकस्य २ तर्कुपीठ्याः २ तूलनलिकायाः २(१३) निर्वेष्टनस्य २ द्रुघ्वेष्टकायाः २ दोलायाः २ जलस्थापितमंचस्य २(१४)

चमस २श्चित्रापूपश्चरुग्रणः २॥ म्लेंछितंपरभाषायां २ लुंटिकान्या प्रसारिणी॥२॥१५॥शूकापूट्टस्तृणमणि २श्चात्रगंडःपदार्घ्यविन्॥४॥कोशकारःकाष्ठतंतु २र्घुणःस्यात्काष्ठलेखकः॥२॥१६॥विषशृंगीभंगलारो २वरालस्तृणषट्पदः॥२॥तुटुमोरंध्रबभ्रुः२स्याद्दीनालिंगालिका२स्मृता॥१७॥विदारुक्रकचपादो२द्रुणश्चालिश्चवृश्चिकः॥३॥पद्माक्षंपद्मबीजं२चकर्णिकाबीजमातृका॥२१८॥रंगमालाभवेल्लाक्षा२धीलटिर्दुहितामता॥चाटल्लोलश्चकुल्लोलो२जेंगदोदोहदः२स्मृतः॥१९॥धौतांजलीधौतबली २ कज्जकंदुग्धपाचनम् २॥चित्रोक्तिःपुष्पशकटी२चासेचनमतृप्तिकृत्॥२॥२०॥कालरात्रिर्भीमरथी२अस्वाध्यायोनिराकृतिः २॥ब्रह्मवादःश्रुतादानं२धिश्वकद्रुररवेटिकः।१॥२१॥हिंसालुकः१रवादुकःश्वायोगितो:लर्कं २इष्यते॥द्रगडस्तूर्यगंडः२स्यादादर्शोमुकुरः२स्मृतः॥२२॥राहूत्स्रष्टोरसोनः२स्याद्दुंगरीकोलनासिका॥२॥मयटःस्तृणहर्म्यः२स्यात्कुत्रंगोमंचमंडपः॥२॥२३॥श्रवङ्गःपणग्रंथि२श्चितिकाकटिशृंखला॥२॥विशारदःप्रसिद्धः२स्यात्श्रीर्लक्ष्मीरिंदिरा३मता॥२४॥

॥इतिपादावधिः॥

---

यज्ञपात्रविशेषस्य २ चित्रपिष्टकस्य २ अपशब्दस्य २ लुंटिकायाः २(२१५) तृणमणेः २ मदार्घवेत्तुः २ कोशकृमेः २ घुणस्य २(१६) विषशृंगिनः २ तृणषट्पदस्य २ रंध्रबभ्रोः २ दीनायाः२(१७) क्रकचपादस्य २ वृश्चिकस्य ३ पद्मबीजस्य २ पद्मकोशस्य २(१८) लाक्षायाः २ दुहितुः २ सुचंचलस्य २ गर्भिण्यभिलाषस्य २(१९) धौतांजल्याः २ दुग्धपाचनस्य २ क्षुद्रशकटस्य २ अतृप्तिकृतः २(२०) कालरात्र्याः२ अस्वाध्यायस्य २ ब्रह्मवादस्य २ मृगयाकुशलश्वनः २(२१) हिंसालुकश्वनः २ उन्मत्तश्वनः २ सूर्यविशेषस्य २ आदर्शस्य २(२२) लशुनस्य २ कोलनासिकायाः २ तृणयुक्तहर्म्यस्य २ मत्स्यरक्षार्थकुटीरस्य २(२३) पणग्रंथेः २ कटिशृंखलायाः २ प्रसिद्धस्य २ लक्ष्म्याः २(२२४)

प्राक्शालावृकशब्दादर्धैः पादैरतःपरंशब्दाः॥ नानार्थाअपिशब्देगज
शब्दात्प्रभृतिविज्ञेयाः॥२२५॥ ॥ ॥ ॥ ॥

## अथनानार्थः

क्षीरदारोगुडक्षोदेगुडेमधुनिचेष्यते॥ कूपीटपानमिच्छंतिकेनिपाते
चवारिधौ॥२६॥ रसालारसनायांस्यान्मथितेदध्निपाणिना॥ पांचलोहे
श्रुतिकटःप्रायश्चित्तेसरीसृपे॥२७॥ विटोद्रोलवणेषिड्गे मूषिकेरवदिरे
पिच॥ वितंडाकरवीर्यांचदर्विवादप्रभेदयोः॥२८॥ कारंडवेकरंडःस्यान्म
धुकोषेदलादके॥ रवटःश्लेष्मण्यंधकूपेप्रहारांतरटंकयोः॥२९॥ पिच्छा
पूगच्छटाकोषेचोलिकाफणिलालयोः॥ पिच्छलोस्फोटिकावात्यारामात्रा
तारवुपाशवः॥३०॥ धरांकुरोवायुफलेनासीराशीकरेपिच॥ कोट्टारोना
गरेकूपेपुष्करिण्यांचपाटके॥३१॥ नागांजनानागयष्टिःकरिसुंदरिकाक्व
चित्॥ पूत्यंडःपूतिकीटेचगंधकीटेचदृश्यते॥३२॥ कटुकायांकंचतटेक
थिताशष्कुलादनी॥ क्रौंचादनस्कंधेचुल्यांचिंचोटकमृणालयोः॥३३॥
संतानिकाक्षीरसरेतथामर्कटजालके॥ खड्गधेनुफलेफेनेपराजस्तैल
यंत्रके॥३४॥ भालांकोलोहितेदृष्टःकरपत्रेचकच्छपे॥ संकरोग्निचटत्का
रेसंमार्जन्यपसारिते॥३५॥ गोधाकलंविकादंतिवधूश्चुचकटंभरा॥ पं
कारःशैवलेसेतौसोपानेजलकुब्जके॥३६॥ पृष्ठभृंगीतिशब्दोयंदंश
भीरौपृथूदरे॥ मेघपुष्पंतुनादेयेपिंडाभ्रेसलिलेविदुः॥३७॥ पित्तज्व
रेकुलालस्यपवनेकूटपालकः॥ स्तनवृंतेपिप्पलकंतथासीवनसू
त्रके॥३८॥ पाटलिकान्यमर्मज्ञेच्छात्रेस्यात्कालदर्शिनि॥ जिह्वापोद्य
षदंशेन्चस्याद्दिंद्रमहकर्मणि॥३९॥ लाभेकामगुणोरूपेआमिषाख्या
तुभोजने॥ छायापथेन्चदूर्वायांहरितालीध्वनिर्मतिः॥४०॥ मालुधान
श्चित्रसर्पेमहापद्मेपिदृश्यते॥ उन्मत्तेक्षपणेनर्थकरेकार्यपुटध्वनिः
॥४१॥ सांघातिकांविदुर्युग्मेकुट्टन्यांजलकंटके॥ शराहतेचसर्पेचप्र
चलाकंप्रचक्षते॥४२॥ चंद्रिकायामक्षधूलोरक्तांगेहरिचंदनं॥ स्त्री
रत्नेचहरिद्रायांलाक्षायां[illegible]वर्णिनी॥४३॥ कृकलासेचित्रकालेतृ

णगोधाध्वनिर्विदुः॥ डिंबंभयेच कललेफुप्फुसेचप्रचक्षते॥४४॥ धुंधुमारःशक्रगोपेग्रहधूमेगृहालिके॥ निस्तकपर्वाहिलमोचागुडूचीमधुयष्टिषु॥४५॥ जलबिल्वः कर्कटके पंचांगेजलवल्कले॥ चोलकीनागरंगेचकरीरेकिक्षुपर्वणि॥४६॥ कुलालचक्रेवाहनेदंडारःशरयंत्रके॥ दिग्जयेवरयात्रायां हुंडयात्रांविदुर्बुधाः॥४७॥ उद्रेदासीसुतेचैवदासेरकइतिस्मृतः॥ जलगुल्मोजलावर्तेकच्छपेजलचत्वरे॥४८॥ काहलावेणुवीणादिध्वनिर्नानाध्वनिर्विदुः॥ ध्योंयेकारुंडिकायांचजाहकध्वनिरिष्यते॥४९॥ विद्यादुत्कलिकाशब्दमुत्कंठावीचिवाचकं॥ दृष्टिविषेसूचकेचहिर्जिह्वःपरिकीर्तितः॥५०॥ मदमत्ताविदग्धस्त्रीनर्तकीषुचवाणिनी॥ रोमावलीमेघमालाकरटीषुचकालिका॥५१॥ मंजुलोमधुरेकुंजेजलरंकेजलांचले॥ अनुकंप्यस्तास्वीस्यात्तपस्वीचधृतव्रतः॥५२॥ ॥इतिनानार्थोर्धश्लोकावधिः॥ ॥शालावृकोकपिश्वानौनिष्ठुरःकठिनेत्रपे॥ छर्दनोलंबुषेनिंबेव्युष्टंकल्येतथोषिते॥५३॥ इक्षौकरीरेकोपांगेव्रणचिन्हेघुणेकिणः॥ नर्मठंचंचुकेपिंगेछेकःषडंघ्रिवक्रयोः॥५४॥ धाराटश्चातकेवाहेलंजःस्यात्पंगुकच्छयोः॥ नर्मटःखर्परेसूर्येगोकीलोमुशलेहले॥५५॥ भुंडिरीवारुकूष्मांडोफाणिर्गुडकलंबयोः॥ तंडकःखंजनेफेनेलक्षाशिन्यांखगांतरे॥५६॥ गजेपिनागमातंगौविशेषस्तिलकेपिच॥ निष्पारःसूर्यवातेपिसूत्रकंठोद्विजेपिच॥५७॥ विदुष्यतिस्मृतोवेधाःपुरंदेहेपिदृश्यते॥ स्वरेपिकंठआख्यातःशरत्संवत्सरेपिच॥५८॥ लाक्षापिजतुकाप्रोक्तालग्नाचार्येपिहिंडिकः॥ नौसेचनेपिवारुंडःपाशालिंदेपिपंकिलः॥५९॥ कुचोगीष्पतिपुत्रेपिकुंदंपिभ्रमरोवदो॥ भांडंभूषणमात्रेपिरुधिरंकुंकुमेपिच॥६०॥ गोमेदकेपिगोलः कटाहोनिरयेपिच॥ मरीचेपिभवेत्कृष्णाःभूनागंगुपिकाभवेत्॥६१॥ शस्त्यामपिखड्गधेनुर्निस्त्रिंशोऽकरुणेपिच॥ स्कंधावारेऽपिकटकोबिंदुस्रुविदुरेपिच॥६२॥ जलसूचिर्जलोकापि

वेश्यायामपि पिंगल्ला॥ अर्हि रप्युदगावर्तो निशाख्यापि स्वनिस्निकः
६३॥ भ्रमरः कामुकेपि स्यादंगारोपि च्चार्थकिं॥ मह्लल्येपि नीर्थः स्या
द्भोजनेपि नर्थान्हिकं॥ ६४॥ वालुश्चामरदंडेपि नादपीठेपि पादुकः॥
गोदंतो हरितालेपि वार्ता रश्मिश्च केपि च॥ ६५॥ आधारे प्याश्रयः आंक्तो
गजसंघेप्यवग्रहः॥ कथितामाजटायांचमार्गणोपि मृगः कांचन॥ ६६
॥ मूषिकापि भवेत्तूना जटाटंको हरेपि च॥ अश्वमक्षुनेपि फाटं मृद्धां
डे उर्वरिका भवेत्॥ ६७॥ अंगसादेपि सदनं वनदानेपि झिंझिमः॥
दंतमांसेपि वेलास्याच्छुल्कं नारीधनेपि च॥ ६८॥ निंबेपि हिंगुनिर्यो
सोमेला नंदेपि वार्दलं॥ लेखन्यां फर्णिकापि स्यात्कटिन्यामपि व
र्णिका॥ ६९॥ पटलेपि कासमदौ दिष्टं दैवेपि कीर्तितं॥ दाडिमेपि च
हिंडीरं वंशो वेणौ कुलेपि च॥ २७०॥ ॥ इति नानार्थः॥ ॥
काव्यादीनामनंतत्वाच्छब्दादीनां विशेषतः॥ कः कदा केन किं दृष्ट
मिति को वेदितुं क्षमः॥ ७१॥ अतः शब्दः क्व दृष्टोयमर्थतश्चापि कीदृशः॥
इति काव्यमलीकं स्यान्मात्सर्यमलिनात्मनां॥ ७२॥ शब्दार्णवे उत्पलिनी
संसारावर्त इत्यपि॥ कोषा वाचस्पतिव्याडिविक्रमादित्यनिर्मिताः॥ ७३॥ आ
दाय सारमेतेषामन्येषांच विशेषतः॥ हारावली निर्मितेयं मया द्वादशव
त्सरैः॥ ७४॥ उपास्य सर्वज्ञमनंतमीशं भूत्वा निधिः श्रीधृतिसिंहवाचां॥
हारावली द्वादशमाससमानैर्विनिर्मितेयं पुरुषोत्तमेन॥ ७५॥ नानाका
व्यपुराणनाटककथाकोशेतिहासस्मृति ज्योतिःशास्त्रगजाश्वमानव
भिषक्कोषान्प्रयत्नादिकं॥ दृष्ट्वान्यानिच शाब्दिकैः सह कृता हारावली
यत्नतः कर्तव्योत्र न संशयः सुमनसः शब्दार्थलिंगेष्वपि॥ ७६॥ सुधिया
जनमेजयेन यस्मा धृतिसिंहेन समं निरूपितेयम्॥ विदितो बहुदृश्व
भिः कवींद्रैर्भुवि कोषानुमतः श्रमो मदीयः॥ ७७॥ हित्वा महाशाब्दिक
ताभिमानं मात्सर्यमन्यत्र सुदुर्निधाय॥ हारावलीं यः प्रकरोति कंठे
विदग्धगोष्ठीषु परं सभाति॥ ७८॥ ॥२७८॥ ॥ इति श्रीमहाम
हापाध्यायपुरुषोत्तमदेवप्रणीता हारावली पर्यवसिता॥ समाप्ता-